॥ श्रीः ॥

काशी-संस्कृत-सीरिज-ग्रन्थमाला

८०

( व्याकरणविभागे (१०) दशमं पुष्पम् )

५ म

॥ श्रीः ॥

# पाणिनिव्याकरणे वादरत्नम्

पं० श्रीसूर्यनारायणशुक्लविरचितम्

( प्रथमो भागः )

प्रकाशकः

जयकृष्णदास-हरिदास गुप्तः

चौखम्बा संस्कृत सीरिज आफिस,

बनारस सिटी।

( द्वितीयं संस्करणम् )

[ सर्वेऽधिकाराः प्रकाशकाधीनाः ]

। ते चांगलराज्य

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

# सिद्धान्तकौमुदी-बालमनोरमा

वर्तमान विकट परिस्थिति में कागज का दुष्प्राप्य होने से सिद्धान्तकौमुदी-बालमनोरमा का कोई भी उपयुक्त संस्करण प्राप्त नहीं हो रहा था जिससे विद्यार्थी व अध्यापक दोनों को कठिनाई दिन दिन बढ़ती चली जारही थी। परमात्माकी असीम कृपा से हमारा भगीरथ प्रयत्न सफल हो रहा है। कारकान्त प्रथम भाग ५)
द्विरुक्तान्त द्वितीय भाग ५) अवशिष्ट भाग छप रहे हैं

# सिद्धान्तकौमुदी जेबी-गुटका

## सूत्रसूची-धातुसूची-सूत्रांक-वार्तिकांक सहित

सिद्धान्तकौमुदीका ऐसा सुन्दर जेबी गुटका का मनोहर संस्करण यह प्रथम बार ही छपा है। प्रति दिन सिद्धान्त कौमुदी की आवृत्ति करना विद्यार्थियोंके लिये आवश्यक है। सुबह-शाम घूमते-फिरते समय तथा परदेश-यात्रा करते समय विद्यार्थियोंका बहुत ही समय व्यर्थमें व्यतीत होजाता है। अब जहाँ कहीं जाना हो इस संस्करण को जेब में रख लीजिये और जब चाहें सिद्धान्तकौमुदी की आवृत्ति किजीये। ३)

# लघुशब्देन्दुकला

## [ लघुशब्देन्दुशेखर-प्रश्नोत्तरी ]

इसमें परीक्षामें आने योग्य सभी प्रश्नोंके उत्तर ऐसे सरल तथा निर्दुष्ट परिष्कारों से युक्त लिखे गये हैं कि अभ्यास करलेने पर विद्यार्थी परीक्षामें पूरी सफलता प्राप्त कर लेगें तथा ग्रन्थ लगाने में भी विद्यार्थीको अत्यधिक सहायता मिलेगी ऐसा प्रशंसनीय संस्करण यह प्रथम बार ही प्रकाशित हुआ है। १।)

# परमलघुकला

## ( परमलघुमञ्जूषाप्रश्नोत्तरी )

प्रस्तुत संस्करण में परीक्षा में आने योग्य सभी प्रश्नों के उत्तर ऐसे सरल तथा निर्दुष्ट परिष्कारों से युक्त लिख दिये गये हैं कि-"एक पन्थ दो काज" याने ग्रन्थ लगाने में भी इस से आपको अत्यधिक सहायता पहुँचेगी और कण्ठस्थ कर लेनेपर परीक्षा में अधिक से अधिक नम्बर भी पासकेगें। १)

# मनोरमाशब्दरत्नप्रश्नोत्तरी

इसमें हर एक प्रश्नका उत्तर इस तरह लिखा गया है कि अभ्यास करलेने पर [illegible] परीक्षा में पूरी सफलता प्राप्त कर लेंगे तथा ग्रन्थाशय का भी पूरा [illegible]।
प्रथम खण्ड ॥=) द्वि० तृ० खण्ड ।॥=)

---

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

[illegible] संस्कृत पुस्तकालय, बनारस।

॥ श्रीः ॥

-॥ काशी-संस्कृत-सीरिज-ग्रन्थमाला ॥-

८०



( व्याकरणविभागे (१०) दशमं पुष्पम् )

# पाणिनिव्याकरणे वादरत्नम्


न्यायव्याकरणाचार्यमीमांसकशिरोमणिना

पण्डित श्रीसूर्यनारायणशुक्लेन विरचितम् ।


[ प्रथमो भागः ]


ग्रन्थकर्तृसूनुन्यायव्याकरणसाहित्याचार्यशिक्षाशास्त्रि-

काशीस्थसंन्यासिसंस्कृतमहाविद्यालयाध्यापक-

पण्डित श्रीरामगोविन्दशुक्लेन सम्पादितम् ।



प्रकाशकः

जयकृष्णदास हरिदास गुप्तः,

चौखम्बा संस्कृत सीरिज आफिस

विद्याविलास प्रेस, बनारस ।





सं० २००५ ] मूल्य २॥) 4/-



[ सर्वेऽधिकाराः प्रकाशकाधीनाः ]

ते चांगलराज

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

THE

KASHI SANSKRIT SERIES

80.

( Vyākaraṇa Section, No. 10 )

# PĀṆINĪ VYĀKARAṆA VĀDARATNA

BY

NYĀYAIVYĀKARAṆĀCHĀRYA MĪMĀNSAKA SĪROMAṆĪ

PANDIT S'RĪ SŪRYA NĀRĀYAṆA S'ŪKLA

PROFESSOR, GOVT. SANS. COLLEGE, BANARAS.

( Part 1 )

Edited by

NYĀYA VYĀKARAṆA SĀHITYĀCHĀRYA SIKS'HĀ S'ĀSTRĪ

Pandit S'rī Rāmagovinda S'ūkla.

BANARAS

JAYA KRISHNA DĀS HARIDĀS GUPTA

The Chowkhamba Sanskrit Series Office,

Vidya Vilas Press,

1949

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

# किञ्चिद्वक्तव्यम्

विदितमेवात्रभवतां भवतां महाभाष्यरसिकानां यत् भारतीयसूत्रभाष्येषु यानि भाष्याणि सन्ति तत्र सर्वेषां भाष्याणां सूत्रानुगणं व्याख्यानं भवतीति, किन्तु पाणिनीयसूत्रेषु भाष्यं विदधानः भगवान् पतञ्जलिः सूत्रमपि अविगणय्य तत्रापि युक्तायुक्तत्वं सम्यक् विवेचितवान्। तत्र न्यासप्रणाली–अर्थप्रणालीभेदेन द्वौ प्रणाल्यौ स्तः। तत्र न्यासप्रणालीमादायानेके निबन्धा निबद्धा एवमर्थ (परिस्कार) प्रणालीमपि। एषु प्रबन्धेषु सर्वेषां विषयाणां नास्ति तथा सन्निवेशः यथा विद्वज्जनमोहनायालं स्यात्। अतो वाराणसेय राजकीयमहाविद्यालयन्यायाध्यापकैः, अखिलभारतीय पण्डितपरिषदः संस्थापकैः न्यायव्याकरणसाहित्याचार्यैः मीमांसकशिरोमणिभिरस्मत्तातपादैः श्रीसूर्यनारायणशुक्लमहोदयैः 'वादरत्नं' नामायं प्रबन्धो व्याकरणविषये न्यासभागे वादस्य अपूर्वो निबन्धः छात्राणां निर्बन्धात् निबद्धः।

वादरत्नम्—आसीदेषोऽस्मत्तातपादानामुद्देशः यत् अनेनैव प्रकारेण सर्वेषु शास्त्रेषु सिद्धान्तविषयमवलम्ब्य वादविषयं समुपस्थापयामीति पूर्वं व्याकरणशास्त्र एव न्यासपरिस्कारभेदेन भागद्वयं निर्माय सर्वेषां संस्कृतविदुषां दृष्टिपथमवतारितवान्। तत्रायं प्रस्तुतन्यासभागः। अत्र प्रसिद्धानां सूत्राणामुपरि न्यासः सम्यक्तया विचारितो वर्तते। एकस्यैव सूत्रस्य न्यासभेदेन भेदं नवधा दशधा वा कृतो वर्तते। एकस्यैवास्याध्ययनेन अन्यस्य कस्यापि प्रकाशितस्य न्यासभागसंग्रहस्यावश्यकता नास्ति। यस्येदं द्वितीयं संस्करणमद्य भवतां पुरतः उपस्थाप्यते।

## श्रीसूर्यनारायणशुक्लः

ग्रन्थकर्तुः परिचयश्च सर्वेषां विदुषामस्त्येव, तथापि ऐतिहासिकस्यास्य महापुरुषस्य जीवनवृत्तान्तोऽवश्यमेवावगन्तव्यः। अयं गर्गवंशसम्भूतगोरक्षपुरमण्डलान्तर्गतमामखोरग्रामादागतस्य फैजाबाद (अयोध्या) मण्डलान्तर्गततमसातटनिकटवर्तिक्षत्रियकुलपूजितस्य तेभ्यः प्राप्तशुकुलपट्टीत्याख्यस्य ग्राममुख्यस्य महाविदुषः श्री पं० हरिवंशशुक्लस्य वंशपरम्परायां दशमः प्ररोहः। एषां पूर्वपूरुषाः लक्ष्मणपुर (लखनऊ) स्थितस्य नवाबस्य राज्याधिकारिणः आसन्। ते चांग्लराज्यां

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

रम्भे बद्धा दण्डिताः कथं कथंचिदपि प्राणैर्न वियोजिताः शुकुलपट्टीं परित्यज्य निजामुद्दीनमेहदीपुर ( निमदीपुर ) नामके ग्रामे वसतिं कृतवन्तः । तत एषां पिता श्रीपण्डितरामेश्वरदत्तशर्म शुक्लः म० म० हरिहरकृपालुद्विवेद-चण्डीप्रसादशुक्लयोः सार्धं सम्यक् अयोध्यायां नकछेदरामद्विवेदशकासात् अधिगतव्याकरण-न्याय-मीमांसा-वेदान्त-ज्यौतिषशास्त्रतत्त्वः गृहमेवालञ्चकार । ततो व्यतीते कियति काले १९५२ वैक्रमाब्दे चैत्रकृष्णद्वादश्यां एकः सुतः समभवत् । एष एव अस्य ग्रन्थस्य प्रणेता ।

पितुः क्रोडं निषेवताऽनेन व्याकरणशास्त्रस्य सिद्धान्तकौमुदी अष्टाध्यायीसहिता अभ्यस्ता, ततः परीक्षादानोद्देश्येन अयोध्यां गत्वा व्याकरण-साहित्याचार्यस्य श्रीचन्द्रधरपाण्डेयस्य सकाशे व्याकरण-साहित्यविद्यां श्रीरामानुजाचार्यस्य पार्श्वे मीमांसाशास्त्रं श्रीमाधवाचार्यस्य च सन्निधे वेदान्तविद्यां सम्यगधीत्य शास्त्रार्थेषु च समागतान् वादिपण्डितान् निर्जित्य तत्रत्यराजगोपालपाठशालायां मध्यमाध्यापकक्रमेण प्रधानाध्यापकपदं कतिपयैरेव वर्षैरलञ्चकार ।

ततः शनैः शनैः प्रसिद्धिं गते सति युक्तप्रान्तीयसंस्कृतपाठशालानिरीक्षकैः श्री पं० काशीराम इस्सरमहोदयै रभ्यर्थ्यमानः गोयनकासंस्कृतमहाविद्यालये व्याकरणाध्यापकपदमलञ्चकार । एवं च चतुर्भिरेव वर्षैः काशीस्थविद्वत्सु प्राधान्येन गणनामलभत् । अलभत् च सारवपारिणां मध्ये प्राधान्येन न्यायाध्यापकपदं राजकीयसंस्कृतमहाविद्यालयस्य । अस्मिन्नेव काले वादरत्नस्य जनिः ।

ततः २००१ वैक्रमे संवत्सरे चैत्रशुक्लाष्टम्यामपारनाथमठे वर्तमानस्य ज्वरितस्याकस्माद् शिवसायुज्यं समभवत् । अधुना एषामुत्तरवंशजा वयं स्मः । तत्र पुत्रेषु ज्येष्ठोऽहं रामगोविन्दशुक्लः न्याय-व्याकरण-साहित्याचार्य-शिक्षाशास्त्रि-साहित्यरत्नमस्मि । द्वितीयः हरिनाथ शुक्लस्तु एकोनविंसतितमे वयसि मृतः । तृतीयो गंगाधरशुक्लः हाईस्कूलपरीक्षायां वर्तते । चतुर्थः सनत्कुमारशुक्लः पञ्चमः हरिगोविन्द शुक्लः च प्रारम्भिककक्षायां पठमानावस्तः । कन्यका द्वये एका सर्वेभ्यो ज्येष्ठा पतिगृहे वर्तते, अपरा कन्यका । एवमस्य महात्मनश्चरितमस्ति ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

एतेषां कृता ग्रन्थाः

१ वादरत्नम्—न्यासभागः
२ वादरत्नम्—परिष्कारभागः
३ माध्वमुखभङ्ग—वेदान्तः
४ धूलिवन्दननिर्णयः—धर्मशास्त्रम्
५ अशौचनिर्णयः—धर्मशास्त्रम्
६ निर्विकल्पतावादः—वेदान्तः

एवं च टीकाग्रन्था अनेके सन्ति, ते चात्र गणितुमशक्या इति न गण्यन्ते। एतेषां शतशः छात्राः लब्धन्यायव्याकरणसाहित्यमीमांसाचार्यपदा भारतवर्षस्य प्रत्येकभागेषु लब्धप्रतिष्ठा अध्यापकाः सन्ति।

तदेवं प्रचलितशास्त्रार्थकलादक्षाणां सहायकस्य वादरत्नाख्यस्य ग्रन्थस्य तातपादपादपच्छायामेवाश्रित्य समुत्तीर्ण व्याकरणसाहित्याचार्येण नैय्यायिक प्रवर श्रीपद्मप्रसादभट्टराई महोदयालब्धान्वीक्षिकीविभवेन स्वामी श्रीधर्मानन्दगिरेर्लब्धाशीर्वादेन श्रीसंन्यासिसंस्कृत महाविद्यालय सरयूपारीण संस्कृतविद्यालययोः व्याकरणाध्यापकेनेदं द्वितीयं संस्करणं संपाद्य श्रीमतां पुरः स्थाप्यते। अत्र सम्पादनकार्ये कृतसाहाय्यानामस्माकं सहृदयानां श्री पं० रामचन्द्रझा व्याकरणाचार्य-महोदयानामनेकशो धन्यवादान् वितरामः।

अतः परं प्रार्थये काशीश्वरं विश्वेश्वरं यत्, छात्राणामत्र रुचिमुत्पादयतु इति।

सरयूपारीण संस्कृत विद्यालयः,
हरिप्रबोधिनी २००५ वि०

भवदीयस्य—
रामगोविन्द शुक्लस्य

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

# प्रथमभागस्य सूचीपत्रम् ।



CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

---

## शुद्धिपत्रम्—

| अशुद्धम् | शुद्धम् | पृ० | पं० |
|---|---|---|---|
| आकारसन्निपात- | अकारसन्निपात- | १७ | २१ |
| शब्दे ढे | शब्दे नपुंसकह्रस्वे ढे | ,, | २७ |
| × | पतिः समास एव ५५ | ६६ | २६ |
| × | अद्ड्डतरादिभ्यः पञ्चभ्यः ७० | १२५ | ५ |

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

* श्रीः *

# पाणिनिव्याकरणे वादरत्नम् ।

## प्रथमो भागः

न्यायव्याकरणाचार्यमीमांसकशिरोमणेः । सूर्यनारायणकवेः कृतिः स्याद्विदुषांमुदे॥ १॥

श्रीसद्गुरोः सपदि चन्द्रधरस्य पादपद्मे नतिर्भवतु भक्तिरसाप्लुता मे ।
यत्सेवनाप्तमतिपूतमनस्यलं मे शाब्दं रहस्यमखिलं प्रतिबिम्बतेऽद्य ॥ २ ॥

वादाहवे सपदि पण्डितवादिवृन्दं मौनं व्रतं नयितुमिच्छसि चेदमन्दम् ।
सन्मामकीनमतिगुम्फितवादरत्नं पीताम्बरामनुसमं द्रुतमाश्रयत्वम् ॥ ३ ॥

शान्ताय भूतिभसिताय दिगम्बराय वामाङ्गभागगिरिजापरिभूषिताय ।
काशीनिवासरसिकाय सदाशिवाय व्यालाञ्चिताय परमाय नमः शिवाय ॥४॥

### हल् १

ननु हल् इदं सूत्रं किमर्थम् ये लकारेण प्रत्याहारास्ते सन्तु रकारेणैव । न च साम्प्रतं हलन्त्यमित्यत्रान्योन्याश्रयपरिहारः कथं स्यादिति वाच्यम् रन्त्यं हरिति न्यासेन, हरन्त्यमित्यस्यावृत्तिं कृत्वा हर्पदस्य हकारादिरान्तसूत्रसमुदाये लक्षणया वाऽदोषात् ।

हर्पदं हर्प्रत्याहारबोधकसूत्रसमुदायपरमिति शब्दरत्नकृदुक्तं तु न युक्तम् । रकारस्येत्संज्ञायां हर्प्रत्याहारसिद्धिः तस्यां च रकारस्येत्संज्ञेत्यन्योन्याश्रयापातादिति चेन्न ।

तथासति शलइगुपधादनिटःक्स इत्यत्र शर इतिकरणे हकारस्य शरन्तर्गतत्वाभावेनालिक्षदित्यस्यासिद्ध्यापत्तेः ।

नचैवमपि शषसहर् इत्येवसूत्रमस्तु इति वाच्यम् । हकारस्य खरिग्रहणापत्तौ हरिर्हरतीत्यादौ विसर्गापत्तेः । न च प्रष्यप्रवोर्ह्वविषोदेवतासम्प्रदाने इति निर्देशाद्धकारे न विसर्ग इतिकल्पनया ऽदोष इति वाच्यम् । प्राङ्हरतीत्यादौ ङ्णोः कुक्टुक्शरीति कुगापत्तेस्तादवस्थ्यात् । वैकल्पिकेष्वपि भावानुष्ठानस्यैवौचित्यं धर्मादिकफलायेतिसिद्धान्तेन कुग्घटि-

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

तप्रयोगे कर्तव्ये कुग्रहितेन ङ्णोर्हस्वादितिनिर्देशेन हकारे कुङ्नभव-तीति कल्पनया उक्तदोषवारणे तु मद्रह्रद इत्यादौ अनचिचेति हकारस्य द्वित्वापत्तिः नेमौ रहौ कार्यिणौ किन्तर्हिनिमित्तमिमौ द्विर्वचनस्येति भाष्येण हकारस्य द्वित्ववारणे तु वाग्हरिरित्यादौ खरिचेति चर्त्वाऽपत्ति-रेवदूषणमित्यलम् ।

## हलन्त्यम् २

ननु हल्पदार्थज्ञानाधीनमित्पदार्थज्ञानमित्पदार्थज्ञानाधीनं च हल्पदा-र्थज्ञानमिति स्वज्ञप्त्यधीनज्ञप्तिकत्वरूपान्योन्याश्रयप्रसङ्गः । न च हलन्त्य-मित्यस्य हलितिसूत्रेऽन्त्यमित्स्यादित्येवार्थोऽस्तु तथाच नान्योन्याश्रय इति वाच्यम्, तथासति न विभक्तावित्यस्य वैयर्थ्यापत्तेरिति चेन्न ।

'हलन्त्यम्' इत्यस्यावृत्या प्रथमस्य हलिति सूत्रेऽन्त्यमित्स्यादित्यर्थेन लकारस्येत्संज्ञायां हल्प्रत्याहारसिद्धौ द्वितीयस्य उपदेशेऽन्त्यं हलित्स्या-दित्यर्थेन, जसःसकारस्येत्संज्ञाप्राप्तौ तन्निषेधाय न विभक्तावित्यस्याव-श्यकत्वात् । एवञ्च नान्योन्याश्रयो नवा न विभक्तावित्यस्य वैयर्थ्य-मिति बोध्यम् ।

ननु हलन्त्यम्, उपदेशेऽजनुनासिकइत् इत्यनयोः स्थाने उपदेश इद-न्त्यमित्येव सूत्रमस्तु । नच अनङादौ नकारोत्तरवर्त्यकारादेरित्वानापत्ति-रिति वाच्यम् । तदर्थमच् इति सूत्रकरणात् इदश्चानन्त्यस्याचः इत्संज्ञा-र्थमन्त्यस्य तु उपदेशे इदन्त्यमित्येवसिद्धेः । नचैवमपि रुशब्दे इत्यत्रो-कारस्येत्वापत्तिरिति वाच्यम् । तदर्थम् अनुनासिकः इति तृतीयसूत्रक-रणेन तस्य च अचेदिद्भवति तर्हि अनुनासिक एवेति नियमार्थतया रुशब्दे इत्यत्र दोषाभावात् । नचानन्तरस्य विधिर्वा भवति प्रतिषेधो वेति न्यायात् अच् इति सूत्रप्राप्तसंज्ञायाः रुधातौ वारणेऽपि उपदेश इदन्त्य-मितीत्वं दुर्वारमिति वाच्यम् । अजनुनासिकइत्येकयोगे कर्तव्ये योग-विभागकरणसामर्थ्येन उभयोरपि नियमस्वीकारात् । नच अनुनासिक-श्चेदिद्भवति तर्हि अजेवेति विपरीतनियमः किं न स्यात् ततश्च नुमो मकारस्य इत्वं न स्यादिति वाच्यम् । मिदचोन्त्यात्पर इति सूत्रसामर्थ्येन विपरीतनियमवारणात् । न च सूत्रभेदः तथाच पारायणादावदृष्टहानि-

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

रिति वाच्यम्। सूत्रभेदं तमुपाचरन्ति यत्र तदेवान्यत्क्रियते भूयो वा यदि तदेवोपसंहृत्य क्रियते नासौ सूत्रभेदो दोषायेति भाष्येणास्य सूत्रभेदस्यादोषत्वात्। एवञ्च हलन्त्यम्, उपदेशेऽजनुनासिकइत् इत्यनयोः स्थाने "उपदेशे इदन्त्यम्" "अच्" "अनुनासिकः" इति लघुभूतन्यासेन सिद्धौ अन्योन्याश्रयाभावात् तद्वारणाय हलन्त्यमिति सूत्रावृत्तिर्व्यर्था इति चेन्न।

मात्रालाघवसत्वेऽपि योगविभागनियमानन्तरस्येतिन्यायबाधादिकल्पनायामत्यन्तं गौरवात्। तदुक्तं भाष्ये नेयं राजाज्ञास्ति कण्ठताल्वाद्यभिघातजनकमात्रागौरवमेवादतव्यं न मनोव्यापारजनकज्ञानगौरवमिति।

ननु चतुर्दशं सूत्रं हल् इत्याकारकं तत्र चाद्गुण इति गुणे हल् इति संपन्नम् एवञ्च हलन्त्यमित्यत्र हल् प्रत्याहारः तत्र लकारस्य उपदेशेऽजनुनासिक इत् इतीत्संज्ञायां हल्प्रत्याहारसिद्धौ नान्योन्याश्रयशङ्कापीति सूत्रावृत्तिर्व्यर्था।

नच हलन्त्यमित्यस्य वाक्यार्थवोधं विना चकारस्येत्संज्ञाया अभावात् अच्प्रत्याहारासिद्धौ लकारस्येत्वाभावात् हल्प्रत्याहारज्ञानाधीनचकारस्येत्वज्ञानं तदधीनश्चाच्प्रत्याहारज्ञानं तदधीनश्च लकारस्येत्वज्ञानं तदधीनं च हल्प्रत्याहारज्ञानमितिचक्रकापत्त्या तथाकर्तुं न शक्यते इति वाच्यम्। हल् च च् चेति समाहारद्वन्द्वेऽनित्यत्वेन समासान्तटचोऽप्रवृत्तौ चस्य संयोगान्तलोपे हल् इति रूपम् ततश्च उपदेशेऽन्त्यं हल् च् चेत्संज्ञक इत्यर्थेन हल्प्रत्याहारसिद्धेः प्रागपि अच्प्रत्याहारसिद्धेः सत्वेन चक्रकापत्त्यभावात्। नच संयोगान्तलोपं प्रतिवहिरङ्गत्वेन गुणस्यासिद्धत्वात्संयोगान्तलोपो दुर्लभ इति वाच्यम्। त्रिपाद्यां कार्यकालपक्षेऽपि वहिरङ्गपरिभाषाऽप्रवृत्तेः शेखरे सिद्धान्तितत्वात्। पदद्वयसम्बन्धित्वेन संयोगान्तलोपस्यापिवहिरङ्गत्वाच्च। यद्वा भूवादयोधातव इत्यतो वादयः इत्यनुवर्त्य अच् इतियोगं विभज्य वादयोऽच्संज्ञका भवन्ति ततउपदेशेऽनुनासिकः इत् अजित्यनुवर्त्य उपदेशेऽनुनासिको ऽजित्संज्ञको भवतीत्यर्थस्वीकारेण इत्पदार्थज्ञानाभावेऽपि अच्प्रत्याहारसिद्धेः कर्तुं शक्यत्वात्। तथाहि औकारस्य आ इति विग्रहेऽन्ययी-

CC-0. Prof. Satya Vrat Shastri Collection. Digitized by eGangotri

भावे आआौ इतिस्थिते अपरनिमित्तकत्वरूपान्तरङ्गत्वस्य प्राचीनैरनङ्गीकारेण पूर्वंवृद्धौ ततो ह्रस्वे उ इति रूपम् । अःआदिर्येषांते आदयः आकारे परे उकारस्य वकारे वादयः अकारादयः औकारपर्यन्ता अच्संज्ञका इत्यर्थं लभ्यते । तथाच लृकारस्येत्संज्ञाया हल्प्रत्याहारसिद्धेः प्रागपि कर्तुं शक्यत्वान्नचक्रक इति । अतएव सनाद्यन्ताधातवः भूवादयोधातवः इत्यनयोरेकत्रैव पाठकरणे द्विर्धातुग्रहणानुच्चारणलाघवमनाहत्य उपदेशेऽजनुनासिकइत्यतः प्राक्पाठ इति चेन्न ।

समाहारद्वन्द्वपक्षस्य सहविवक्षाया असम्भवादिति मनोरमोक्तदूषणालिङ्गितत्वात् । यद्वेत्त्याद्युक्तपक्षस्य ज्ञानगौरवदोषग्रस्तत्वात् । भूवादयइत्यस्येहपाठस्तु सन्दर्भशुद्ध्यर्थः सनाद्यन्ता इत्यस्य तृतीयाध्यायेपाठअतत्रैवसनादीनांविहिततया झटिति सनादित्वज्ञानार्थएवेति तत्त्वम् ।

केचित्त हल् च ल् चेति समाहारद्वन्द्व लस्य संयोगान्तलोपे हल् इति रूपम् । अन्त्यं हल् लकारश्चेदिति सूत्रार्थः यद्वा हलित्यावर्तते हस्य ल् हल् सामीप्यं षष्ठ्यर्थः हकारसमीपवर्ती लकार इति एकस्यार्थः हल्प्रत्याहार इति द्वितीयस्यार्थ इति सम्पूर्णसूत्रावृत्तिर्व्यर्था इति वदन्ति ।

तन्न; यणः प्रतिषेधारम्भेण तत्प्रत्याख्याने च झलोझलीत्यतो झल्ग्रहणमपकृष्य संयोगान्तस्य झल एव लोपविधानेन, आद्य संयोगान्तलोपस्य दुर्लभत्वात् ।

ननु वहिरङ्गलक्षणत्वाद्वेति वार्तिकेन यण इति वार्तिकप्रत्याख्यानपक्षे संयोगान्तलोपः स्यादेव वहिरङ्गत्वस्याभावात् । अत एव मधुश्च्युतशब्दाण्णिचि टिलोपे कौ णिलोपे सोहल्ङ्यादिलोपे अत्वस्यासिद्धत्वात्स्कोरिति सलोपे यस्य संयोगान्तलोपे चोःकुरितिकुत्वे मधुगितिरूपं न्यासाद्युक्तं संगच्छते । किंच यणः प्रतिषेधपक्षे झलग्रहणमपकृष्य वार्तिकप्रत्याख्यानपक्षे संयोगान्तलोपः स्यादेव । तथाहि—यणः प्रतिषेध इति वार्तिकस्य इकूस्थानिकस्य यणः प्रतिषेध इत्यर्थः । अत एव वहिरङ्गलक्षणत्वादित्यस्य वहिरङ्गोयणादेशोऽन्तरङ्गोलोप इति भाष्ये व्याख्यातता । संयोगान्तस्य लोपइत्यत्र पदस्येति विशेषणेनैव तदन्तविधौ तदन्तस्य लाभात् [illegible] मित्यर्थलाभः [illegible] श्रूयते स्थानिनमित्य-

CC-0. Vasishtha Tripathi Collection. Digitized by eGangotri

न्तशब्दः आदेशपरः संयोगेति च लुप्तषष्ठीकम्। तथाच संयोगान्तं यत्पदं तदन्तस्य आदेशभूतस्य झलो लोप इति नवा झलोलोपादितिवार्तिकपदेऽर्थः पूर्वसूत्रेणैव सिद्धे नियमार्थमिदं संयोगान्तपदान्तस्य आ देशभूतस्य यदिलोपस्तर्हि झल एवेति एवं च प्रकृते लकारस्य संयोगान्तलोपः पक्षत्रयेऽपि सुलभः। अत एव अतोऽम् इत्यत्र म् इति च्छेदं कृत्वा द्वितीयैकवचने मस्य संयोगान्तलोप इति मनोरमाकृतोक्तम्। नच संयोगान्तपदान्तस्य झलो यदि लोपः स्यात्तर्हि आदेशभूतस्यैवेति विपरीतनियमः स्यादिति विद्वानित्यादौ तस्य लोपानापत्तिः सूत्रं तु मघवानित्यादौ तलोपाय चरितार्थमिति वाच्यम्। तद्वानासामिति निर्देशेन विपरीतनियमस्य वारणादिति चेन्न।

इतएवारुचेर्मनोरमायां सहविवक्षाऽसंभवप्रतिपादनेन समाहारद्वन्द्वपक्षस्य दूषितत्वात्। द्वितीये सामीप्यस्यषष्ठ्यर्थत्वाभावेन सामर्थ्याभावेन समासानुपपत्तेरित्यलम्।

प्र०। द्वा। च्वन्तानग्रहणम् ३

ननु नासिकामनुगतोऽनुनासिक इत्यत्र नासाशब्दात्कप्रत्यये तस्मिंश्च यकारसाहचर्येणाचोऽच्त्वहल्त्वोभयधर्माक्रान्तस्यैव ग्रहणेन यचिभमित्यस्या प्रवृत्त्या स्वादिष्विति पदत्वम्। अन्यथा सकारोत्तरवर्त्यकारस्य यस्येतिचेति लोपापत्तिस्तथाच इकोऽसवर्णे इतिपाक्षिकप्रकृतिभावेऽनुनासिक इति रूपं सिद्धमेवेति कथं निर्देशदानम्। नच "नसमास" इति निषेधः। समासविशिष्टस्येकः प्रकृतिभावोनेतितदर्थात् वैयारुभकोत्तरपदावयवासवर्णाज्व्यवहितपूर्वत्वस्वारम्भकपूर्वपदान्त्यावयवत्वोभयसम्बन्धेन। अतएव परमचक्रि अत्र, प्रत्यचिचदित्यत्र नसमास इतिनिषेधो न, तत्र अञ्चुधातोरकारस्य लुप्तत्वात् अटो ण्यन्तावयवत्वेन उत्तरपदावयवत्वाभावात्। नच णिचि चिकोर्षिते प्रतीत्यस्य पृथक्करणेन तद्विशिष्टस्य धातुत्वाभाववत्समासाभावोऽपि स्यादिति वाच्यम्। जातसमाससंज्ञाबाधस्यासम्भवात् अतएवोत्तरपदनिमित्तकसस्यादेशः सम्यचिचदित्यत्र सिध्यति इति चेन्न।

णासृधातोर्ण्वुलि नासिकाइत्यस्य सिद्ध्या स्वादिष्विति पदत्वस्याप्रवृत्तेः। अत एव "घ्राणनासा च नासिका" इत्यमरः सङ्गच्छते। अ-

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

न्यथा स्वार्थिककप्रत्ययान्तस्य क्वापि कोशेऽनुपन्यासेन नासिकाशब्दोपादानं व्यर्थं स्यात् । नच प्रत्ययस्थादितीत्वविधानसामर्थ्याद्यण् न भविष्यतीति वाच्यम् । साक्षाद्विधिशास्त्रबाधकल्पनापेक्षया संज्ञाशास्त्रबाधस्यैवौचित्यादितएवारुचेर्वाह आदीति । तेनतृषिमृषिकृषेः काश्यपस्येत्यस्य संग्रहः । अत्रनेकोऽसवर्णे इति प्रकृतिभावप्राप्तिः नसमासे इतिनिषेधात् । अत्र एङः इतिनिर्देशोऽपि प्रमाणमन्यथा ऽयादेशः स्यादिति ।

केचित्तु अनुनासिकइत्यत्र भत्वेन पदत्वबाधादिकोऽसवर्णे इतिनप्रवर्तते नच भत्वे यस्येति चेति लोपापत्तिः परेण केण इति ह्रस्वेन बाधात् तदुत्तरमपि न सकृद्गतिन्यायात् इति वदन्ति ।

तन्न; नित्यत्वाद्यस्येति लोपस्यैवप्रवृत्तेः । नच शब्दान्तरप्राप्त्या सोऽनित्य इति वाच्यम् । क्वचित्कृताकृतप्रसङ्गमात्रेणापिनित्यताभ्युपगमात् ।

वस्तुतस्तु ह्रस्वो लोपापवादः । नच निषादकर्षुक इत्यत्र चारितार्थ्यम् । तत्रौर्गुण इत्यस्यप्राप्तेः । एवञ्च ज्ञानमित्यत्रैव अपवादशास्त्रप्रवृत्त्यनन्तरमुत्सर्गशास्त्रप्रवृत्तौ अपवादशास्त्रप्रणायनवैयर्थ्यसम्भावनेति चतुर्थबाधबीजेन बाध इति बोध्यम् ।

अन्येतु पदेऽन्तः पदान्त इतिसमासं स्वीकृत्य इकोऽसवर्णे इति प्रकृतिभावाप्रसक्त्या निर्देशमुपपादयन्ति ।

केचित्तु ककारेऽपरे इति छित्वा अपरे ककारे दीर्घाभावदर्शनेन उक्तार्थकल्पनेति वदन्ति । तन्न । ककाराकारयोः सावर्ण्याभावेनदीर्घाप्राप्तेः । नच साम्प्रतं ककारस्याच्त्वात प्रयत्नैक्यं स्यादिति वाच्यम् । प्रयत्नभेदस्यलोकानुभवसिद्धतयाच्त्वेऽपि प्रयत्नैक्यासम्भवात । अकारे परे ककारस्य यणापत्तिस्तु वक्तुमशक्या दीक्षितमते संज्ञात्वेन संज्ञित्वस्य बाधात् ककारे इक्त्वस्यैवाभावादिति बोध्यम् ।

## ऊकालोऽज्झ्रस्वदीर्घप्लुतः ४

नन्वत्र सूत्रे ।ह्रस्वपदस्थाने लघुपदं निवेश्य सर्वत्र ह्रस्वपदस्थाने लघुपदं निवेश्यतामेवं च ह्रस्वं लघुइति सूत्राकरणेन लाघवम् संयोगेगुरु इत्यत्र च संयोगेलघगुरु इतिन्यासेन लघोरेवगुरुसंज्ञाविधानेन सिद्धेः । नचैवं लघुगुरुसंज्ञयोः समावेशे अततदादित्यत्र दीर्घ लघोरिति अभ्या-

CC-0. Vasishtha Tripathi Collection. Digitized by eGangotri

साचो दीर्घापत्तिः सिद्धान्ते तु लघुगुरुसंज्ञयोराकडारीयत्वेन गुरुसंज्ञया लघुसंज्ञाया बाधान्नदोष इति वाच्यम्। दीर्घे लघोरित्यत्रत्यलघुग्रहण-सामर्थ्येन गुरुसञ्ज्ञकभिन्नस्यैव लघोर्ग्रहणमिति कल्पनेनादोषात। नचैवं लघ्वक्षरं पूर्वमितिवार्तिकेन वृत्तश्च धूमश्चेति द्वन्द्वे वृत्तस्यैव पूर्वनिपाता-पत्तिरिति वाच्यम्। अकडाराधिकारे ऊकालइत्यस्य पाठकरणेन गुरु-संज्ञया लघुसंज्ञाबाधेनादोषात। नचैवमुद्देश्यासिद्धिः। सयोगेऽच् गुरु-इतिन्यासकरणेनादोषात्। नच गुरुसञ्ज्ञया लघुसंज्ञाबाधस्वीकारे राम-छ्यतीत्यत्र तुगनापत्तिः, निष्ठ्य इत्यत्र ह्रस्वात्तादाविति षत्वानापत्तिश्च यथान्यासे गुरुसञ्ज्ञाया ह्रस्वसञ्ज्ञाबाधे मानाभावेन तयोरिष्टत्वादिति वा-च्यम्। ह्रस्वात्तादाविति सूत्रारम्भेण भूतपूर्वगत्याश्रयणेन सिद्धेः इति चेदुच्यते; अनेकसामर्थ्याश्रयणापेक्षया यथान्यासस्यैवौचित्यमिति।

ननु यथान्यासेपि भेत्तेत्यादौ गुरुसंज्ञायां लघूपधत्वाद्गुणो न स्यात्। नच अततक्षदित्यत्र लघुगुरुसंज्ञयोः समकालप्राप्तिकतया गुरु-संज्ञया लघुसञ्ज्ञाबाधेऽपि प्रकृते पूर्वं परिस्थतनिमित्तकत्वेनान्तरङ्गत्वाल्ल-घुसंज्ञाया न बाधः अपवादो यद्यन्यत्रेतिन्यायादिति वाच्यम्। परनिमि-त्तकत्वेन गुरुसंज्ञाया अततक्षदित्यत्रापि बहिरङ्गत्वाधेननाप्राप्त इतिन्या-येन लघुसंज्ञाबाधकत्वात। नचाप्तेत्यादौ गुरुसंज्ञायाश्चारितार्थ्यं, तत्र-दीर्घं चेति प्राप्तगुरुसंज्ञायाश्चारितार्थ्येऽपि संयोगेगुरु इति गुरुसंज्ञाया अप्रवृत्तेरिति चेन्न।

क्नोःकित्करणसामर्थ्येन भूतपूर्वलघूपधस्य गुण इति कल्पनेनादो-षात्। नचैवं इन्दतीत्यत्र गुणापत्तिरिति वाच्यम्। प्रत्ययोपदेशकाले लघूपधस्यगुण इत्यर्थकरणेन इन्दतीत्यत्र उपदेशे एवनुम्प्रवृत्याऽदोषात्। इदितो नुम्धातोरित्यस्य हि इदिदन्तस्याङ्गस्याङ्गसंज्ञायोग्यस्य धातूपदे-शकाले नुम् इत्यर्थः। अतएव कुण्डेत्यत्राप्रत्ययसिद्धिः। अन्यथा गुरुम-त्वाभावादप्रत्ययो न स्यादिति स्पष्टं शेखरे। नच तोतोर्ति तोर्वेत्यत्र-गुणानापत्तिः। क्नोः कित्वेन प्रकृतिप्रत्ययोभयसम्बन्धिसयोगमादाय सयोगेगुरु इति सूत्र न प्रवर्तत इति कल्पनया भेत्ता तोतोर्तीत्यादाव-दोषात्।

अत्रेदमवधेयम् ऊकालोज्झ्रस्वदीर्घप्लुत इति सूत्रे ऊपदं तन्त्रेण उश्च

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

ऊश्च ऊ३श्चेतीतरेतरयोगद्वन्द्वेन उकारत्रयं निर्दिश्यते। अत्र प्रमाणं ह्रस्वदीर्घप्लुत इति सञ्ज्ञात्रयविधानम् अन्यथा अनाकृतिः सञ्ज्ञेतिभाष्येण एकस्य संज्ञात्रयकरणमनुचितं स्यात् ।

नन्वत्र एकमात्रिकद्विमात्रिकत्रिमात्रिकोकाराणां क्रमेण निर्देशे किं मानमिति चेदुच्यते। द्विमात्रिकस्य प्रथम पाठे तस्यैव ह्रस्वसञ्ज्ञायां गोस्त्रियोरिति सूत्रे गोग्रहण व्यर्थं स्यात् । अन्ते पाठकरणे तस्यैव प्लुतसंज्ञायां हैहेप्रयोगे हैहयोरिति सूत्र व्यर्थं स्यादिति द्विमात्रिकस्य मध्ये पाठः । एकमात्रिकस्यान्त्यपाठे तस्यैव प्लुतसञ्ज्ञायां गुरोरनृत इति सूत्रेऽनृत इति व्यर्थं मध्ये पाठे च तुल्यास्येतिनिर्देशासगतिरत आदौ पाठ, इति परिशेषात्प्लुतस्य सर्वान्त्ये पाठः इति सिद्धम् ।

ऊपदस्य कालेन सामानाधिकरण्यासम्भवा १ स्वोच्चारणाधिकरणीभूतकालसदृशे लक्षणया वां काल इव कालोयस्येति समासार्थं विवृणोति वां काल इवेति ।

## मुखनासिकावचनोऽनुनासिकः ९

ननु मुखवचनोऽनुनासिक इत्येव सूत्रमस्तु नासिकाग्रहणं किमर्थम्। नच ककारादेरप्यनुनासिकसञ्ज्ञायां शक्त्यादौ अनुदात्तोपदेश इति ककारलोपापत्तिरिति वाच्यम्। अनुदात्तोपदेश इति सूत्रेऽनुनासिकलोप इत्यस्य स्थाने ञमलोप इति न्यासकरणेनादोषात् । नचौदनं पचतीति ओदनपगित्यत्रानुनासिकस्य क्वीति दीर्घापत्तिरिति वाच्यम् । ञमः क्वीतिन्यासेनादोषान इति चेन्न ।

अग्निचिदत्रेत्यादौ यरोऽनुनासिक इति अनुनासिकापत्तेः । तत्र यरो ञमिञम्वेति न्यासस्तु कर्तुमशक्यः। एतदाँश्चिनोषीत्यत्र पद्ये इष्टस्य एतनाँश्चिनोषीत्यस्य कमलाँश्चिनोषीत्यस्य चासिद्धयापत्तेः ।

ननु नासिकामनुगतोऽनुनासिक इति व्युत्पत्त्यैवानुनासिकत्वज्ञानसम्भवे सूत्रं व्यर्थम् । नच सूत्राभावे स्वरूपमिति शास्त्रबलाद्यरोऽनुनासिक इति सूत्रमनुनासिकशब्दे एव प्रवर्तेतेति वाच्यम् । उपान्मन्त्रकरणे ङमुण्नित्यमित्यादिनिर्देशैः स्वरूपमित्यस्य यरोऽनुनासिक इत्यत्राप्रवृत्तेरिति चेन्न।

CC-0. Vasishtha Tripathi Collection. Digitized by eGangotri

पूर्वोक्तयोगाश्रयणेनानुनासिकत्वज्ञानासमर्थं प्रति सूत्रसार्थक्यात् पूर्वोक्तनिर्देशाश्रयणे प्रतिपत्तिगौरवाच्चेत्यलम् ।

तुल्यास्यप्रयत्नं सवर्णम् ९

तुल्यावास्यप्रयत्नौ यस्य तत्तुल्यास्यप्रयत्न ननु तुल्यं च तुल्यश्च तुल्ये इति भवितव्यम् नपुंसकमनपुंसकेनेत्यनुशासनात् । नचाद्वन्द्वतत्पुरुषविशेषणानामितिवक्तव्यमिति वार्तिकान्न नपुंसकमित्यस्य प्राप्तिरिति वाच्यम् । तस्य वार्तिकस्य त्यदादीनि सर्वैर्नित्यमित्येकशेषविषयकत्वात् एकशेषमात्रविषयकत्वे पुमान्स्त्रिया इत्यस्यापि निषेधापत्तौ भगवतोर्भवानीविश्वनाथयोरित्यभियुक्तप्रयोगविरोधापत्तिरिति चेन्न ।

तुल्यमित्यत्रतन्त्राङ्गीकारेणैकशेषाभावेनादोषात् ।

ननु तुल्यप्रयत्नं सवर्णमित्येवसूत्रमस्तु आस्यग्रहणं किमर्थम् । नचास्यग्रहणाभावे तकारपकारयोः सवर्णसञ्ज्ञायां तप्तेत्यादौ झरो झरि सवर्णे इति पकारस्य लोपापत्तिरिति वाच्यम् । ऋलृवर्णयोरितिवार्तिकसामर्थ्येन भिन्नस्थानयोर्नसवर्णसञ्ज्ञेति ज्ञापनेनादोषात् इति चेन्न ।

भिन्नस्थानयोरचोश्चेन् सवर्णसञ्ज्ञा तर्हि ऋलृवर्णयोरेवेति नियमस्य सम्भवेन उक्तकल्पनायां मानाभावेन तप्तेत्यत्र पकारलोपापत्तेः ।

नच झरोझरीत्यत्र यथासंख्यपरिभाषाप्रवृत्त्या नदोष इति वाच्यम् । सवर्णग्रहणेन तत्र सूत्रे यथासंख्यापरिभाषाऽप्रवृत्तेः । नच मास्तु सवर्णग्रहणं । शिण्ढीत्यस्य उत्तम्भनमित्यस्य चासिद्धेः ।

नन्वतोलरेति सूत्रे लकारोच्चारणेन भिन्नस्थानकानां न सवर्णसञ्ज्ञेतिकल्पनेन तप्तेत्यादावदोषः । नच रप्रत्याहारानित्यत्वज्ञापनार्थं तदिति वाच्यम् । यावता विनेति न्यायेन तस्यापि ज्ञापनसम्भवादिति चेन्न ।

लकारस्य माभवानालीदित्यत्र पुरस्तादपवादा इति नेटीति प्रवाध्य चारितार्थ्येनापवादमप्यमु बाधित्वाऽचारीदित्यत्रातोहलादेरिति विकल्पवृद्ध्यापत्तेः । मम तु न दोषः रलूपदाभ्यां वाध्यसामान्यचिन्तापक्षबोधनद्वारा विकल्प वृद्धेर्बाधात् । नच लोपोव्योर्वलीत्यत्र रलीति पाठेन सिद्धौ वलीति कथन भिन्नस्थानकानां नसावर्ण्यमित्यत्रमानमिति वाच्यम् । रलीतिन्यासे लाघवाभावेनोक्तकल्पनायाः कर्तुमशक्यत्वात्प्रतिपत्तिगौरवाच्चेति दिक् ।

CC-0. Vasishtha Tripathi Collection. Digitized by eGangotri

ननु तुल्यास्यं सवर्णमित्येव सूत्रमस्तु प्रयत्नग्रहणं व्यर्थम् ताल्वादिस्थानं यस्य येन तुल्यं तन्मिथः सवर्णमिति सूत्रार्थः । नच वाक्श्च्योततीत्यत्र झरोझरीति शकारलोपापत्तिरिति वाच्यम् । झराझरिसवर्णे इत्यत्र झयोझयिसवर्ण इतिन्यासकरणेनादोषात् ।

नन्वेवं निंसे इत्यत्र सकारलोपानापत्तिः । नचझलोझलीतित्न सिद्धिरिति वाच्यम् । तस्य नित्यतया नित्यसलोपापत्तेः नश्चापदान्तस्येत्यस्य परत्रैपादिकतयाऽसिद्धत्वेन झलोझलीत्यस्याप्रवृत्तेश्चेति चेन्न । सझयः सझयि सवर्ण इति न्यासेनादोषात् ।

नच कुण्डं रथेनेत्यत्र पदान्तस्येति परसवर्णणकारापत्तिः रेफणकारयोः सावर्ण्यादिति वाच्यम् । तुल्यास्यमणं सवर्णमिति न्यासेनादोषात् । नच हकारकवर्गयोः शकारचवर्गयोश्च सावर्ण्यापत्तिः ततश्च चोःकुरितिशकारस्य हकारापत्तिरिति वाच्यम् । कुहोश्चुरित्यत्र हकारोपादानेन ऊष्मणां स्पर्शैर्न सवर्णसञ्ज्ञेति ज्ञापनेनादोषात् । एतेन तत्करोतीत्यत्र झयोहः इति पूर्वसवर्णस्य वाक्श्च्योततीत्यत्र शश्छोटीतिछत्वस्य चापत्तिः परास्ता । नच यकारशकारयोः सवर्णसंज्ञायां यकारस्याण्त्वेन तद्ग्रहणेन शकारस्यापि ग्रहणे वाक्श्च्योतति रामश्छिनत्तीत्यादौ शस्य लोपोव्योर्वलीति लोपापत्तिः हरिं शङ्करमाश्रये इत्यत्रानुस्वारस्य परसवर्णयकारापत्तिश्चेति वाच्यम् । यकाररेफलकारैः शषसानां ग्रहणे सिद्धे शषसर् इति सूत्रारम्भेण अन्तस्थोष्मणोः परस्परं सावर्ण्याभावज्ञापनेनादोषात् । नच झलादिप्रत्याहारे शकरादीनां ग्रहणं यथा स्यात्तदर्थं शषसर् इति सूत्रमावश्यकमिति वाच्यम् । रषाभ्यामित्यत्र षग्रहणेन अन्तस्थोष्मणोः परस्परं सावर्ण्याभावज्ञापनसम्भवात् तेन दर्शनमित्यत्र णत्वं तत्सीदतीत्यत्र लत्वञ्च स्यादिति निरस्तम् इति चेन्न ।

अनेकक्लिष्टकल्पनाभिः कार्यनिर्वाहं कृत्वा सौत्रप्रयत्नग्रहणखण्डनस्यात्यन्तमनुचितत्वात् ।

नच झरोझरि सवर्गे इत्येव न्यासोऽस्तु वाक्श्च्योततीत्यत्र च न दोषः प्रयत्नग्रहणं प्रकृतसूत्रे मास्तु न वा काचित्क्लिष्टकल्पनापीति वाच्यम् । वलयोरपि सावर्ण्यापत्तौ तद्वदतीत्यत्र तोलीति परसवर्णापत्तेः । तत्र लकारं प्रति यकारे च प्रतिपत्तिगौरवमिति दिक् ।

CC-0. Vasishtha Tripathi Collection. Digitized by eGangotri

## नाज्झलौ ७

नन्विदं सूत्रं व्यर्थमकारहकारयोस्सवर्णसंज्ञायां हकारग्रहणेनाकारस्यापि ग्रहणाद्धशिचेत्यनेनैव शिवोऽर्च्य इत्यत्रोत्वसिद्धावतोरोरप्लुतादप्लुते इति सूत्रारम्भेणाज्झलोर्न सवर्णसंज्ञेति ज्ञापनसम्भवादिति चेन्न।

आकारे उत्वव्यावृत्त्यर्थमतोरोरित्यस्य चारितार्थ्यात् ।

ननु नाकूशलावित्येव सूत्रमस्तु इति चेदत्र केचित् एकारस्य तालुमात्रजन्यत्वमितिमते एकारशकारयोः सावर्ण्यापत्तिः स्यादतः तथा न सूत्रितमिति वदन्ति ।

परे तु एकारस्य तालुमात्रजन्यत्वमिति पक्षो न सूत्रकृत्सम्मतः एकारैकारयोः सावर्ण्यापत्त्या यजुष्येकेषामिति निर्देशासङ्गतेः । ऋति ऌवेति वार्तिकविधेयेपत्स्पृष्टऌकारस्य लकारेण सावर्ण्यं स्यादतः तथा न सूत्रितम् । एतेन नाचूशलाविति न्यासोऽपि परास्त इति वदन्ति ।

## भूवादयो धातवः ८

अत्र भूश्च वाश्च भूवौ आदिश्च आदिश्च आदी भूवावादी येषां ते भूवादयःभूपदार्थस्य प्रभृत्यर्थकादिपदार्थे वापदार्थस्य च प्रकारार्थकादिपदार्थेऽन्वयेन भूप्रभृतयो वासदृशा इत्यथलाभेन क्रियावाचिनो धातुसंज्ञां लभन्त इति सूत्रार्थो निष्पद्यते ।

ननु भूवावित्यत्रेतरेतरयोगे द्वन्द्वः इतरेतरयोगो नाम इतरस्येतरस्मिन्योग इतरेतरयोगः एवञ्च भेदे द्वन्द्व इति लभ्यते तत्र पदभेदे पदार्थभेदे पदार्थतावच्छेदकभेदे वा द्वन्द्वः । नाद्यः । नीलोत्पलमित्यत्रापि द्वन्द्वापत्तेः । न द्वितीयः । अप्यैकदन्तहेरम्बलम्बोदरगजाननाः इत्यत्र प्रमाणप्रमेयेति सूत्रे नीलघटयोरभेद इत्यत्र च द्वन्द्वानापत्तेः । नान्त्यः । घटा इत्यत्र द्वन्द्वाऽप्राप्त्या द्वन्द्वापवाद एकशेष इति भाष्यसिद्धान्तव्याकोपापत्तेरिति चेन्न ।

पदार्थभेदे द्वन्द्व इति स्वीकारेणादोषात् । पदार्थत्वं च पदजन्यप्रतीतिविषयत्वरूपं पदार्थपदार्थतावच्छेदकसाधारणम् । अप्यैकदन्तेत्यादौ पदार्थस्यैक्येऽपि पदार्थतावच्छेदकभेदेनैव द्वन्द्वसत्वात् घटाइत्यादौ विशेष्यघटादिव्यक्तिभेदेन द्वन्द्वप्रसक्त्या सरूपैकशेषस्य द्वन्द्वापवादकताप्रवादसङ्गतिः । नच घटत्वेनैकघटसात्स्यर्थकघटकलशपदयोर्द्वन्द्वापत्तिः

CC-0. Vasishtha Tripathi Collection. Digitized by eGangotri

प्रतिपाद्यघटघटत्वयोर्भेदादिति वाच्यम् । एकपदप्रतिपाद्येऽपरपदप्रतिपाद्यत्वावच्छिन्नभेदस्यापेक्षणेनादोषात् । नचवं मेयवाच्ययोरभेद इत्यत्र द्वन्द्वानुपपत्तिः वाच्यपदप्रतिपाद्यत्वावच्छिन्नभेदासत्वादिति वाच्यम् । पदार्थयोर्भेदः पदार्थवैलक्षण्यम् एकपदप्रतिपाद्यविशिष्टार्थस्यापरपदप्रतिपाद्यविशिष्टार्थापर्याप्तविषयताश्रयत्वपर्यवसितम् तदेव द्वन्द्वनियामकमित्यदोषात् । गगनाकाशयोरभेद इत्यत्र गगनादिपद तद्वाच्यत्वावच्छिन्नपरमिति पदार्थतावच्छेदकभेदेन द्वन्द्व इत्यलम् । इतोऽधिकं जिज्ञासुभिरनुमितिगादाधर्यां द्रष्टव्यम् ।

ननु वा सादृश्यं केन धर्मेण एकाच्त्वेन हलादित्वेन अजन्तत्वेन क्रियावाचकत्वेन वा । नाद्यः । उर्णोतेर्धातुत्वानापत्त्या विभाषोर्णोः इत्यादीनां वैयर्थ्यापत्तेः । न द्वितीयः । तत एव । न तृतीयः । हलन्तानां धातुत्वानापत्त्या वदव्रजहलन्तस्याच इत्यादीनां वैयर्थ्यापत्तेः । नापि चतुर्थः । शादृश्यप्रतियोगितावच्छेदकव्यापकीभूतधर्मस्यैव सादृश्यनियामकतायाः सर्वत्र दर्शनेन वात्वस्य विकल्पार्थवाशब्देऽपि सत्वेन सादृश्यप्रतियोगितावच्छेकीभूतवात्वव्यापकत्वस्य क्रियावाचकत्वेऽभावादिति चेदुच्यते ।

वाशब्दसाहचर्याद् भूशब्दोऽद्रव्यवाची गृह्यते स च क्रियावाचक एवेति तत्साहचर्याद्वाशब्दः क्रियावाचको गृह्यते परस्परसाहचर्यादिति निपातभिन्नवात्वव्यापकत्वस्य क्रियावाचकत्वे सत्वेन तेन धर्मेण सादृश्यग्रहणमिति ।

ननु सादृश्यं तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वम् एवं च वातेर्धातुत्वं न स्याद्वाभिन्नत्वाभावात इति चेन्न ।

"गगनं गगनाकारं सागरः सागरोपमः । रामरावणयोर्युद्धं रामरावणयोरिव" इत्यत्र यथा कल्पभेदेन गगनभेदमाश्रित्यभेदघटितसादृश्यनिर्वाहः तथा प्रकृते प्रयोगभेदेन वाधातौ वासादृश्यनिर्वाह इत्यदोषात् । न च धातुसंज्ञां विना वातीति प्रयोगासिद्धिः प्रयोगं विनाभेदघटितसादृश्यासिद्ध्या धातुत्वासिद्धिरित्यन्योन्याश्रय इति वाच्यम् । सिद्धे शब्दार्थसम्बन्धे इति भाष्येण वातीतिप्रयोगस्य सिद्धतयाऽन्योन्याश्रयाभावेनादोषात् ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

वस्तुतस्तु नञिवयुक्तमन्यसदृशाधिकरणे इति परिभाषायामन्यग्रह-णत्वेन सादृश्यं न भेदघटितमिति वासादृश्यस्य वाधातौ सुतरामुपपत्तिरित्यलम् ।

ननु भूपदार्थस्य प्रभृत्यर्थेऽन्वये वापदार्थस्य सादृश्यपदार्थेऽन्वये एकत्रान्वयित्वरूपसामर्थ्याभावाद् द्वन्द्वो न स्यादिति चेन्न ।

शत्रुं मित्रं विपत्तिं च जय रञ्जय भञ्जयेत्यादौ यथा यथासंख्यमन्वयस्तथान्याकरणेऽपि यथासंख्यान्वयसिद्धौ यथासंख्यसूत्रारम्भसामर्थ्येन एकधर्मावच्छिन्नस्य एकधर्मावच्छिन्ने एकधर्मावच्छिन्नसंसर्गेणान्वयः साहित्यमित्यभ्युपगम्यते इत्यदोषात् । एवं च अजाविधनौ देवदत्तयज्ञदत्तावित्यत्र यथा न ज्ञायते कस्याजाधनं कस्याविधनम् इति तद्वदिहापि स्यादिति यथासंख्यसूत्रमिति बोध्यम् ।

भूवावादौ येषामिति विग्रहस्य यन्निरूपितादित्ववान् भूः यत्प्रतियोगिकसादृश्यवान् वा इत्यर्थः समासस्य तु विशेष्यविशेषणभावव्यत्यासेन भूनिष्ठादितानिरूपकः वाप्रतियोगिकसादृश्यविशिष्ट इत्यर्थः । भूपदार्थस्य निष्ठत्वसम्बन्धेनादित्वे वापदार्थस्य च प्रतियोगित्वसम्बन्धेनसादृश्येऽन्वय इति बोध्यम् ।

ननु आदिपदे एकशेषो न स्यात् समानार्थकत्वाभावात्सरूपसूत्रे सरूपपदेन समानार्थकत्वस्यापि विवक्षणादिति चेन्न ।

अक्षा इत्यत्रेव तन्त्राश्रयणात् द्विवचनेऽचीतिवत्सौत्रत्वाद्वाऽदोषात् ।

नन्वेवमादिपदेन अर्थद्वयस्य क्रमेणोपस्थितौ मानाभावात् न यथासंख्यसूत्रप्रवृत्तिः । एकपदोपस्थापितयोरर्थयोः परस्परमुद्देश्यभावासम्भवेन भूवादयः क्रियावाचका इति उद्देश्यविधेयभावासम्भवश्चेति चेदुच्यते ।

भूवादय इत्यस्यावृत्त्या एकस्य भूप्रभृतयः अपरस्य क्रियावाचिन इत्यर्थस्य स्वीकारेणादोषात् प्रथमे वापदं द्वितीये भूपदं च परस्परसादृश्याश्रयणार्थम् । अन्यथा भूमिवाचिभूशब्दस्य विकल्पार्थकवाशब्दस्य च ग्रहणं स्यादिति । एवञ्च एकत्रान्वयित्वरूपं साहित्यमपि सुतरामुपपद्यते इत्यलम् ।

नन्वस्मिन् सूत्रे क्रियावाचिग्रहणं किमर्थम् ? ननु प्राणिन्युच्चरितभूश-

CC-0. Vasishtha Tripathi Collection. Digitized by eGangotri

च्वादस्मदाद्युच्चरितभूशब्दस्यभिन्नतयाधातुत्वानापत्तिरतः भ्वादिगणपठित-शब्दवृत्त्यानुपूर्वीमत्वं भ्वादिगणपठितत्वमिति स्वीकर्तव्यमतो याः पश्य-सीत्यत्रत्य या शब्देऽपि तादृशानुपूर्वीमत्वस्य सत्वेन धातुत्वापत्तिः । न च गतिगन्धनाद्यर्थनिर्देशो नियामकः तस्यार्थानादेशनादितिभाष्यपर्या-लोचनयाऽऽधुनिकत्वलाभात् ततश्च आतोधातोरित्यालोपापत्तिरिति वाच्यम् । भूवादयो धातव इति सूत्रस्य प्रतिपदोक्तपरिभाषया लाक्षणि-केऽप्रवृत्तेः । नच "नकारजावनुस्वारपञ्चमौ झलि धातुषु । सकारज-श्शकारश्चेषाद्दवर्गस्तवगज" इत्यभियुक्तोक्त्या भ्वादिषु लाक्षणिकाना-मपि ग्रहणमिति वाच्यम् । एवमपि याशब्दस्य धातुत्वेऽपि टापः स्त्रीत्व-रूपार्थनिमित्तकत्वेन वहिरङ्गतया आलोपे कर्तव्येऽसिद्धतया तत्प्र-भावात् । न च न तिसृचतसृ इति सूत्रारम्भेणार्थनिमित्तकत्वं वहिरङ्गत्वं नाश्रीयते तदाश्रयणेऽपि ततोऽपि वहिर्भूतसंख्यानिमित्तकविभक्तिनिमि-त्तकभसञ्ज्ञानिमित्तकत्वेन लोपस्यैव वहिरङ्गत्वमिति वाच्यम् । आतो-धातोरिति सूत्रे प्रतिपदोक्तस्याकारस्य ग्रहणेनादोषात । नच पशुंसनो-तीति विट् विड्वनोरित्यात्वे पशुष इति भाष्योदाहरणाद्वर्णग्रहणे प्रति-पदोक्तपरिभाषा न प्रवर्तते इति वाच्यम् । अनदः अदः सम्पद्यमानस्त-थाऽभवन अदोऽभवदिति प्रयोगे ओदिति प्रगृह्यत्ववारणाय प्रतिपदोक्त-परिभाषासंचारस्य भाष्यकृता कृतत्वेन वर्णग्रहणेऽपि तत्प्रवृत्तेरावश्य-कत्वात । एवं च प्रतिपदोक्तपरिभाषया, आतोधातोरित्यत्रातोनाप इति न्यासेन वा याः पश्यतीत्यत्र नदोषः इति चेन्न ।

क्रियावाचिग्रहणाभावे विकल्पार्थकवाशब्दस्य धातुत्वापत्तौ प्रातिप-दिकत्वाभावेन सुपोऽनुत्पत्या पदत्वाभावेन वाभवतीत्यत्रतिङ्ङतिङ इति निघातानापत्तः ।

नच अर्थवत्सूत्रेऽधातु ग्रहणं मास्तु तथाच वाशब्दस्य धातुत्वेऽपि प्रातिपदिकत्वसिद्धिरिति वाच्यम् । अहन् इत्यस्य प्रातिपदिकत्वापत्या नलोपः प्रातिपदिकान्तस्येति नलोपापत्तेः ।

ननु नलोपः प्रातिपदिकान्तस्येत्यस्य स्थाने तिङन्ततदादिभिन्नं यत्पदं तदन्तस्य नस्य लोप इत्यर्थकेन नलोपोऽतिङ इति न्यासेन अहन्नित्यत्र न दोषः । नचैवं न्यासे पर्युदासन्यायेन तिङन्ततदादिभिन्नधातुविहितप्रत्य-

CC-0. Vasishtha Tripathi Collection. Digitized by eGangotri

यान्तस्यैव नान्तस्य ग्रहणापत्तौ दण्डीत्यत्र नलोपो न स्यादिति वाच्यम्। टाङसीतिसूत्रे इनादेशे इकारप्रत्याख्यानप्रस्तावेऽनेनेत्यत्र हलि लोपमाशङ्क्य अनाप्यक इत्यत्र नलोपेन नकारप्रश्लेषपरभाष्यप्रामाण्येन पर्युदासन्यायाप्रवृत्याऽदोषादिति चेन्न।

रामानित्यत्र नलोपापत्तेः। नच नत्वविधानसामर्थ्यान्न नलोप इति न्यासस्सुवच इति वाच्यम् सर्वस्मिन्नित्यत्र नलोपापत्तेः। अत्र नकारोच्चारणसामर्थ्यान्ननलोप इति तु वक्तुमशक्यम् सर्वस्मिन्शयेत्यत्र शयवासवासिष्वकालादिति सप्तम्या अलुकि नलोपे संज्ञाविधौ नलोपस्यासिद्धत्वेन संयोगसज्ञायां ततः संयोगे गुरु इति गुरुसंज्ञायां गुरोरनृत इति प्लुतार्थं तस्यावश्यकत्वात्। नच नलोपः सुप्स्वरेति सूत्रे संज्ञाविधाविल्यस्य दण्डिदत्तौ दत्तदण्डिनावित्युदाहरणदानपरभाष्येण घिसंज्ञाया एव तत्र सज्ञापदेन ग्रहणमिति स्पष्टं शेखरे। एवञ्च नकारोच्चारणस्य न चारितार्थ्यमिति सामर्थ्यान्नलोपवारणसम्भवे न्यासः सम्यगिति वाच्यम्। एधेरन् पचेरन् इति सतत यस्मिन्व्यापारेऽभिधीयते स एधेरन्पचेरा व्यापारः तत्र विनापि प्रत्ययमिति पूर्वपदस्य लोपे पचेरा इत्यत्र नलोपानापत्तेः। नचानुमानिकस्थान्यादेशभावमाश्रित्य स्थानिवद्भावेन पचेरा इत्यत्र तिङन्ततदादिभिन्नत्व सत्वान्नदोष इति वाच्यम्। शास्त्रीयैकपदशक्यतवरूपशास्त्रीयधर्मत्वस्य तिङन्ततदादिभिन्नत्वेऽसत्वेनातिदेशाभावादिति नलोपोऽतिङिति न्यासस्य कर्तुमशक्यतया अहिन्नित्यर्थमर्थवत्सूत्रेऽधातुग्रहणमावश्यकमिति वाभवतीत्यत्र निघातसिध्यर्थं क्रियावाचिग्रहणं चावश्यकमित्यवधेयम्।

ननुभूवादयोधातव इत्यत्र क्रियार्थाधातवः इति वादयोधातवः इति वा सूत्रमस्तु भ्वादिग्रहणं व्यर्थम्। नच हिरुगित्यस्य धातुत्वापत्तिः अव्ययेषु पाठस्तु अकजर्थः स्यादितिवाच्यम्। क्रियान्तराकाङ्क्षानुत्थापकतावच्छेदकधर्मवत्वरूपक्रियात्वस्य हिरुक्छब्दार्थेऽसत्वेन तस्य क्रियावाचकत्वाभावेनादोषात् इति चेन्न।

शिश्ये इत्यत्र एकादेशस्य भावार्थकस्य क्रियावाचकत्वेन धातुत्वापत्या आदेच उपदेशेऽशितीति आत्वापत्तेः।

ननु आदेच इतिसूत्रे धातुग्रहणास्वरसः ऋको भवः इति भवतो-

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

ऽपि अयं दोषः समानः। किञ्च असितीत्यस्य प्रसज्यप्रतिषेधत्वेऽपि सित्प्रत्वयोग्यस्यैवात्वविधानात् वासादृश्यस्य अन्यानभिहितक्रियावाचकत्वेन विवक्षणाद्वा नायं दोष इति चेत्तर्हि आणवयतीत्यादीनां धातुत्वापत्त्या शास्त्रविषयतया साधुत्वापत्त्या यत्र प्रयोगापत्तौ महदनिष्टापत्तेः। अयमाशयः साध्वनुशासनेऽस्मिन् शास्त्रे इति वृद्धिरादैच्सूत्रस्थभाष्यप्रामाण्येन पाणिनिसूत्राणां साधुत्वविधायकत्वम् इति गगर्यादिपदे इकोयणचीत्यादेः प्रवृत्तौ तस्यापि साधुत्वं स्यादिति यत्किञ्चिच्छास्त्रबोधितसाधुत्ववत्येव पाणिनिसूत्राणां प्रवृत्तिः कल्प्यते इति यच्छास्त्रं प्रथमं प्रवर्तते तस्य किंशास्त्रबोधितसाधुत्ववति प्रवृत्तिरिति चेत्सञ्ज्ञासूत्राणां यत्किञ्चिच्छास्त्राबोधितसाधुत्वकेष्वपि प्रवृत्तिः स्वीक्रियते। नचैवमथवस्सूत्रस्यापि असाधुषु प्रवृत्तिः स्यादिति वाच्यम्। अधातुरितिपर्युदासेन यत्किञ्चिच्छास्त्रबोधितसाधुत्वकेष्वेव तत्प्रवृत्तिस्वीकारात्। एवञ्च सञ्ज्ञासूत्राणि आवृत्त्या संज्ञाविधायकानि साधुत्वविधायकानि चेति क्रियार्था धातव इति सूत्रमाणवयतीत्यत्र क्रियावाचकप्रकृतेः साधुत्वं विदध्यादिति। ननु भूसत्तायामित्यादय एव साधुत्वविधायकानि स्युः न सञ्ज्ञासूत्राणीति नायं दोष इति चेन्न। अनेकवचनानां साधुत्वविधायकत्वे गौरवेण भूवादय इत्यादीनामेवसाधुत्वविधायकत्वस्यौचित्यात्। एवमपि अलंश्रमेणेत्यत्र श्रमेणेत्यस्य साधनक्रियावाचकतया धातुत्वापत्तेश्चेत्यलम्।

## सुप्तिङन्त पदम् ९

ननु तिप्तसझीत्यत्र तिशब्दमारभ्य सुपः पकारेण तिप्प्रत्याहारमाश्रित्य तिबन्त पदमित्येव सूत्रमस्तु। नच यासुटोऽपि तिबन्तर्गततया तदन्तस्य पदत्वापत्तौ भूयासुरित्यत्र सकारस्य रुत्वापत्तिरिति वाच्यम्। तिवघटकस्य स्वादेः प्रत्ययत्वेन तत्साहचर्येण, प्रत्ययाप्रत्यययोरिति परिभाषया वा प्रत्ययस्यैवग्रहणेन यासुटोऽग्रहणेनादोषात्। तिवादिविधायकसूत्रानन्तरमेव स्वौजसित्यस्य पठनीयतया यासुटो मध्येपठाभावेनादोषाच्च इति चेन्न।

पचतु भवतु इति सततं यत्राभिधीयते ते पचत् भवतवो व्यापाराः तत आचार्यकृत्[illegible] शप् गुणो[illegible] पूर्वरूपे पचतु

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

भवतोऽति इति भवति सिद्धान्ते यजादौ पूर्वं भं भवति मध्ये चेत्सुबन्तं तदपि भं भवतीति यचिभमित्यस्यार्थात् इदानीं मध्येचेत्तिवन्तं तदपि भं भवतीति सूत्रार्थेन भत्वात्पूर्वरूपानापत्तेः । नचेदानीमपि मध्ये चेत्सुबन्तं तदपि भं भवतीत्यर्थवर्णनान्न दोष इति वाच्यम् , सुप्तिङन्तमित्यत्र तिवन्तमिति न्यासे तिवन्तमित्यस्यैव लाभात् । नचासर्वनामस्थान इति पर्युदासेन अजादिस्वादावेव यचिभमित्यस्य प्रवृत्तिरिति न शपि भत्वप्राप्तिरिति वाच्यम् , पर्युदासन्यायाश्रयणे अणादावपि भत्वानापत्तेरित्यलम् ।

## इको गुणवृद्धी १०

नन्विदं सूत्रं किमर्थम् ? नच याता वातेत्यादौ सार्वधातुकार्धधातुकयोरिति गुणे यता वतेत्यनिष्टापत्तिरिति वाच्यम् , आतोऽनुपसर्गे कः इति सूत्रे कित्करणेन नाकारस्य गुणो भवतीति ज्ञापनेनादोषात् । अन्यथा गोद इत्यादौ अप्रत्यये गुणे अतोगुण इति पररूपे गोद इति सिद्धौ कित्करणमनर्थकं स्यात् । नच तुन्दशोकयोः परिमृजापनुदोरिति सूत्रे तुन्दपरिमृज इत्यत्र गुणाभावायोत्तरार्थं कित्करणमिति वाच्यम् , एवमपि गापोष्टगितिसूत्रे कित्करणस्य निरुक्तार्थे ज्ञापकत्वसम्भवात् । नच टप्रत्ययकरणे सामगायेत्यत्र आतोधातोरित्याकारलोपापत्तिः टक्प्रत्ययकरणे तु आतोलोप इति धात्वाकारस्य लोपेन प्रत्ययाकारस्य धात्ववयवत्वाभावान्न लोप इति वाच्यम् , टप्रत्ययकरणेऽपि श्रीपायेत्यत्रेव सन्निपातपरिभाषया आलोपवारणसम्भवात् । अतएव एओङ् सूत्रे सामगायेत्यत्रालोपव्यावृत्त्या टकः कित्करणस्य चारितार्थ्यमाशङ्क्य आकारसन्निपातमाश्रित्य प्रवृत्तो यादेशः सन्निपातपरिभाषया लोपं न प्रवर्तयति सुपि चेति दीर्घं तु कष्टायेति निर्देशात्प्रवर्तयत्येवेति कैयटेन समाहितम् ।

नच सामगायेत्यत्र ङेर्य इति यादेशोपजीव्यस्य ह्रस्वाकारस्य सुपिचेति दीर्घेण निवर्तितत्वेन दीर्घोत्तरं तदुपजीव्यानुवृत्तेरभावात् उपजीव्यविरोधस्यायुक्तत्वमिति न्यायमूलसन्निपातपरिभाषाया अप्रवृत्या आलोपः स्यादिति तद्वारणाय टकः कित्वमावश्यकम् , अत एव शुभंया शब्दे ङे विभक्तौ शुभंस्य इति रूपं माधव आह, एओङ् सूत्रस्थकैयटस्तु व्यञ्जन-

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

व्यावृत्त्यर्थं सूत्रमिति सिद्धान्ते स्थापनीयतया पूर्वपक्षिणोपन्यस्तस्य ज्ञापकस्य तात्पर्यवर्णनाय प्रवृत्त इति तद्विरोधोऽकिञ्चित्कर इति वाच्यम्,

ङेर्य इत्यत्र अतोभिस इत्यतः अत इत्यनुवर्तते अत्वं च मात्राकालिकत्वसमानाधिकरणात्वजातिमत्वमेवञ्च सामगायेत्यत्र दीर्घे जाते ङेर्य इति शास्त्रोपजीव्यस्य मात्रिकत्वस्य विनाशेऽपि अत्वमनुवर्तत एवेति लोपे उपजीव्यविघातः स्यादेवेति परिभाषाप्रवृत्तौ लोपवारणात् टकित्त्वं ज्ञापकमेवेत्यदोषात् । शुभंय्य इति वदन् माधवस्तु भ्रान्त एव सन्निपातपरिभाषया लोपःप्राप्तेः ।

नच अत्पदस्य तपरस्तत्कालस्येति सूत्रेण न मात्राकालिकत्वसमानाधिकरणात्वजातिमति शक्तिर्बोध्यते गौरवादपि तु अवर्णत्वव्याप्यात्वजात्यवच्छिन्ने एव, एवं च सामगायेत्यत्र दीर्घेण तादृशजातेर्निवर्तनात् ङेर्य शास्त्रीयमुपजीव्यं नानुवर्तते दीर्घे इति नोपजीव्यविघातकत्वं लोपस्येति परिभाषा न प्रवर्तेत एवं च शुभंय्येति माधवोक्तं सम्यगेव । अत एव ऋतइद्धातोरिति सूत्रे धातुग्रहणस्य मातॄणामिति प्रयोजनं भाष्योक्तं सङ्गच्छते । अन्यथा ह्रस्वनद्याप इति सूत्रे ह्रस्वपदेन मात्रिकत्वविशिष्टऋत्वावच्छिन्नस्यैव तुल्यन्यायादुपस्थित्या नामीति सूत्रेण सन्निपातपरिभाषां बाधित्वा दीर्घे मात्रिकत्वांशस्य नाशेऽपि विशेष्यभूतादृत्वांशस्यानुवर्तनात् इरादेशेन तस्यापि निवर्तनादुपजीव्यविरोधात्परिभाषयैवेत्ववारणसम्भवे धातुग्रहणस्य मातॄणामिति प्रयोजनदानपरं भाष्यमसङ्गतं स्यादिति वाच्यम्, अवर्णत्वव्याप्यात्वजातौ मानाभावेन तत्रात्पदस्य शक्तिकल्पनायोगादिति अत्पदेन मात्रिकत्वसमानाधिकरणात्वजात्यवच्छिन्नस्यैवोपस्थानात् लोपेन विशेष्यभूतात्वांशस्य निवर्तनेन उपजीव्यविघातकतया सन्निपातपरिभाषाप्रवृत्तेरवारणात् । ऋतइद्धातोरिति सूत्रभाष्यं तु स्वप्रवृत्तेः प्राक् स्वनिमित्तभूतो यः सन्निपातः तादृशसंन्निपातविघातकस्य स्वयमनिमित्तमित्यर्थस्य परिभाषेन्दुशेखरे वर्णनीयतया प्रकृते इत्वं प्रति प्रत्ययस्य कथञ्चिन्निमित्तत्वेऽपि ह्रस्वसन्निपातनिमित्तकस्य नुडागमस्यानिमित्ततया परिभाषाया अप्रवृत्त्या सम्यगेवेति ध्येयम् ।

नच अकारः आकारो न, आकारोऽकारो नेति प्रतीतिरात्वजातौ

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

मानमिति अवर्णत्वव्याप्यात्त्वजात्यवच्छिन्ने एवात्पदस्य शक्तिरिति उपजीव्यविरोधाभावान्नपरिभाषाप्रवृत्तिरिति कित्करणमालोपवारणायावश्यकमिति कथं ज्ञापकतेति वाच्यम्, त्वदुक्तप्रतीतेः ह्रस्वत्वसमानाधिकरणात्वजातिविषयकत्वेनाप्युपपत्त्या तादृशजातौ मानाभावात्। अन्यथा कृशत्वस्थूलत्वादिगुणभेदेन घटत्वव्याप्यापि काचिज्जातिः सिध्येतेति ज्ञापकत्वं सुस्थमेवेत्यदोषात्।

नच यादेशं प्रति ह्रस्वत्वसमानाधिकरणत्वं निमित्तावच्छेदकमिति निमित्ततावच्छेदकशून्ये निमित्ततायां मानाभाव इति दीर्घेण निमित्तविनाशे दीर्घाकारे यादेशीयनिमित्तताया अभावेन न लोपस्य यादेशीयनिमित्तविघातकत्वमिति वाच्यम्, धनिनं देवदत्तमुपजीव्य वृद्धस्य यज्ञदत्तस्यदेवदत्तनाशकत्वे तद्धननाशकत्वे वोपजीव्यविघातकत्वस्य स्पष्टतया प्रकृते लोपेन कारणतावच्छेदकनाशे कारणीभूतव्यक्तिनाशे वा यादेशनिमित्तविघातकत्वसत्वात्परिभाषाप्रवृत्तौ बाधकाभावात्।

ननु सामगायेत्यत्रालोपस्य सन्निपातपरिभाषया वारणेऽपि प्रियाः सामगा यासां ताः प्रियसामगाः पश्येत्यत्र टापैकादेशस्य पूर्वान्तवद्भावेन धातुत्वे आतोधातोरिति लोपवारणाय टकः कित्वमावश्यकम्। नच प्रतिपदोक्तपरिभाषया निर्वाहः अदोऽभवदित्यत्रौदिति प्रगृह्यत्ववारणाय वर्णग्रहणेऽपि तत्प्रवृत्तेः भाष्यतो लाभादिति वाच्यम्, पशुष इति भाष्योदाहरणेन आतोधातोरिति सूत्रे प्रतिपदोक्तपरिभाषाया अप्रवृत्तेः, वर्णग्रहणे तत्प्रवृत्तौ ज्ञापयतीत्यत्र पुगागमानापत्तेश्च ओत्सूत्रस्थं भाष्यं त्वेकदेशि गौणमुख्यन्यायेनैव अदोऽभवदित्यत्र प्रगृह्यत्ववारणसम्भवात् किंच यस्य लक्षणप्रवृत्तिं विना न सम्भवस्तस्यैव लाक्षणिकस्य तत्परिभाषाविषयत्वम् अत एव खट्वाय इत्यत्र याट् अन्यथा प्रतिपदोक्तपरिभाषया बहुदामायै इत्यत्रैव स्यादिति चेन्न।

आतोऽनाप इति न्यासेनैव प्रियसामगाः इत्यत्र दोषाभावेन टकः कित्वस्य ज्ञापकत्वे बाधकाभावात्।

न च ग्लायति ग्लायतीत्यादौ गुणाभावापत्तौ गुणवृद्धी इति सूत्र-

CC-0. Kashmir Tripathi Collection. Digitized by eGangotri

मावश्यकमिति वाच्यम्, ऐकारोच्चारणसामर्थ्येन सन्ध्यक्षरस्य गुणाभावकल्पनात् ।

नच ऐकारोच्चारणसामर्थ्येन गुणाभाववारणे आयादेशोपि न स्यादिति वाच्यम्, यं प्रत्युपदेशोऽनर्थकः तस्यैव निवर्तकः आयादेशस्य तु निमित्तमेवेति भाष्येणैव दत्तोत्तरत्वात् ।

नच पेचिथेत्यत्र पुगन्तेति पकारोत्तरवर्त्यकारस्य गुणे न शसददेति एत्वनिषेधः स्यादतः सूत्रमिति वाच्यम्, शसददसाहचर्यात् गुणावयवीभूताकारस्यैव ग्रहणेन शशरिथेत्यादावेव तन्निषेधाङ्गीकारात् । नच सिद्धान्तेऽपि लुलविथेत्यादौ अवादेशस्य गुणशब्देन भावितौकारप्रयोज्यत्वेन निषेधानापत्तिरिति वाच्यम् । अच- परस्मिन्नित्यनेन निर्वाहात् । नचाचिकीर्षीदित्राल्लोपं बाधित्वा सिचिवृद्धिः स्यादिति वाच्यम्, ण्यल्लोपाविति वार्तिकेन अल्लोपेनादोषात् ।

नच पचतीत्यत्र चकारस्य सार्वधातुकार्धधातुकयोरित्येकाररूपगुणापत्तिरिति वाच्यम्, सप्तम्यां जनेर्ड इति सूत्रे डित्करणेन व्यञ्जनस्य गुणो न भवतीति कल्पनेनादोषात् । अन्यथा सरसिजमित्यत्र प्रमाणकृतान्तर्येण नकारस्याकाररूपे गुणे पररूपे सरसिजमिति सिद्धौ डित्करणं व्यर्थं स्यात् । नच नकारस्यान्तरतम्यादनुनासिकाकारो गुणेन भविष्यति लोपे तु नेति वाच्यम्, पररूपेण उपस्थितपरस्थान्यन्तरतमशुद्धाकारस्यैव विधानेनादोषात् । नच अन्येषामपि दृश्यते इत्यत्रानुवृत्त्यर्थे डविधान तेन आमग इति सिध्यति अकरणे तु मकारस्य स्थानत आन्तर्यादोकारो गुणः स्यादिति वाच्यम्, तनोतेर्डडः सन्वच्चेति सूत्रे डित्करणेन व्यञ्जनस्य गुणो न भवतीति ज्ञापनेनादोषात् ।

नच सूत्राभावे मिदेर्गुण इति गुणोऽन्तस्य स्यादिति वाच्यम्, मिदइर्मिदिः तस्य मिदेरिति स्वीकारेण मिदेरिकारस्य गुण इत्यर्थेनादोषात् ।

नच मृजेर्वृद्धिरिति अन्त्यस्य वृद्ध्यापत्तिरिति वाच्यम्, मृजेर्वृद्धिरचोञ्णिति इति संहितापाठे मृजेर्वृद्धिरचः इति योगविभागेनादोषात् । नचैवमपि अमार्ट् इत्यत्र अटोऽपि वृद्धिः स्यादिति वाच्यम्, अनन्त्यविकारे अन्त्यसदेशस्येति परिभाषया अटो वृद्धिवारणात् ।

नच पुगन्तलघूपधस्य चेत्यनेन सर्वस्यैव गुणः स्यादलोन्त्यस्येति

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

अन्त्यस्यैव वा स्यादिति वाच्यम्, पुकि अन्तः पुगन्तः लघ्वी चासौ उपधा लघूपधेति समासाङ्गीकारेण अङ्गावयवो यः पुकि अन्तः लघुभूता उपधा तयोर्गुणः सार्वधातुकार्धधातुकयोरित्यर्थेनादोषात्। नचैवं यापयतीत्यादौ गुणापत्त्या यपयतीति स्यादिति वाच्यम्, गुणोत्तरं वृद्ध्या रूपसिद्धेः। नच जाग्रो विचिण्णल्ङित्सु इति सूत्रे णल्ग्रहणेन गुणोत्तरा वृद्धिर्नेष्यते अन्यथा गुणे जाने वृद्ध्या जजागार इति रूपसिद्धौ तद्ग्रहणं व्यर्थं स्यादिति कथं यापयतीत्यस्य सिद्धिरिति वाच्यम्, समयाच्च यापनायामिति निर्देशेन गुणोत्तरा वृद्धिर्नेष्यते इत्यस्य जागृधातुमात्रविषयत्वकल्पनात्।

नच ऋदृशोऽङि गुणः इति दृशेः शकारस्यैव गुणापत्तिः स्यादिति वाच्यम्, उरङि गुणः ततो दृशेः उरित्यनुवर्तते दृशेः ऋकारस्य गुण इत्यर्थकरणेनादोषात्।

नच ऋच्छत्यृतामित्यनेन ऋच्छतेश्छकारस्य गुणापत्तिरिति वाच्यम्, ऋच्छतिऋऋतामिति प्रश्लेषेण ऋच्छतेर्ऋकारस्य ऋधातोः ऋतां च गुणः स्यादित्यर्थेनादोषात्।

नच स्थूलदूरेति सूत्रेण द्वेपिष्ठः द्वोदिष्ठ इत्यत्र पकारदकारयोरेव गुणः स्यादिति वाच्यम्, स्थूलदूरह्रस्वानां यणादिपरमिति क्षिप्रक्षुद्रयोः पूर्वस्य च गुण इति योगो विभज्यते क्षिप्रक्षुद्रयोरित्यत्र यणादिपरमित्यनुवर्तते तत्र यणः आदिः यणादिः तस्मात्परं लुप्यते यणादेर्दकारात्पकाराच्च पूर्वस्य गुण इत्यर्थेनादोषात्। स्थविष्ठ इत्यत्रौर्गुण इत्यनेनैव गुणः असिद्धवदत्राभादिति तु अनित्यत्वान्नप्रवर्तते इति बोध्यम् इति चेन्न

उणादीनामव्युत्पन्नतया तनोतेर्डउः सन्वच्चेति सूत्रेण व्यञ्जनस्य गुणो न भवतीति कल्पनाया कर्तुमशक्यतया पचतीत्यत्र गुणवारणाय, अनन्त्यविकारपरिभाषाया ष्यङः संप्रसारणमिति सूत्रे प्रत्याख्याततया अमार्डित्यत्राटो वृद्धिवारणाय च इको गुणवृद्धी इति परिभाषाया आवश्यकत्वात्। भिन्नमित्यादौ निषेधप्रवृत्तये इग्लक्षणत्वसम्पत्त्यर्थं चास्या आवश्यकत्वम् अन्यथा लैगवायनः कामयते इत्यत्र गुणवृद्ध्योर्निषेधो मा भूदित्यर्थम् इग्लक्षणगुणवृद्ध्योरेव क्ङिति चेति निषेध इत्यस्यावश्यमभ्युपगन्तव्यतया पुगन्तस्यस्यानिग्लक्षणत्वात्क्ङिति चेति निषेधो न स्यादित्यलम्।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

अत्र सूत्रे पूर्वसूत्राभ्यां शब्दपरयोः गुणवृद्धिपदयोरनुवृत्त्या तृतीयान्तत्वेन विपरिणम्य गुणशब्देन विहितो यो गुणः वृद्धिशब्देन विहिता या वृद्धिरिति योजनया गुणवृद्धिशब्दाभ्यां यत्र गुणवृद्धी विधीयेते तत्रेक इति षष्ठ्यन्तं पदमुपतिष्ठते इत्यर्थो लभ्यते ।

ननु यत्र गुणवृद्धी विधीयेते तत्रेक इति षष्ठ्यन्तं पदमुपतिष्ठत इत्येव सूत्रार्थोऽस्तु योजनया व्याख्यानमफलम् । नच तथासति त्यदादीनाम इत्यत्रास्या उपस्थितौ स इत्यत्रात्वं न स्यात् इदम् शब्दे इकारस्य स्यादिति वाच्यम्, द्वींदमोर इत्येव सिद्धे त्यदादिग्रहणसामर्थ्येन तत्र परिभाषाऽप्रवृत्तिकल्पनात् । नच संज्ञोपसर्जनयोरत्वाप्रवृत्त्यर्थं तदोः सः सावित्यत्रानुवृत्त्यर्थं च त्यदादिग्रहणं चरितार्थमिति वाच्यम्, एवमपि इदमोम इति सूत्रस्यैव त्यदादिसूत्रे परिभाषाऽप्रवृत्तौ मानत्वात् । नच इदम्राजते इदम्ह्लयतीत्यादौ मकारस्यानुस्वारव्यावृत्त्यर्थमिदमोम इति सूत्रमावश्यकमिति वाच्यम्, नेदमदसोरकोरिति सूत्रस्य त्यदादिसूत्रे इक्परिभाषानुपस्थितौ मानत्वात् । नच दिवऔदिति सूत्रे परिभाषानुपस्थित्यर्थं योजनया व्याख्यानमिति वाच्यम्, दिवो वः दिव इति लोपोव्योरिति लोपेन वकारं प्रश्लिष्य तत्रादोषात् इति चेन्न ।

पथिमथ्यृभुक्षामादित्यत्र परिभाषाऽप्रवृत्त्यर्थं योजनया व्याख्यानस्यावश्यकत्वात् । नचात्रेक्परिभाषोपस्थितावकारं विधाय सर्वनामस्थाने चासंबुद्धाविति दीर्घेण सिद्धे आकारविधानान्नेक्परिभाषोपस्थितिरिति वाच्यम्, हे पन्था इत्यत्र दीर्घापत्त्याऽऽत्वविधानस्य चारितार्थ्यात् । नच इत आत्सर्वनामस्थाने इति न्यासेन सिद्धे पथिमथीति सूत्रेणात्वविधानं परिभाषाऽप्रवृत्तौ ज्ञापकमेवेति वाच्यम्, वेदे ऋभुक्षणं ऋभुक्षाणमिति रूपद्वयं वा षपूर्वस्य निगम इति सूत्रेण भवति आत्वविधाने तन्न स्यादिति अत्वविधानस्यावश्यकत्वात् । नचेतोऽत्सर्वनामस्थान इत्यत्र इत्ग्रहणात् पथिमथीतिसूत्रे नेक्परिभाषोपस्थितिरिति वाच्यम्, पन्थियाविथ्यात्रात्ववारणाय इद्ग्रहणस्य चारितार्थ्यात् । नचेयङिकृतेऽत्वं भवत्येति वाच्यम्, सन्निपातपरिभाषया स्वातिरिक्ततद्विघातस्य बाधेनादोषात् । यदि त्वल्लोपस्य स्थानिवत्वान्नात्रात्वप्राप्तिः । नच नपदान्तेति निषेधः अनान्ततया नः क्ये इति नियमेन संज्ञाविधौ नलोपासिद्धत्वेन चकारान्ते पद-

CC-0. Prof. Satya Vrat Shastri Collection. Digitized by eGangotri

त्वाभवात्। एतेन पदान्तत्वादिकोऽसवर्ण इति ह्रस्वेऽत्वं दुर्वारमित्यपास्तमित्युच्यते तदा अनेकत्रानेकक्लिष्टकल्पनया दोषवारणापेक्षया योजनया व्याख्यानमेव सम्यमिति दिक्।

ननु इको गुणवृद्धी इति सूत्रं मास्तु अचश्चेति सूत्रे गुणवृद्धी इति पठित्वा ऊकालोऽजित्यतः अच् इत्यस्य चानुवृत्त्या यत्र गुणवृद्धिह्रस्वदीर्घप्लुतशब्दैरज्विधीयते तत्राच इति षष्ठ्यन्तं पदमुपतिष्ठते इति व्याख्यानेन सिद्धेः। नच यातेत्यत्र गुणापत्तिः, गापोष्टगिति सूत्रे कित्करणेन नाकारस्य गुणो भवतीति कल्पनेनादोषात्। नच ग्लायतीत्यादौ गुणापत्तिः ऐकारोच्चारणसामर्थ्येन सन्ध्यक्षरस्य न गुण इति कल्पनेनादोषात्। नच पेचित्यत्राकारस्य गुणे न शसददेति एत्वाभ्यासलोपयोरभावः स्यादिति वाच्यम्, थलि च सेटीति सूत्रारम्भसामर्थ्येन निषेधाप्रवृत्तेः। नचेग्ग्रहणं क्ङितिचेत्यर्थं इदानीमज्ग्रहणानुवृत्तौ अजूलक्षणयोरेव निषेधापत्तौ अचोञ्णितीत्यस्यापि निषेधापत्तिरिति वाच्यम्, अचो ञ्णिति सूत्रे क्ङिताभावेन लैगवायन इत्यत्र सामर्थ्यात्क्ङितिचेत्यस्य निषेधाभावेन गित्साहचर्येण धात्वधिकारविहितक्ङितोर्ग्रहणेनादोषादिति चेन्न।

कामयते इत्यत्र वृद्ध्यभावापत्तेः।

केचित्तु इकस्तावित्येव सूत्रमस्तु शब्दाधिकाराश्रयणेन यत्र गुणवृद्धी विधीयेते तत्रेक इति षष्ठ्यन्तं पदमुपतिष्ठते इतिसूत्रार्थः। नच त्यदादीनामित्यादावुपस्थित्या स इत्यादौ दोषः। न यासयोरिति निर्देशेन नेदमदसोरकोरितिसूत्रारम्भेण दिव इत्यत्र वकारप्रश्लेषेण इतोऽत्सर्वनामस्थान इति सूत्रारम्भेण न त्यदादीनामित्यादाविक्परिभाषोपस्थितिकल्पनेनादोषात्। वस्तुतस्तु तावित्यपि व्यर्थम् संपूर्णं पूर्वसूत्रद्वयमनुवर्त्य यत्र गुणशब्देनादेङ् वृद्धिशब्देनादैच् विधीयते इति व्याख्यानेन सकलेष्टसिद्धेः इति वदन्ति।

परेतु न धातुलोपइत्यादावनुवृत्त्यर्थं गुणवृद्धिपदम्। संज्ञासूत्राभ्यामनुवृत्त्या तु न निर्वाहः तत्रः तयोः शब्दपरत्वादिति वदन्ति।

## अलोऽन्त्यस्य ॥ ११ ॥

अत्र केचित् अलोऽन्त्यस्य, ङिच्च, अनेकाल्शित्सर्वस्येति सूत्रत्रयं किमर्थम् ङिदलोऽन्त्यस्य, अशिदनेकाल् इति सूत्रद्वयमस्तु आद्यस्य

CC-0. ... Tripathi Collection. Digitized by eGangotri

ङिद्लोन्त्यस्य भवतीत्यर्थः । द्वितीयस्य शिद्भिन्नोऽनेकाल्भिन्नश्चान्त्यस्यालो भवतीत्यर्थः । सर्वस्येत्यस्य ङिच्चेत्यत्र चकारस्य चाकरणेन लाघवम् ततः आदेः परस्येत्यस्य परशब्दोच्चारणेन परस्य विहितो यः शिद्भिन्नोऽनेकाल्भिन्नश्चादेशः स आदेर्भवतीत्यर्थः । एवं च शित् अनेकाल् चादेशः सर्वस्य स्यादेवेति वदन्ति ।

ननु तस्मादित्युत्तरस्यादेरित्येव सूत्रमस्तु परस्य ग्रहणं मास्तु तत्र तस्मादित्युत्तरस्येत्येकं वाक्यम् आदेरित्यपरम् तत्रोत्तरस्येत्यनुवर्त्यावर्तते उत्तरशब्दोच्चारणेन विहितं कार्यमुत्तरस्यादेर्बोध्यमित्यर्थः, तेन नित्यं ङित इत्यत्र न दोषः चेन्न ।

आदेः परस्येत्यत्र तथान्यासे आदेरित्यंशे स्थानषष्ठयाः सम्बन्धे तस्मादित्युत्तरस्येत्यत्रापि तत्संवन्ध इति तस्यापि आगमविषयेऽप्रवृत्यापत्तेः, असम्बन्धे आदेरित्यस्य आगमविषये प्रवृत्यापत्तौ देवास इत्यत्र आज्जसेरसुगिति जसोऽकारात्परमाद्यन्तौ टकिताविति असुकि सकारस्य संयोगान्तलोपे देवा इत्यनिष्टापत्तेः । नच तत्र आज्जसेरसुडिति न्यासान्न दोषः इति वाच्यम्, तस्यैवाश्वक्षीरवृषेत्यत्रानुवृत्या अश्वादिभ्यः पूर्वमसुडापत्तेः क्यच इति षष्ठ्यन्तं पठित्वा क्यच एव असुटो विधाने तु असुड्विशिष्टे क्यच्त्वात्क्यचिचेतीत्वापत्तेः, क्यच्यसुगित्युक्तौ तु लाघवाभावः तस्मादित्युत्तरस्येत्यत्र तथान्यासे अष्टौ इत्यत्र परत्वादादेः परस्येत्यस्य प्रवृत्तौ सर्वादेशत्वानापत्तेरित्यलम् ।

## अनेकाल् शित्सर्वस्य ॥ १२ ॥

नन्वानेकाल् शित् इति तु न सूत्रितम् तथासति अनन्तरस्येति न्यायात् आदेः परस्येत्यस्यैव बाधकं स्यात् नत्वलोन्त्यस्येत्यस्येति शेखरे उक्तम्, अयं भावः—तथा सति णलादयोऽन्त्यस्य भविष्यतीति । नचैवं ङिच्चेति सूत्रं व्यर्थं स्यात् अनेकाल्विषयेऽपि अलोन्त्यस्येत्यस्य निर्बाधादिति तत्सामर्थ्येन अनन्तरस्येति न्यायो न प्रकृते प्रवर्तत इति एवञ्चोक्तयोगः अलोन्त्यस्यादेःपरस्येत्युभयोर्बाधक इति वाच्यम्, ज्ञानगौरवापत्तेः ।

ननु ङिच्चेति सूत्रं नियमार्थं ङिदेवानेकालन्त्यस्येति एवं च अनेकाल्सूत्रेऽनेकालग्रहणं व्यर्थमिति चेन्न । अतो भिस ऐसिति सूत्रेण आदेःपरस्येति आदेरादेशापत्तेः ।

CC-0. Vasishtha Tripathi Collection. Digitized by eGangotri

## इको यणचि ॥ १३ ॥

नन्वस्मिन् सूत्रे इग्ग्रहणं व्यर्थम्। नच अग्निचिदत्रेत्यादौ यणापत्तिरिति वाच्यम्, ह्रस्वस्य पितीत्यतः ह्रस्वपदं दीर्घादित्यतः षष्ठ्यन्तत्वेन विपरिणम्य दीर्घपदं चानुवर्त्त्य ह्रस्वदीर्घयोर्यण् स्यादची त्यर्थेनादोषात्। नचैवं पादान्ताद्वेत्यत्रापि ह्रस्वस्य सबंधाद्दधिच्छादयतीत्यत्र वैकल्पिकतुगापत्तिः छेचेति तु अपदान्ते नित्यतुगर्थं चरितार्थमिति वाच्यम्, ह्रस्वस्येत्यस्य मण्डूकप्लुत्या इकोयणचीत्यत्र संबन्धाङ्गीकारेणादोषात्। नच हरये कृष्णैकत्वम्, दैत्यारिरित्यादौ यणापत्तिरिति वाच्यम्, अपवादैरयादिभिर्बाधेनादोषादिति चेन्न।

तितउशब्दे तनोतेडउ इति सूत्रनिष्पन्ने ड इत्येव वक्तव्ये डउइतिकरणादपवादगुणस्याप्रवृत्या यणापत्तेः। डउ इतिकरणाद्गुणस्येव यणोऽपि निवृत्तिस्तु न शङ्क्या अकारान्तरतमयणोऽभावेन चतुर्णामपि पर्यायेण प्रवृत्या तथाकर्तुमशक्यत्वात्। नच यणं बाधित्वा प्राप्तस्य गुणस्य डउसामर्थ्येन वारणे देवदत्तहन्तृहतन्यायेन यणोऽप्राप्तिरिति पाच्यम्, तौ सदित्यत्रेव प्रकृते तन्न्यायविषयाभावेन वृद्धेरिव यणोऽपि दुर्वारत्वात्। चिनुहि अत्र, सुतनु इति, करभोरु इति इत्यादिषु अप्लुतवदुपस्थिते, ईचाक्रवर्मणस्येति प्लुतवद्भावेपि प्लुतस्य यणनापत्तेश्च। नच प्लुतस्यासिद्धत्वाद्यण्सिद्धिरिति वाच्यम्, प्लुतप्रगृह्या इत्यत्र प्लुतग्रहणसामर्थ्येन "प्लुतः स्वरसंधिषु सिद्धः," इति ईदूत् सूत्रे भाष्ये कण्ठरवेणैवोक्ततया प्लुतस्य यणि असिद्धत्वासम्भवात्। नच प्लुतप्रगृह्या इति प्लुतग्रहणेन प्रकृतिभावे एव सिद्धत्वं कल्प्यतामिति वाच्यम्, ई चाक्रवर्मणस्येत्यत्र ई ग्रहणस्य प्रत्याख्यानात्। एहि कर्तृ आशा इत्यत्र अप्लुतवद्भावे यणि उदात्तत्वविशिष्टप्लुतस्य स्थाने यणो जातत्वेन उदात्तस्वरितयोरिति स्वरो भवति, इदानीं तदनापत्तेः। नच कर्तृशब्दस्य चित इत्यन्तोदात्तत्वेन प्लुतस्यासिद्धत्वेपि उदात्तस्वरितयोरिति स्यादेवेति वाच्यम्, तृन्नन्तकर्तृशब्दे दोषापत्तेः तृजन्तेऽपि आमन्त्रिस्येति आष्टमिकनिघातेनानुदात्ततया दोषापत्तेश्च। एहिदण्डिन्यासेत्यत्र ङीपोऽनुदात्ततया प्लुतविनोदासंभतत्वादुदात्तस्वरितयोरिति स्वाप्रवृत्तेः फलत्वाच्च।

नन्नु अप्लुतवदुपस्थिते इत्यत्र अप्लुते इवति अप्लुतवत् इत्यर्थेन

CC-0. Vasishtha Tripathi Collection. Digitized by eGangotri

प्लुत अप्लुतवत् कार्यं लभते इति कार्यादेशाङ्गीकारेण चिनुहि अत्र इत्यत्र न दोषः । नच अप्लुतवदुपस्थिते इत्यादिभिः कार्यातिदेश एव-क्रियते इत्यङ्गीकारे अग्नी इतीत्यादौ प्रगृह्यसंज्ञानिमित्त प्रकृतिभावं प्रबाध्य परत्वाद्यणादिकमेवस्यादिति वाच्यम् , अतिदिश्यमानकार्याणा-मुत्पत्तिदेश एव देश इत्यङ्गीकारेण परत्वात्प्रगृह्याश्रयप्रकृतिभावस्यैव सत्वात् इति चेन्न ।

इकोयणेव यथा स्यादन्यन्माभूदित्येतदर्थमिग्ग्रहणस्यावश्यकत्वा-त् । अन्यच्चात्र शाकलं तस्य नात्यन्तं बाधः आरम्भसामर्थ्यादपितु सि-ति समासे एव तेन सिति च न समासे इति नापूर्वं वार्तिके इति केचित्।

वस्तुतस्तु ह्वातेर्यङन्तात्क्विचि यातिरित्यत्राकारस्य स्थानिवत्वेनाच्पर-त्वादाकारस्य यण्वारणाय इग्ग्रहणम्। दीर्घगुणयोस्तु न प्राप्तिः पूर्वस्यैव वि-धौ स्थानिवत्वं न तु पूर्वपरयोर्विधाविति विधिग्रहणसामर्थ्येन लाभेन तत्र स्थानिवत्वाप्रवृत्तेरिति बोध्यम् ।

एतेन इको यणचीत्यत्राको यणचि इत्येवास्तु अकः सवर्णे इत्यत्र अग्रहणं च मास्तु इतोऽनुवृत्त्यैव सिद्धेः सवर्णाचि दीर्घेण अकारादचि गुणवृद्धिभ्यां बाधेन सर्वेष्टसिद्धिरित्यपास्तम्। यातिरित्यत्र यणापत्तेः । न-च अभ्यासकार्ये तदुत्तरखण्डाजादेशो न स्थानिवदिति निषेधान्नदोष इति वाच्यम् , तदुत्तरखण्डाजादेशस्य स्थानिवत्वनिषेधेऽपियङोऽकारस्य स्थानिवत्त्वेन अभ्यासकार्यप्रतिबन्धकीभूततदुत्तरखण्डाजादेशो न स्था-निवदित्येवंकल्पनस्यैव सत्वेन उत्तरखण्डाजादेशस्य स्थानिवत्वे च यणा-पत्तेरिति दिक् ।

ननु अस्मिन्सूत्रे अचि ग्रहणं किमर्थम् । नच दधि हरतीत्यादौ यणा-पत्तिरिति वाच्यम् , तथा सति यदि हलि परतोऽपि यणादेशः स्यात् त-र्हि पक्ता इत्यत्र इत्यपि यणादेशे लोपोव्योरिति लोपे पक्तेत्यस्य सिद्धौ इ-ड्निषेधकरणमयुक्तं स्यादिति एकाच उपदेशेऽनुदात्तादिति सूत्रारम्भसा-मर्थ्येन हलि परतो यणभावकल्पनेनादोषात्। नचैवं भवितेत्यादावपि यणाप-त्त्या इड्विधानसामर्थ्येन इटो यण न भवतीति कल्पेन पक्तेत्यादौ इटः अव-णवारणाय एकाच इति सूत्रं चरितार्थम् इति वाच्यम् , अचेतीदित्यादौ इट इटीति सूत्रेण तदप्राप्तियोग्ये ऽचारितार्थ्यरूपबाधबीजेन यणशास्त्रस्य बा-

CC0. Vasishtha Tripathi Collection, Digitized by eGangotri

धेन पश्चाद्दीर्घेण बाधात् इड्विधेश्चारितार्थ्येन यणभावकल्पकत्वायोगात्। नच तावन्मात्रप्रयोजनकत्वे इट् सिच इत्येव वक्तव्ये सामान्यत इड्विधानं यणभावकल्पकमिति एकाच इत्यस्य ज्ञापकत्वायोग इति वाच्यम्, ग्रहीता ग्रहीष्यतीत्यादौ ग्रहो ऽलिटीति दीर्घेण बाधाद्यणो ऽप्राप्त्या तत्रेटः प्रवृत्त्यर्थं सामान्यतः सूत्रप्रणयनस्यावश्यकत्वात्। नच तावतापि इट् सिचः आर्धधातुकस्य वलादेर्ग्रहः अलिटि दीर्घ इति न्यासेन सिद्धेः सामान्यत इड्विधानमिटोयणभावकल्पकमेवेति वाच्यम्, तरीता वरीतेत्यादौ वृतोवेति दीर्घेण बाधाद्यणो ऽप्राप्त्या तत्रेटः दीर्घो भवति राद्धान्ते, इदानीं ग्रहेरेवेड्विधानाङ्गीकारेण तरतेर्वृञश्चेटो ऽभावेन तयोरसिद्ध्यापत्तेः। नच वृतोवेति इटो दीर्घविधानसामर्थ्यादेव तत्रेड्भविष्यतीति वाच्यम्, एवमपि आर्धधातुकस्य वलादेर्ग्रह इति न्यासाङ्गीकारे शेकिथ पेचिथेत्यादेरसिद्ध्यापत्तेः इटो ऽभावेन थलि च सेटीत्यस्याप्राप्तेः। यथाश्रुतन्यासे तु यणपवादः एत्वाभ्यासलोपौ इति लक्ष्यसिद्धिरप्रत्यूहेति बोध्यम्। एवं च एकाच इति ज्ञापकं सम्यगेवेति न दधि हरतीत्यादौ दोषः। नच दीधीवेवीटामिति सूत्रे इड्ग्रहणप्रत्याख्यानमार्धधातुकस्येड्वलादेरिति सूत्रे नेड्वशिकृतीति सूत्रादिटमनुवर्त्य इट इडेव यथा स्यादिति व्याख्यानेन भाष्यकृता कृतमिति तत एव इटो यण् न भविष्यतीति एकाच इति सूत्रस्य यणभावकल्पकत्वमिति वाच्यम्, इट इडेवेत्यङ्गाधिकारे कृतनियमेनाङ्गाधिकारीयस्य गुणस्य बाधेन चारितार्थ्येनानाङ्गयणादिबाधकत्वायोगात्। अन्यथा अचेतीदित्यादौ दीर्घोऽपि न स्यात् सिज्लोप एकादेशःसिद्धो वाच्य इति सामर्थ्येन तादृशनियमेन न दीर्घबाध इति कल्पनापेक्षया आङ्गस्य बाधक इति कल्पनाया एवौचित्यादिति एकाच इति ज्ञापकेन दधि हरतीत्यादौ न दोष इति अचिग्रहणं व्यर्थमेवेति चेन्न।

एचोयवायाव इति उत्तरार्थं तदावश्यकत्वात्।

ननु वान्तोयि प्रत्यये इति सूत्रं नियमार्थं हलि परत ओदौतोःवान्तादेशश्चेत्तर्हि प्रत्ययस्थयकारे एवमेङ् ह्रस्वादिति सूत्रे एङ्ग्रहणेन हलि नायादय इति कल्प्यते यदि हलि परतो ऽपि अयादयः स्युस्तदा हरे इत्यादावयादेशे यकारस्य लोपो व्योरितिलोपे ह्रस्वात्परत्वेन वलि लोपात्प्राग् हल्ङ्याब्भ्यो दीर्घादिलोपेन वा सम्बुद्धिलोपसिद्धेरेङ्ग्रहणं व्यर्थं स्यात्, किंच देविका-

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

शिशपेतिसूत्रेणाकारविधानं व्यर्थं सत् हलादावयाद्यभावकल्पकम् अन्यथा दाविकमित्यत्रादिवृद्धावायादेशे लोपोव्योरिति यलोपे दाविकमित्यादेः सिद्धया तद्व्यर्थं स्यात् अत एव प्रत्यये अनुवादे इत्यादिनिर्देशाश्चोपपद्यन्ते इति नार्थं उत्तरार्थेनाज्ग्रहणेनेति चेन्न ।

अदुगुण इत्यात्रानुवृत्यर्थं तदावश्यकत्वात् ।

ननु दिव औदित्यत्र दिवोऽम् इति न्यासेन अमागम एव विधीयताम् तथाच दिव्स् इति स्थिते अमागमे द्यम्स् इति जातं तत्रादुगुणे वकारस्यान्तरतमे ओकारे ओतोणिदिति वृद्धौ द्योदिति सिद्धया दिव औदिति गुरुभूतन्यासेन हलि गुणाभावबोधनात् द्यम्स्इत्यवस्थायां न गुणप्राप्तिरिति दिव औदिति सूत्रं स्वांशे चरितार्थमिति न आदुगुणइत्यत्रानुवृत्यर्थमपि अज्ग्रहणम् । नच ओतोणिदिसूत्रेविहितविशेषणान्नामागमपक्षे द्योरित्यस्यसिद्धिरिति न दिव औदित्यस्य ज्ञापकत्वमिति वाच्यम् , पुंसोऽसुङित्यत्रेव सो विवक्षिते एवामागमविधानेनादोषादिति चेन्न,

अकः सवर्णे दीर्घ इत्यत्रानुवृत्यर्थं तदावश्यकत्वात् अन्यथा कुमारी शेत इत्यत्र दीर्घः स्यात् अत एव कौमुदीकृता तत्रैव अचि किमिति पृष्ट्वा कुमारी शेत इत्युत्तरं दत्तमित्यलम् ।

इको यणचि, एचोऽयवायाव, वान्तो यि प्रत्यये इति सूत्रत्रयस्थाने इचोचियणयवायावोऽवावौ यि प्रत्यये न्यासं कृत्वा स्थानेऽन्तरतमपरिभाषया सकलेष्टसिद्धिरिति शेखरकाराः ।

## तस्य लोपः १४

ननूपदेशेऽजनुनासिक इत् इति सूत्रादित्पदमनुवर्त्य षष्ठ्यन्तत्वेन विपरिणम्य इत्संज्ञकस्य लोप इत्यर्थलाभे तस्य लोप इतिसूत्रे तस्य ग्रहणं व्यर्थम् । नच आदिर्ञिटुडव इति सूत्रेण अनेकालोपीत्संज्ञकत्वे अलोऽन्त्यस्य लोपापत्तिः तस्य ग्रहणसत्वे तु तत्सामर्थ्येन नालोन्त्यपरिभाषाप्रवृत्तिरिति वाच्यम् , नानर्थकेऽलोन्त्यविधिरनभ्यासविकार इति परिभाषयैवालोऽन्त्यपरिभाषाया अप्रवृत्याऽदोषात् । नच नानर्थक इति परिभाषा भाष्ये प्रत्याख्यातेति वाच्यम् , एवमपि प्रकृतेऽलोन्त्यपरिभाषा प्रवृत्तौ अस्यानमुपदेशेऽजनुनासिक इत्यवेत्यसिद्धौ आदिर्ञि टुडव इति

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

सूत्रारम्भेणालोन्त्यपरिभाषाया अप्रवृत्तिकल्पनेनादोषात्। नच टुवितोऽथुजिति अथुच्प्रत्ययार्थं समुदितस्येत्संज्ञाविधानमिति वाच्यम्, एवं तर्हि आदिर्ञिटुडूनामिति न्यासं कृत्वा आदेस्तेनअन्त्यस्योपदेशोऽजित्यनेनेत्संज्ञां विधाय टू च उश्चटू इतौ यस्य स टूवित् इत्याश्रित्य टूवित इत्यर्थकरणेनादोषात् इति चेन्न।

एवं सति कृञादिधातोरुदित्वेन उदितो वेति क्त्वेत्यादौ वैकल्पिकेडापत्त्या प्रत्येकमित्संज्ञाया अनौचित्येन ञिटुडूनां सर्वलोपार्थं तस्य ग्रहणस्यावश्यकत्वात्। नच उदितोवेति सूत्रे कर्मधारयाङ्गीकारेण इदभिन्नोकारात्परस्येत्यर्थस्वीकारान्न दोष इति वाच्यम्, उवुन्दिर् धातौवैकल्पिकेडनापत्तेरिति दिक्।

वस्तुतस्तु लुप्यते इति लोपः कर्मणि घञ् उपदेशेऽजित्यतः 'प्रथमान्तमित्पदमनुवर्त्यं इत् लुप्यत इत्यर्थेन षष्ठीनिर्देशाभावेनालोन्त्यपरिभाषाया अप्रवृत्या न कश्चिद्दोष इति तस्य ग्रहणं व्यर्थमेवेति बोध्यम्।

यत्तु पूर्वत्र संज्ञापरस्य इत्पदस्य संज्ञिपरत्वसपादनाय तस्य ग्रहणमिति शेखराशय इति तन्न; संज्ञाकरणादन्यत्रानुवर्त्तमानं संज्ञावाचकं पदं संज्ञिपरमिति नियमस्य संख्यापदस्य ष्णान्ता इत्यत्र संज्ञिपरत्वाय शेखरकृता आश्रितत्वेन तादृशाशयवर्णनायोगात्।

## अदर्शनं लोपः १५

ननु अदर्शनमित्येव सूत्रमस्तु उपदेशेऽजित्यत इत्पदमनुवर्त्य अदर्शनमित्सञ्ज्ञकं भवतीत्यर्थः करिष्यते तस्य लोप इति सूत्रञ्च न करिष्यते सर्वत्रलोपपदस्थाने इत्पदमेव च करिष्यते इति महल्लाघवमिति चेन्न।

णेरनिटीत्यत्रापि णेरित्करणे इदितो नुम्धातोरिति अचीकमदित्यादौ नुमापत्तेरित्यलम्।

यत्तु ऋत इद्धातोरित्यनेन स्तीर्यादित्यत्र ऋकारस्य भृञामिदित्यनेन विभर्तीत्यादौ अभ्यासस्य चलोपापत्तिरपिदूषणमिति तन्न; व्याख्यानेन तयोर्वर्णपरतया तत्र लोपाप्राप्तेः। अन्यथा अणुदित्सवर्णस्येत्यत्र विभिन्नविभक्तिकयोरपि संज्ञासञ्ज्ञिभावदर्शनेन सिद्धान्तेऽपि लोपापत्तिर्दुर्वारा स्यादित्यलम्।

CC-0. Vasishtha Tripathi Collection. Digitized by eGangotri

## वान्तो यि प्रत्यये १६

ननु वान्तो यि इत्येव सूत्रमस्तु प्रत्ययग्रहणं किमर्थम् इति चेन्न । गोयानमित्यत्र वान्तादेशापत्तेः । नच गोर्यूतौ छन्दसीति वार्तिकं नियमार्थमप्रत्यये यकारादौ वान्तादेशश्चेत्तर्हि यूतावेवेति न दोष इति वाच्यम्, गोशब्दस्य वान्तादेशश्चेत्तर्हि यूतावेवेत्येवं नियमस्यापि सम्भवेन गोयानमित्यत्र दोषतादवस्थ्यात् । नच वान्तोय्यङ्गस्येत्येव सूत्रमस्तु अङ्गेन च प्रत्ययस्याक्षेपात् अङ्गावयवयोरोकारौकारयोर्वान्तादेशोभवति यादौ प्रत्यये इत्यर्थलाभात् गोयानमित्यत्र न दोष इति वाच्यम्, अस्यापत्यमिः यः अरिर्यरिः गोर्यरिः गव्यरिरित्यत्रयादिप्रत्ययनिमित्तकाङ्गत्वस्य गोशब्दे ऽभावेनेदानीं वान्तादेशानापत्तेः ।

ननु सिद्धान्तेऽपि वान्तादेशे कर्तव्ये पदद्वयसंबन्धिवर्णाद्वयापेक्षत्वेन बहिरङ्गत्वेनासिद्धतया न वान्तादेश इति वाच्यम्, नजानन्तर्य इति निषेधात् । वान्तादेशेऽपि पदद्वयसंबन्धिवर्णद्वयापेक्षत्वरूपबहिरङ्गत्वस्य सत्वाच्च । नच भोभगोसूत्रस्थभाष्येण अल्निष्ठस्थानितासमानाधिकरणधर्मनिमित्तके विधौ नस्थानिवदित्यर्थस्य अनल्विधावित्यस्य स्वीकारान्नात्र इकारवृत्तिप्रत्ययत्वं यकारेऽतिदेष्टुं शक्यते इति न सिद्धान्तेऽवान्तादेश इति वाच्यम्, अ शब्दादाचारक्विबन्तादचोयत् इति यति अतो लोप इति अकारलोपे गोशब्देन समासे गव्यमित्यत्र वान्तादेशानापत्तेर्दुरुद्धरत्वात् । नच कास्प्रत्ययादितिसूत्रे प्रत्ययग्रहणमपनीय कास्यनेकाच आम्वक्तव्य इति वार्तिककृता वार्तिकं कृतमिति इकाज्भ्य आचारक्विपि सूत्रवार्तिककृतोः फलभेदः स्यादिति एकाज्भ्यः आचारक्विपोऽनभिधानमिति नैतद्दूषणमिति वाच्यम, लिङ्ग्येवानभिधानकल्पनात् । अशब्दात् तत्र साधुरिति यति यस्येतिचेत्यल्लोपे गोशब्देन समासे गव्यमित्यत्र वान्तादेशानापत्तेः । नचालोपस्य स्थानिवत्वान्नात्र वान्ता देशः सिद्धान्तेऽपीति वाच्यम्, नपदान्तेतिसूत्रेण स्थानिवत्व निषेधात् बहिरङ्गा सिद्धत्वमपि न नाजानन्तर्य इति निषेधात् । वस्तुतस्तु आक्षिप्तस्य शाब्दबोधे भानाभावेनोक्तार्थलाभासंभवः अङ्गसंज्ञानापेक्षणेन ज्ञानगौरवं चेति न्यासोत्थापनमेव न युक्तमिति बोध्यम् ।

CC-0. Vasishtha Tripathi Collection. Digitized by eGangotri

ननु वान्तो यि प्रत्यये इति सूत्रे ओदौतोरित्यर्थः कस्माल्लभ्यते इति चेदुच्यते-ओदौतोरिति वक्तव्यमितिवार्तिकादोदौतोरित्यस्य लाभ इति। वस्तुतस्तु वान्तादेशज्ञानाय पूर्वसूत्रपर्यालोचनस्यावश्यकतया तत्र वान्तादेशस्थानित्वेनतयोर्निर्णयात्तयोरेव वान्तादेशो भविष्यतीति न वार्तिकस्योपयोगः। किञ्च स्थानेन्तरतम उरण्रपर इति संहितापाठे स्थानेऽन्तरतमे इति सप्तम्यन्तपाठाङ्गीकारेण अन्तरतमे स्थानिनि आदेशोभवतीत्यर्थेन पद्दन्नोमासिति सूत्रे यथा स्वानुरूपाः स्थानिन आक्षिप्यन्ते तद्वदिहापि भविष्यतीति।

नच सप्तम्यन्तपाठाङ्गीकारे स्थानिवृत्तित्वे सति आदेशवृत्तित्वे सति स्थान्यन्तरावृत्तिर्योधर्मः स आन्तर्यनियामक इति मात्राद्वयन्यूनकालिकत्वसमानाधिकरणतालुस्थानजन्यत्वधर्मेण आन्तर्यग्रहणापत्त्या दध्यानयेत्यत्रैव यण् स्यान्न सुध्युपास्य इत्यादौ इति सप्तम्यन्तपाठो भाष्ये दूषित इति वाच्यम्, स्वादिभ्य इत्यादिनिर्देशेन तालुस्थानजन्यत्वधर्मेण आन्तर्यग्रहणेनादोषात्। एवंच चतुर्मुख इत्यादावनुनासिकवारणाय सवर्णग्रहणानुवृत्तिक्लेशोऽपि नेति बोध्यम्।

ननु यकारादावित्यर्थलाभः कथमितिचेद्यस्मिन्विधिस्तदादावल्ग्रहणे इति परिभाषयेति गृहाण। परिभाषायां यत्पदेन सप्तम्यन्तं परामृश्यते अल्ग्रहणे इत्यस्याल्बोधके इत्यर्थः। विधीयते इति विधिः कार्यं कर्मणि किः येनविधिस्तदन्तस्येति परिभाषाया अपवादभूता इयं परिभाषा। उत्सर्गसमानदेशा अपवादा इति न्यायेनाभेदेन विशेषणमिति लभ्यते। एवंच अल्बोधके सप्तम्यन्ते पदेऽभेदसंबन्धावच्छिन्नप्रकारताप्रयोजकत्वेन सम्भाविते सति यत्कार्यं तत्तदादौ बोध्यमिति परिभाषार्थः।

ननूत्सर्गसमानदेशा अपवादा इत्यस्य किं फलम्। नच छन्दसि क्तमेक इति असिक्नीत्यत्र तकारस्य क्नादेशसिद्धिः फलमन्यथा क्नादेशस्यानेकाल्त्वेन सर्वादेशत्वापत्तिः। मम तु असितशब्दे तकारस्य नादेशःप्राप्तस्तद्बाधनायासितपलितयोर्नेति वार्तिकम् तदपवादतयाऽयमपि नकारस्यैवेति वाच्यम्, छन्दसि क्नमेक इति वार्तिके तकारग्रहणानुवृत्त्या सिद्धे न्यायस्यानुपयोगादिति चेन्न।

श्लिष्धातोः कर्मणि अनुनासिके [illegible] श्लिष इति

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

सूत्रस्य पुषादिङोपवादत्वेन उत्सर्गसमानदेशा इति न्यायेन तस्य आत्मनेपदे प्राप्त्यभावात् तव तु तत्रापि स स्यादित्यलम् ।

ननूत्सर्गसमानदेशा इत्यत्र किंमानमिति चेदुच्यते—असिद्धवदत्राभादितिसूत्रखण्डनावसरे पधीत्यत्र अस्हि इति स्थित अकारस्य श्नसोरिति लोपे सकारस्यैत्वे झषन्तत्वाभावाद्धित्वं न स्यात्सूत्राभावे इत्याशङ्क्य पत्वं लोपापवादो विज्ञास्यते । नच सकारस्य लोपः प्रश्नोतीत्युक्तं भाष्ये उक्तन्यायानाश्रयणे एत्वस्य लोपस्थान्यकारस्थानिकत्वासम्भवेन व्यभिचरितः द्वितीयैकाचूद्धिर्वचनस्य प्रथमैकाचूद्धिर्वचनापवादत्वेऽपि तत्समानदेशत्वाभावादिति वाच्यम्, उत्सर्गशास्त्रीयोद्देश्यतावच्छेदकाधिकरणपर्याप्तोद्देश्यतावच्छेदककत्वं यत्रापवादशास्त्रे तद्विषयकत्वं न्यायस्येति स्वीकारेण उत्सर्गशास्त्रीयोद्देश्यतावच्छेदकप्रथमैकाच्त्वाधिकरणपर्याप्तत्वस्य द्वितीयैकाच्त्वेऽभावेन न्यायविषयाभावेन व्यभिचाराभावात् ।

ननु यस्मिन्विधिरिति परिभाषायां किस्मानम् इति चेदुच्यते—वान्तो यि प्रत्यये इतिसूत्रमेव मानमन्यथा यान्ते प्रत्यये इत्यर्थापत्त्या यान्तप्रत्यासंभवेन सूत्रमेव व्यर्थं स्यात् । ननु अस्यापत्यमिः पः अरियंपिः गोर्यरिर्गव्यरिरित्यत्र यान्तप्रत्ययसंभव इति चेन्न । नवीनाभिमतार्थकानाल्विधावित्यनेन निषेधाद्यकारे प्रत्ययत्वस्यैवाभात् । नच गोकाम्यांचकारेत्यत्र यान्तप्रत्ययसंभव इति वाच्यम्, अल्लोपस्य स्थानिवत्वेन यान्तत्वासम्भवात् । नपदान्तेति निषेधस्तु न शङ्क्यः । परपदस्याजदेशस्यैव तेन स्थानिवत्वनिषेधात् ।

ननु गोमयमततीति गोमयात् तं करोति गोमयतीत्यत्र यान्तप्रत्ययसम्भवेन सूत्रस्य सार्थक्येन ज्ञापकत्वासम्भवः । नच स्थानिवत्वमज्झलादेशत्वात् नापि वहिरङ्गासिद्धत्वं नाजानान्तर्य इति निषेधात् । इति चेत्तदा अपोभीति सूत्रमेव ज्ञापकमिति गृहाण । अन्यथा भान्तप्रत्ययासंभवेन सूत्रमेव व्यर्थं स्यात् । नच भीति सप्तमी स्वतन्त्रैव न प्रत्ययविशेषणम् । तथाच प्रत्ययाव्यवहितपूर्वस्यभकाराव्यवहितपूर्वस्यापस्तकार इत्यर्थेन सूत्रं चरितार्थमिति वाच्यम् । एवं तर्हि कोः कत्तत्पुरुषेऽचीत्यस्य अजन्त इत्यर्थापत्तौ कद्रथ इत्यादेरनेनैव सिद्धौ रथवदयोश्चेति सूत्रमेव परिभाषायां ज्ञापकमित्यदोषात् ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

यदि रथवदशब्दाभ्यामाचारक्विन्ताभ्यां कर्त्तरि क्विप्यल्लोपे रत् वद् तयोः कुशब्देन समासे कदादेशार्थं चरितार्थं स्थानिवद्भावेनाजन्तत्वं तु न नपदान्तेति निषेधात्। नच तावन्मात्रप्रयोजनकत्वे रद्वदोश्चेत्येवपठेदिति रथवदयोश्चेतिपठनं ज्ञापकमेवेति वाच्यम्, रम्धातोः क्विपि रत् वद्धातोः क्विपि वद् तत्रापि कदादेशापत्तिवारणाय रथवदयोश्चेत्यदन्तपाठस्यावश्यकत्वादित्युच्यते तदा नल्यपीति सूत्रमेव परिभाषायां ज्ञापकमिति गृहाण। तथाहि परिभाषाभावे घुमास्थेत्यस्य हलन्ते कङितीत्यर्थात्प्रदायेत्यादावीत्वप्राप्तौ नल्यपीति सूत्रं व्यर्थं स्यात्। नच प्रदायच्छत्रमित्यत्र तुकि हलन्तकङित्प्रत्ययस्य सत्वेन प्राप्तेत्ववारणार्थं नल्यपीत्यावश्यकम् ईत्वे तुकों बहिरङ्गासिद्धत्वं तु न शङ्क्यं नाजानन्तर्य इति निषेधादिति वाच्यम्, इदानीमातोलोप इटिचेत्यस्य अजन्ते इत्यर्थापत्त्या तुकः पूर्वमेवातोलोपे ईत्वाप्राप्त्या निषेधस्य वैयर्थ्येन ज्ञापकत्वसंभवादित्यलम्।

नन्वस्याः किं फलम्। नचतदभावे वान्तो यि प्रत्यये इत्यस्य यान्ते प्रत्यये इत्यर्थापत्त्या गोमयतीत्यत्र वान्तादेशापत्तिरिति वाच्यम्, यकारस्य स्वातन्त्र्येणौदौतोर्विशेषणत्वमङ्गीकृत्य प्रत्ययाव्यवहितपूर्वयोः यकाराव्यवहितपूर्वयोरोदौतोर्वान्तादेश इत्यर्थेनादोषात्। नचैवं गोयानमित्यत्र प्रत्ययलक्षणेन प्रत्ययाव्यवहितपूर्वत्वस्य यकाराव्यवहितपूर्वत्वस्य च सत्वेन वान्तादेशापत्तिरिति वाच्यम्, वृद्धेशाखेतिवत् प्रत्ययावयवयकाराव्यवहितपूर्वयोरोदौतोर्वान्तादेश इत्यर्थेनादोषात्। ननु उष्ट्रगोयुगमित्यत्रगोयुगच्प्रत्ययावयवयकाराव्यवहितपूर्वस्य प्रत्ययावयवौकारस्यवान्तादेशापत्तिरिति चेन्न, औकारसाहचर्येण ओकारस्यापि यकारघटितप्रत्ययाघटकस्यैव ग्रहणेनादोषात्।

यत्तु गव्युगचि कर्तव्ये ओकारोच्चारणसामर्थ्यान्नावादेश इति तन्न। उष्ट्रगोयुगशब्दस्याच्छब्देन समासे ततो णिचि टिलोपे उष्ट्रगोयुगइति जाते तस्य तृशब्देन समासे पुनर्णिचि टिलोपे क्विपि तन्निमित्तकयलोपे उष्ट्रगो इत्योकारान्तरूपसिद्ध्यर्थं तस्य चारितार्थ्यात् गव्युगचि तु वकारस्योठि औकारान्ततापत्तेः।

वस्तुतस्तु लोपाभावपदेशावस्थायामवादेशप्राप्त्या गोयुगजिति

CC-0. Vasishtha Tripathi Collection. Digitized by eGangotri

करणेऽपि ऊठ्दुर्वारएवेति ओकारोच्चारणसामर्थ्यादपि वान्तादेशवारणं कर्तुं शक्यमेवेति बोध्यम् ।

एवमपोभीत्यस्य प्रत्ययावयवे भकारे इत्यर्थात् सकलेष्टसिद्धौ तदर्थमपि न परिभाषावश्यकत्वम् । ङमो ह्रस्वादचीत्यस्य अच्परको यो ह्रस्वात्परो ङम् तदन्तं यत्पदं ततः परस्य पदस्य, ह्रस्वात्परो यो ङम् तदन्तं यत्पदं पदपरकं ततः परस्याच इति वार्थ इति परमदण्डिनावित्यत्र ङमुड्वारणाय पदे इत्यनुवृत्तिं कुर्वतां नव्यमतेऽपि न परिभाषोपयोगः । गोत्रेऽलुगचीत्यस्य प्राग्दीव्यतीयप्रत्ययघटकाजव्यवहितपूर्वत्वविवक्षायामलुगित्यर्थेन गर्गरूप्यमित्यादावलुगभाव इति न तदर्थमपि परिभाषोपयोगः । नच तृणह इम् इत्यत्र हलादौ पितीत्यर्थौ न स्यात्परिभाषाभावे पित्सार्वधातुकावयवे हलीत्यर्थकरणे तु वर्णाश्रये नास्तीति प्रत्ययलक्षणनिषेधेन अतृणेडित्यत्रेमागमानापत्तिरिति वाच्यम्, परत्वात्प्रतिपदोक्तत्वाच्च इमागमस्यैव पूर्वं सत्वेनादोषात् । भाष्यमते तत्र नाभ्यस्तस्याचीत्यतः अचि नेत्यस्यानुवृत्त्या हल्ग्रहणाकरणाच्च ।

ननु परिभाषासत्वे इत्संज्ञकशकारादौ पिबादेश इति पाघ्रेतिसूत्रस्यार्थः इदानीं प्रत्ययावयवे इत्संज्ञकशकारे परत इत्यर्थकरणे इत्संज्ञकशकारपरत्वासंभवेन पिबतीत्यत्र पिबादेशानापत्तिरिति चेन्न ।

इत्संज्ञकशकारपरत्वसंभावनायामित्यर्थस्य 'पाघ्राध्मेतिसूत्रारम्भसामर्थ्येन करणीयतया यदीत्संज्ञालोपौ न स्यातां तदाशकारपरत्वं स्यादितिसंभावनायाः सत्वेन पिबतीत्यादिसिद्धेः । परिभाषाभावादेव एकहलादौ पूरयितव्येऽन्यतरस्यां ह्रस्वात्तादौ तद्धिते इत्यत्रादिग्रहणं कृतमित्यलं पल्लवितेन ।

वस्तुतस्तु यि प्रत्यये इत्येव सूत्रमस्तु एचोऽयवायाव इति सूत्रस्य संबन्धात् एचोऽयादयो भवन्ति यादौ प्रत्यये इति सूत्रार्थः, एवं च ओदौतोरित्यस्य लाभाय पूर्वसूत्रार्थपर्यालोचनस्य ओदौतोरितिवक्तव्यमिंतिवार्तिकस्य वा नावश्यकता इति बोध्यम् ।

नच क्षेयं जेयमित्यादौ यान्तादेशापत्तिरिति वाच्यम् । इदानीं क्षय्यजय्यौ शक्यार्थे इति सूत्रस्य 'एकारस्य यादौप्रत्यये चेद्यान्तादेशस्तर्हि क्षिज्योरेव शक्यार्थे यान्तादेशो नान्यत्र' इति नियमकरणाद्दोषात् । नच रैशब्दात्

CC-0. Vasishtha Tripathi Collection. Digitized by eGangotri

रायमात्मन इच्छति रैयतीत्यत्र क्यजापत्तिरिति वाच्यम्, रा यि छान्दसः इति भाष्येण रैशब्दो यादौ छान्दस इत्यर्थकेन रैशब्दस्य क्यजादावनभिधानेन, कण्ठतालव्यस्य चेद्यान्तादेशस्तर्हि तिज्योरेवैच इति सामान्यापेक्षनियमाश्रयणेन वाऽदोषादिति सर्वं रम्यम्।

धातोस्तन्निमित्तस्यैव १७

वान्तो यि प्रत्यये इत्यनेनैव लव्यमवश्यलाव्यमित्यादौ वान्तादेशे सिद्धे इदं सूत्रं नियमार्थं 'धातोरेचश्चेद्वान्तादेशस्तर्हि यादिप्रत्ययनिमित्तस्यैव' तेन ओयते औयत इत्यादौ न वान्तादेशः। एवकार इष्टतोऽवधारणार्थः। अन्यथा यादिप्रत्यनिमित्तकस्यैचश्चेद्वान्तादेशस्तर्हि धातोरेवेति नियमापत्तौ मधुवभ्रोर्ब्राह्मणकौशिकयोरिति यञि आदिवृद्धौ ओर्गुण इति गुणे माधो य इति स्थिते वान्तादेशानापत्तिः। नच कौरव्यमाण्डूकाभ्यां चेति निर्देशान्न विपरीतनियम इति वाच्यम्, निर्देशेन विपरीतनियमवारणे प्रतिपत्तिगौरवात्।

नन्विदं सूत्रं मास्तु ओयते इत्यत्र पदद्वयसंवन्धिवर्णद्वयापेक्षगुणस्य वहिरङ्गत्वेनासिद्धतया वान्तादेशाप्राप्तेः। नचौयतेत्यादौ वान्तादेशाभावाय सूत्रमावश्यकमिति वाच्यम्, एवमपि न यकीतिन्यासं कृत्वा दोषवारणे धातोस्तन्निमित्तस्येतिसूत्रवैयर्थ्यस्य तादवस्थ्यात्। नच न यकीति न्यासकरणे गोशब्दादाचारक्विवन्तात्क्विपि तत्र साधुरिति यति गोयमित्यत्र वान्तापत्तिः। यथान्यासे तु यादिप्रत्ययनिमित्तकत्वाभावान्नियमेन वारणान्न वान्तादेश इति वाच्यम्, एकाज्भ्य आचारक्विपोऽनभिधानस्य कास्प्रत्ययादितिसूत्रभाष्याल्लाभेनादोषात्। ओतः श्यनि आदेचउपदेशेऽशितीतिसूत्रभाष्यादेजन्तेभ्यः आचारक्विपोऽनभिधानेनादोषाच्च। न च कीलालप आगतमिति भाष्यप्रयोगेण अन्येभ्योऽपि दृश्यते इति विचः क्वचिल्लोकेऽपि साधुत्वाभ्युपगमात् भूधातोर्विचि गुणे भो इति जाते तत्र साधुरिति यति वान्तादेशापत्तिः। सिद्धान्ते तु एचः यादिप्रत्यनिमित्तकत्वाभावान्न दोषः। किंच जनानवतीति जनौस्ततः साध्वर्थे यति जनौयमित्यत्रवान्तादेशापत्तिरिति वाच्यम्, कीलालप इत्यत्र भाष्यप्रयोगेण विचः साधुत्वेऽपि अन्यत्र साधुत्वे मानाभावेन भोयमित्यस्यानभिधानेन, जनौर्यमित्यत्र पदद्वयसम्बन्धिवर्णद्वयापेक्षवृद्धेरसिद्धत्वेन चादोषादिति चेन्न

CC0. Vasishtha Tripathi Collections. Digitized by eGangotri

उश्शम्भुस्तमिच्छति ऊयति आ ऊयति औयतीत्यत्र लङि औयदित्यत्र च न यकीतिन्यासे वान्तादेशापत्तेः। सिद्धान्ते तु यादिप्रत्ययनिमित्तकत्वाभावान्न दोष इति । नचैवमपि यादौ किति तद्धिते च वान्तादेशो न भवतीत्यर्थकेन अकित्तद्धिते इतिन्यासेन औयतीत्यादौ न दोष इति वाच्यम्, गव्यं गव्यतीत्याद्यसिद्धेः ।

केचित्तु धातोरेचश्चेद्वान्तादेशस्तर्हि यादिप्रत्ययनिमित्तस्यैवेति नियमाङ्गीकारे गव्यतीत्यादौ वान्तादेशानापत्तिरतः एजन्तस्य धातोश्चेद्वान्तादेशस्तर्हि यादिप्रत्ययनिमित्तकस्यैवेति नियमाकारो वाच्यः औयति औयदित्यादौ न दोषः एजन्तधातोरभावादिति सिद्धान्तेपि तत्र वान्तादेश इष्यत एवेति न यकीति न्यासे न किमपि दूषणमिति वदन्ति—

तन्न, भूधातोर्विचि तत्र साधुरिति यति भोयमित्यत्र जनौयमित्यत्र च वान्तादेशापत्तेः। नच आद्ये विजभावस्य द्वितीये वृद्धेरसिद्धत्वस्योक्ततयानेदं युक्तमिति वाच्यम्, असतिवाधकेप्रमाणानां सामान्येपातपात इति न्यायेन कीलालप इति भाष्यप्रयोगेण सामन्यतो लोके विच्कल्पनेन नाजानन्तर्य इति परिभाषया वहिरङ्गपरिभाषाया अप्रवृत्या च दूषणयोः सौष्ठवादित्यलम् ।

ननु वान्तो यि प्रत्यये दृश्यते इति वान्तो यि प्रत्यये बहुलमिति वा न्यासोऽस्तु धातोस्तन्निमित्तस्यैवेति सूत्रं च मास्तु वहुलग्रहणादेव सकलेष्टसिद्धिरितिचेन्न ।

लक्षणैकचक्षुष्कैर्लक्ष्यानुसारिव्याख्यानाश्रयणस्य कर्तुमशक्यत्वादिति ।

## उरण् रपरः १८

ननूरणोरगित्येव सूत्रमस्तु ऋकारस्थाने योऽण् तस्य प्रसङ्गावस्थायां रगागम इत्यर्थः। एवं चावयववाचिपरग्रहणं किमर्थमिति चेन्न ।

कृ तृ धातोर्यङ्लुकि चाकर्ति तातर्ति इत्यादावभ्यासस्योरदत्वे तस्य रगागमे अभ्यासस्य कित्वेन दीर्घोऽकित इति दीर्घानापत्तेः।

वस्तुतस्तु अभ्यासावयवस्याकित इति नार्थः अपितु समानाधिकरणविशेषणतया अभ्यासत्वावच्छिन्नोद्देश्यताक कित एव ग्रहणम्। अत एव जाहातीत्यादौ दीर्घः। एवञ्चोक्तयुक्त्या चाकर्तीत्यादौ दोषाभावेन न्यासः सुवच इति वाच्यम्।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

ननु उरण् रपर इदं सूत्रं मास्तु अदेङ्गुण इत्यत्र अरेङ्गुण इति वृद्धिरारैजिति न्यासोऽस्तु एवं च कृष्णर्द्धिः प्रार्च्छतीत्यादौ न दोषः विधानसामर्थ्याच्च रेफस्य नेत्संज्ञा। न चैवं यः सः इत्यादौ त्यदादीनाम इति विहिताकारस्य गुणत्वाभावेन अतो गुण इति पररूपानापत्तिः, शालाशब्दाद्याकारादेर्वृद्धिसंज्ञाया अभावेन वृद्धिर्यस्याचामादिस्तद्वृद्धमिति वृद्धसंज्ञाया अभावाच्छालीयाद्यसिद्धिश्चेति वाच्यम्। अरदेङ्गुणः वृद्धिरारादैजिति न्यासाङ्गीकारेण अकारस्य गुणसंज्ञाया आकारस्य वृद्धिसंज्ञायाश्च सिद्ध्याऽदोषात्। ऋत इद्धातोः ऋत उत् इति सूत्राभ्यां रेफविशिष्टस्यैव इरः उरश्चविधानेन गोः क्रोष्टुरित्यादौ न दोषः। नच ऋत उदित्यत्र ऋत उरितिन्यासकरणे तपरकरणस्य भाव्यमानोऽप्युकारः सवर्णान्गृह्णातीति परिभाषाज्ञापकता न सिद्ध्येदिति वाच्यम्, दिव उदिति सूत्रस्थतपरकरणस्यैव तज्ज्ञापकत्वसम्भवात्। नच विभर्तीत्यादौ ऋकारस्य इरादेशार्थं भृञामिरिति न्यासः कार्यः तथाचानेकाल्त्वेन सर्वादेशत्वापत्तिरिति वाच्यम्, रपरत्वेऽपि तत्र रेफस्य हलादिः शेषः इति लुप्यमानतया फलाभावेनेदानीं भृञामिदिति यथाश्रुतसूत्रस्यैवौचित्येन दोषाभावादिति चेन्न। ईर्त्सतीत्याद्यर्थमाप्ज्ञप्यृधामीदित्यत्र ईरिति वक्तव्यम् तथा च ईप्सतीत्यत्रापि रेफश्रवणापत्तिः तदर्थमाप्ज्ञपोरीत् ऋध ईर् इति न्यासकरणे च न किञ्चिल्लाघवम्, किञ्च तवल्कारः प्राल्कारीयतीत्यादावलालोःसिद्ध्यर्थं तयोर्गुणवृद्धिसंज्ञाकरणे गौरवमपीति यथा श्रुतन्यासस्यैवौचित्यादित्यलम्।

## एत्येधत्यूठ्सु १९

ननु एत्येधत्यूठ्सु इत्यस्य स्थाने ठिति चेति सूत्रमस्तु इण् गतावित्यत्र एकारस्थाने ठकार एव पाठ्यः एधवृद्धावित्यत्र एधठ् इत्यस्तु एवं चावर्णात् ठिति परे वृद्धिरेकादेशः स्यादित्यर्थान्न क्वापि दोषः। नचैवं सुपेत इत्यत्रवृद्ध्यापत्तिः स्तद्वारणाय एचीत्यस्य सम्बन्धेन एजादौ ठितीत्यर्थकरणे च प्रष्ठौह इत्यत्र वृद्ध्यनापत्तिरिति वाच्यम्, वाह ऊठ् इत्यत्र वाह ओठ् इति न्यासाङ्गीकारेण ठिति चेत्यत्र एचीत्यस्य सम्बन्धेन दोषाभावात्। नच प्रष्ठौह इत्यादौ ओठिति न्यासकरणे तस्य इक्त्वाभावेन सम्प्रसारणत्वाभावात्सम्प्रसारणाच्चेति पूर्वरूपानापत्तिरिति वा-

CC-0. Prof. Satya Vrat Shastri Collection. Digitized by eGangotri

च्यम्, इच् यणः सम्प्रसारणमिति न्यासेन तत्यभावात्। नच वाह ओठितिन्यासकरणे वार्यूह इत्यस्यासिद्धिरिति वाच्यम्, असिद्धं बहिरङ्गमन्तरङ्गे इति परिभाषाज्ञापकमूड्ग्रहणमिति भाष्यप्रामाण्येन वार्यूह इत्यादीनामनभिधानेनादोषात्। नच प्रष्ठौह इत्यत्र ऊडिदमित्यत्र स्वरानापत्ति रूठोऽभावादिति वाच्यम्, ओडिदमिति न्यासेनादोषात्। नच खौनातीत्यत्र वृद्ध्यनापत्तिः एजादिठितोऽभावात् तदर्थं च्छ्वोःशूडित्यत्र ओठिति करणे अक्षद्यूरित्यस्यासिद्धिः ज्वरत्वरेत्यत्र ओठ एव सम्बन्धे जूरित्यस्यासिद्धिश्चेति वाच्यम्। ऊठः ठित्वसामर्थ्येनैजादित्वाभावेऽपि खौनातीत्यत्र वृद्धिसिद्धेः। वस्तुतस्तु ठितिचेति न्यासे एचीत्यस्य सम्बन्धे विश्वौह इत्यत्रापि ठित्करणसामर्थ्यादेव वृद्धिसिद्ध्या वाह ओठिति न्यासानुधावनं विफलमेव। न चोठिदमित्यत्र विशेषणार्थं ठित्करणमिति वाच्यम्, अन्तरङ्गपरिभाषाज्ञापनपरभाष्यप्रामाण्येन विश्वौह इत्यत्र ऊडिदमितिस्वराप्रवृत्तेरिति चेन्न ?

ठितिचेतिन्यासे मात्रालाघवसत्वेऽपि अनेकक्लिष्टकल्पनापेक्षया यथाश्रुतस्यैवौचित्यात् इति दिक्।

## खरवसानयोर्विसर्जनीयः २०

ननु विसर्गोऽनशीत्येव न्यासोऽस्तु पदान्तस्य रेफस्य विसर्गो भवति नत्वशीति सूत्रार्थः अनशीत्यस्य प्रसज्यप्रतिषेधादिति चेन्न। प्रसज्यप्रतिषेधत्वे ज्ञानगौरवात् पर्युदासत्वे अशूभिन्नेऽशूसदृशेऽल्येव प्रवृत्त्यापत्तौऽवसाने विसर्गानापत्तेः।

नच विसर्ग इत्येव सूत्रमस्तु अनशीति मास्तु अशि यत्वविधानान्न दोष इति वाच्यम्, प्रातरत्रेत्यादौ रोरभावेन यत्त्वाप्राप्तया विसर्गापत्तेरिति दिक्।

## एङः पदान्तादति २१

ननु एङोऽति इत्येव सूत्रमस्तु पदान्तग्रहणं किमर्थम्। नच हरय इत्यत्र पूर्वरूपापत्तिरिति वाच्यम्, साम्प्रतं ङसिङसोश्चेति सूत्रस्य अपदान्तादेङः पररूपं चेत्तर्हि ङसिङसोरेवेति नियमार्थतयाऽदोषात्। नच नियमस्य सजातीयापेक्षत्वेन अपदान्तादेङः विभक्तौ पररूपं चेत्तर्हि

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

ङसिङसोरेवेति नियमापत्तौ हरय इत्यत्र पररूपवारणेऽपि भवतीत्यादौ पररूपापत्तिरिति वाच्यम्, भवतेर इति निर्देशेन, "असतिबाधके प्रमाणानां सामान्ये पक्षपातः" इति न्यायेन, च सामान्यापेक्षनियमस्यैवौचित्येन भवतीत्यादावदोषादिति चेन्न।

सर्वत्र विभाषा गोः अवङ् स्फोटायनस्येत्यादावुत्तरत्र पदान्तग्रहणस्यावश्यकत्वेन सामान्यापेक्षनियमाङ्गीकारे भवतीत्यादौ पररूपवारणाय स्पष्टार्थतया इष्टार्थत्वेन च तदावश्यकत्वात्।

केचित्तु अपदान्तादेङः सुपि चेत्पूर्वरूपं तर्हि ङसिङसोरेवेति नियमाकारः नियमस्य सजातीयापेक्षत्वात् एवं च हरय इत्यत्रैव पररूपवारणं भविष्यति नतु भवतीत्यादौ ततश्च ङसिङसोश्चेत्यस्य स्थाने न जसीत्येव वक्तव्ये गुरुभूत न्यासबलेन न नियमस्य सजातीयापेक्षत्वमपि तु सामान्यापेक्षत्वमिति पदान्तग्रहणं व्यर्थमिति वदन्ति।

तन्न, से शब्दाच्छसि सय इत्यादौ पररूपापत्त्या न जसीति न्यासस्य वक्तुमशक्यत्वात्। नहि पदान्तादेङोरस्ति इति भाष्यात् 'न पदान्ताः परेऽणः सन्तीति' भाष्याच्च सेप्रभृतीनामनभिधानेऽपि भवति चय इत्यादौ पररूपापत्तेर्दुरुद्धरत्वात्।

अनुवन्धादौ चेत्पररूपं तर्हि ङसिङसोरेवेति नियमात् भवति हरय इत्यादौ न दोष इति केचित्।

तदपि न, औपगवः, आचिनवम्, चय इत्यादौ पररूपापत्तेः। अनुगवमायाम इत्यादिनिर्देशेनैतन्नियमासम्भवाच्च।

अन्ये तु अपदान्तादेङो विभक्तौ पूर्वरूपं चेत्तर्हि ङसिङसोरेवेति हरय इत्यादौ न दोषः। ननु यदि जस्येव पररूपवारणं प्रयोजनं तर्हि ङसिङसोश्चेत्यत्र न जसीत्येव ब्रूयात् इति ङसिङसोश्चेति सूत्रकरणमपदान्तादेङोऽति पूर्वरूपं चेत्तर्हि ङसिङसोरेवेति सामान्यापेक्षत्वेति न भवतीत्यादौ दोषः। नच शसि सय इत्यादौ पररूपापत्तिरतो न जसीतिवक्तुमशक्यमिति वाच्यम्, सेप्रभृतीनामनभिधानात् अभिधानेऽपि नजश्शसोरित्येव वक्तुं शक्यमित्यदोषात्। नचाचिनवमित्यत्र पररूपापत्तिः नजश्शसोरिति न्यासकरणे नियमपक्षे तु अमो विभक्तित्वान्न दोष इति वाच्यम्, नाम्जश्शस्सु इति न्यासकरणेनादोषादिति चेन्न। ए-

CC-0, Vasishtha Tripathi Collection. Digitized by eGangotri

शव्दादाचारक्विवन्ताल्लटि भेरन्तादेशेऽयन्ति भवन्तीत्यादौ परादिवद्भावेन विभक्तिपरत्वेन पररूपाप्राप्त्या न्यासापेक्षया नियमस्यैव युक्तत्वादिति वदन्ति ।

## इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च २२

इको यणचीत्यनन्तरं पदस्य शाकल्यस्य ह्रस्वश्चेति सूत्रमस्तु इगन्तस्यपदस्याचि ह्रस्वोभवतु इति सूत्रार्थः ह्रस्व विधानसामर्थ्याच्च न यणादिकमिति इकोऽसवर्णे शाकल्यस्य ह्रस्वश्चेति सूत्रं मास्तु इति नवीनाः । नचैवं न्यासकरणे चिनुहि इतीत्यादौ ईं चाक्रवर्मणस्येति अप्लुतवद्भावेऽपि अनेन ह्रस्वे चिनुहीतिरूपासिद्धिरिति वाच्यम्, ईचाक्रवर्मणस्येति सूत्रस्य वाधकमिति अजंशे अनार्षेतिशव्दावयवाजतिरिक्तत्वेन संकोचात्तत्रैतदप्रवृत्त्या रूपद्वयसिद्धेर्निरुपद्रवात् । न च पूर्वविप्रतिषेधेनाप्लुतवदुपस्थित इति सूत्रमीचाक्रवर्मणस्येत्यस्य वाधकमिति शेखरे स्पष्टं तथाच कथं रूपद्वयसिद्धिरिति वाच्यम्, यथान्यासेऽप्लुतवदित्यत्रासवर्णग्रहणानुवृत्त्या तस्येतिशव्देऽप्राप्त्यारूपद्वयसिद्धेर्निष्प्रत्यूहत्वात् । न चेदानीं चक्रीहेत्यत्रापि ह्रस्वप्राप्तिरसवर्णग्रहणाभावादिति वाच्यम्, सांप्रतमकः सवर्ण इति दीर्घस्य एतदपेक्षया परत्वेनैतद्बाधकत्वेनादोषादित्यलम् ।

## न समासे २३

ननु वृत्तौ नेति वार्तिकमस्तु एवं च न समासे, सिति चेति वार्तिकद्वयं मास्तु वाप्यश्वः पार्श्वमित्यत्र च न दोषः समासतद्धितवृत्त्योः सत्वादिति चेन्न ।

दध्युपदंशं भुङ्क्ते इत्यत्र कृद्वृत्तेः सत्वेन प्रकृतिभावनिषेधापत्तौ रूपद्वयासिद्ध्यापत्तेः । न च तत्र अमैवाव्ययेनेति समासे समास एवेति इष्टमेवैतदिति वाच्यम्, तत्र तृतीयाप्रभृतीन्यन्यतरस्यामिति समासविकल्पेन समासाभावपक्षे दोष इत्याशयात् ।

## सिति च २४

नन्विदं वार्तिकंमास्तु पर्श्वा णस् वक्तव्य इत्यनेन ङ्वर्णं विधाय ङित्वात्टिलोपे पार्श्वमित्यस्य सिद्धेः । नच ऋत्व्य इत्यस्यासिद्धिः छन्द-

CC-0. Prof. Satya Vrat Shastri Collection. Digitized by eGangotri

सि घसिति घसि सिति चेति पदत्वे इकोऽसवर्णे इति प्रकृतिभावापत्ते-रिति वाच्यम्, छन्दसि ड्विय इति न्यासकरणेन इकोऽसवर्णे इत्यस्य वैकल्पिकतया छन्दसि दृष्टानुविधानेन चादोषादिति चेन्न।

पर्शुशब्दादाचक्षाणण्यन्तात्क्विपि विचि वा पर्श् इति तत एकदेशविकृतन्यायेन स्थानिवद्भावेन वा णसि पार्शमिति ड्वणि टिलोपेप्यमितिरूपवैलक्षण्येन ड्वणिति न्यासस्य कर्तुमशक्यत्वात्। न च ड्वणि टिलोपस्य स्थानिवत्वान्नटिलोप इति वाच्यम्, तावतापि णसि पार्शमिति ड्वणि पार्श्वमितिरूपवैलक्षण्यस्य सत्वात्। न च एकासिद्धे आरगुदीचामिति सूत्रे आकारोच्चारणमन्यतोविधानार्थम् तेन जाडार इति सिद्धमिति गोधाया ढ्रगिति सूत्रभाष्यात् प्रातिपदिकप्रकृतिकण्यन्तप्रकृतिकस्य क्विपो विचश्च तद्धितस्य अनभिधानम् अन्यथा गोधाशब्दादप्युक्तरीत्या क्विपि विचि वारक्यारकि च रूपे विशेषस्य सत्वात्तद्भाष्यमसङ्गतं स्यादिति वाच्यम्, ज्ञापकस्य सजातीयापेक्षतया तस्यावन्तविषयकत्वकल्पनयापि सङ्गतत्वादिति दिक्।

## मय उञो वो वा २५

नन्विदं सूत्रमिकोयणचीत्यनन्तरं मय उञो वा इति सूत्रमस्तु वः ग्रहणञ्च मास्तु एवञ्च मय उञो यण् वा स्यादचीति सूत्रार्थः। नच तथा सति किम्वुक्तमित्यत्र मोऽनुस्वार इति अनुस्वरापत्तिः यथान्यासे तु वत्वस्यासिद्धत्वान्नानुस्वारः इति वाच्यम्, इकोयणचीत्यनन्तरं पाठेऽपि वत्वस्य पदत्रयसम्बन्धिवर्णापेक्षत्वेन वहिरङ्गतयाऽसिद्धत्वादचः परस्मिन्निति स्थानिवद्भावाद्वाऽनुस्वाराप्राप्त्याऽदोषादिति चेन्न।

शेखरकृन्मते त्रिपाद्यां वहिरङ्गपरिभाषाया अप्रवृत्त्या न पदान्तेतिनिषेधेनानुस्वारविधौ स्थानिवत्वाप्राप्त्या च किम्वुक्तमित्यत्रानुस्वारापत्तेस्तादवस्थ्यात् नच सन्निपातपरिभाषया न दोष इति वाच्यम्, प्रत्यङ् उ आत्मेत्यत्र मय उञ इति वत्वे तस्यासिद्धत्वान्ङमोह्रस्वादचीति ङमुडि प्रत्यङ्ङ्वात्मा इति भवति मय उञ इत्यस्यैको यणचीत्यनन्तरं पाठे सापादिकत्वेनासिद्धत्वाभावाद्वत्वं न स्यादित्यस्यैव दोषत्वात्।

नच प्राचीनमते कार्यकाले त्रिपाद्यामन्तरङ्गपरिभाषाप्रवृत्त्या

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

यण्यपि ङमुट् भवत्येवेति वाच्यम्, षष् उ अत्रेति स्थिते जश्त्वेन डकारे यथान्यासे मयः परस्योञो वादेशोजायते इदानीं जश्त्वस्यासिद्धत्वेन मयः परत्वाभावेन तदनापत्तेः। एतेन त्रिपाद्यां पाठारम्भात्सन्निपातपरिभाषा सन्धिकार्यं न प्रवर्तते तेन गवाग्रमिति सिद्धम् इति शब्दरत्नोक्तमपास्तं वेदितव्यम् ।

## स्तोः श्चुना श्चुः २६

ननु स्तोः श्चौ श्चुरित्येव सूत्रमस्तु। नच तस्मिन्निति निर्दिष्टे इति परिभाषया शकारश्चवर्गाव्यवहितपूर्वस्य स्तोः शकारश्चवर्गौ स्तः इत्यर्थापत्तौ यज्ञः, याच्ञा इत्यादौ श्चुत्वानापत्तिरिति वाच्यम्, शादिति शास्त्रारम्भसामर्थ्येन पूर्वांशानुपस्थितिकल्पनेनादोषात् अव्यवहितांशस्तूपतिष्ठत एवेति चितमित्यत्र न श्चुत्वापत्तिरिति चेन्न ।

शादितिशास्त्रारम्भसामर्थ्याश्रयणेन ज्ञानगौरवात् ।

## यरोऽनुनासिकेऽनुनासिको वा २७

ननु यरो ञमि ञम् वा इत्येव सूत्रमस्तु। नच यथासंख्यसूत्रप्रवृत्त्या एतन्मुरारिरित्यत्र दस्य मकारापत्तिरिति वाच्यम्, आन्महत इति निर्देशेन यथासंख्यसूत्राप्रवृत्तिकल्पनेनादोषादिति चेन्न ।

एतनूँ इति, कमलाँश्चिनोषीत्यादावनुनासिकानापत्तेः। प्रथमान्तानुनासिक इत्यस्य स्थाने ञम् इति करणे कमलाँश्चिनोषीति दूषणम्। यम् इति करणेऽपि तदेव दूषणं विधीयमाने सवर्णग्रहणाप्राप्त्या उक्तेऽनुनासिकलकाराप्राप्तेरित्यलम् ।

## मोऽनुस्वारः २८

नन्वस्मिन् सूत्रे पदस्यानुवृत्तिर्व्यर्थेति चेन्न। गम्यते इत्यत्रानुस्वारापत्तेः। नच तदर्थमुञि च पदे इत्यतः पदे इत्यनुवर्त्य हलादौ पदे इत्यर्थान्नदोष इति वाच्यम्, पुंसु इत्यादावनुस्वारानापत्तेः। नच गम्यते इत्यत्र न दोषः अपदान्तस्य मस्य चेदनुस्वारस्तर्हि झल्येवेति नश्चापदान्तस्येति नियमादिति वाच्यम्, यत्र स्वतो नियमस्तत्र विपरीतनियमोऽपि सम्भावित इति सिद्धान्तेन झलि मस्य चेदनुस्वारस्तर्हि अपदान्तस्यैवेति नियमस्य सत्त्वेन हंसि इत्यत्रानुस्वारानापत्तेः। गम्यते

CC-0. Vasishtha Tripathi Collections. Digitized by eGangotri

इत्यत्र तदापत्तेश्च। नच हे मपरे वेति सूत्रारम्भान्न विपरीतनियमः अन्यथा किं ह्मलयतीत्यत्रानुस्वाराप्राप्त्या मकारस्य मकारविधानं व्यर्थं स्यादिति वाच्यम्, प्रशाम् ह्मलयतीत्यत्र मो नो धातोरिति प्राप्तनत्ववारणाय तच्चारितार्थ्यात्। नच विपरीतनियमे मोराजीत्यत्र मग्रहणं व्यर्थं न राजीत्येव सिद्धेः यथाश्रुते नत्वानुस्वारोभयबाधनायोत्तरत्र चरितार्थमिति वाच्यम्, समधातोर्विचि निष्पन्नसम्शब्देन सह राडित्यस्य समासे सम्राडित्यत्र मोनोधातोरिति नत्ववारणाय चारितार्थ्यात्। नच मोनो धातोरिति सूत्रानन्तरं हे मपरे वा, नपरे नः इत्यनयोः पाठकरणेन नग्रहणाकरणरूपलाघवेन सिद्धौ मोराजीति प्रकरणे पाठसामर्थ्याद्विपरीतनियमो न भविष्यति ङ्णोरित्यत्र वानुवृत्तिस्तु मय उञोवेत्यत इति वाच्यम्, गिरिवेशम् ह्मलयतीत्यत्र संयोगान्तलोपबाधनार्थं मोराजीतिप्रकरणे तत्पाठसार्थक्यात्। नच संयोगान्तलोपं प्रत्यस्यासिद्धत्वम्। अपवादशास्त्रस्यासिद्धत्वाभावात्। नच झल एव संयोगान्तलोप इति वाच्यम्, वाक्यभेदेन कचिदझलोपि लोपात् अतएव अमो;मशिति सूत्रे शित्वप्रत्याख्यानं संगच्छते। तुल्यास्यप्रयत्नं सवर्णमिति निर्देशेन विपरीतनियमवारणं तु न युक्तम्। निर्देशेन खण्डनस्यायुक्तत्वादित्यलम्।

## शर्परे विसर्जनीयः ८९

ननु शर्परे न इत्येव सूत्रमस्तु शर्परे खरि विसर्जनीयस्य सत्वं नेत्यर्थः तेन कः त्सरुरित्यादौ न सत्वमिति चेन्न। इदानीं कुप्वोरित्यनेन चेन सत्वं नेत्यर्थकेन सत्वनिषेधेऽपि अद्भिः प्सातं, वासः क्षौममित्यत्रोपध्मानीयजिह्वामूलीययोरापत्तेः। विसर्जनीयवचनात्तु विकारमात्रं बाध्यत इत्यदोष इति मनोरमाकाराः।

तदयुक्तम्, कुप्वो ≍क ≍पौचेत्यत्र शर्परे नेत्यनुवर्त्य शर्परयोः कुप्वोः ≍कपौनेत्यर्थेन अद्भिः ≍प्सातं ≍वासः क्षौममित्यत्र ≍क ≍पयोर्निषेधेनादोषात्। अतएव कः करोतीत्यादौ सत्वदृष्ट्या जिह्वामूलीययोरसिद्धत्वात्सत्वं न अन्यथा अद्भिः प्सातमित्यादौ शर्परे विसर्जनीय इति विहितसत्वे एव जिह्वामूलीयोपध्मानीयौ स्यातामिति स्पष्टं शब्दरत्ने।

ननु विसर्जनीयस्य सोऽशर्परे इत्येव सूत्रमस्तु विसर्जनीयस्य सः शर्परे विसर्जनीय इति सूत्रद्वयं मास्तु इति चेन्न।

CC-0. Vasishtha Tripathi Collection. Digitized by eGangotri

तथा न्यासे वा शरीत्यनेन सत्वस्य विकल्पेन पक्षे विसर्गस्य सिद्धावपि कुप्त्रोरित्यत्र चाद्विसर्गं इत्यस्यालाभेन कः करोतीत्यादौ पक्षे सत्वापत्तेः ।

केचित्तु विसर्जनीयस्येत्यनुवर्त्यावर्त्यैकं प्रथमान्तत्वेन विपरिणम्य चाद्विसर्गं इत्यस्य लाभान्न कश्चिद्दोष इत्याहुः ।

तन्न, आवृत्तौ प्रथमान्तत्वेन विपरिणामे च प्रमाणाभावाद्गौरवाच्च ।

## समः सुटि ३०

नन्वत्र मः सुटि इति न्यासः क्रियतां सुटि समो मकारस्यैव सम्भवेन दोषाभावात् । नच सम् ग्रहणसत्वे समः परस्य सुडागमस्यैव सत्वेन तस्यैव ग्रहणमिदानीं सुट् प्रत्याहारस्य सुट् शब्दस्य वा ग्रहणापत्तिरिति वाच्यम्, संस्कृतं भक्षा इति निर्देशेन सुट्पदेन सुडागमस्यैव ग्रहणेनादोषात् । अतएव सम् सुट् इति वाक्ये न दोषः इति चेन्न ।

सम्शब्दादकचि सकम् शब्दे णिचि टिलोपे क्वौ सक्स्कर्त्ता इत्यत्र रुत्वानापत्तेः यथान्यासे तन्मध्यपतितन्यायेन सम्ग्रहणेन सकमो ग्रहणेन रुत्वस्येष्टत्वात् ।

केचित्तु उपस्कारशब्दे विनापि प्रत्ययमिति उपशब्दलोपे किं स्कार इत्यत्र रुत्वापत्तिरत्रन्यासे दूषणम् । नच निमित्तापाय इति परिभाषया सुटोऽपि निवृत्तिरिति वाच्यम्, तस्यासत्वादनित्यत्वाच्चादोषादिति वदन्ति ।

## सोऽपदादौ ३१

नन्वत्र सः प्रत्यये इत्येव न्यासोऽस्तु कपवर्गादौ प्रत्यये सत्वमिति तदर्थः । नच उरः कायतीति उरः कः इत्यत्र सुबुत्पत्तेःप्राक् समासेऽपदादेः कवर्गस्य सत्वेन यथान्यासे सत्वं भवति इदानीं न स्यादिति वाच्यम्, सोऽपदे इति विन्यस्य यस्मिन्निति परिभाषया तदादिग्रहणलाभेन कवर्गादावपदे इत्यर्थेन सिद्धे आदिग्रहणसामर्थ्येन अपदस्यैवादिरिति अवधारणगर्भसमासलाभः तेन च पदपदं पदत्वयोग्यप्रातिपदिकपरं ततश्च प्रकृते कपदस्य प्रातिपदिकतया सिद्धान्तेऽपि न सत्वमित्यदोषादिति स्पष्टं शब्दरत्ने इति चेन्न ।

काम्यच्प्रत्ययानुकरणे उरः काम्यजस्तीत्यादौ प्रकृतिवदनुकरण-

CC-0. Vasishtha Tripathi Collection. Digitized by eGangotri

-मिति प्रत्ययत्वेन सत्वापत्तेः यथान्यासेतु काम्यचः पदत्वेन न सत्वमिति तत्वम् । नच सः प्रत्यय इति न्यासे तदादेरुपस्थित्या विसर्गान्ततदादेर्विसर्गस्य सत्वं कवर्गादि प्रत्यये इत्यर्थान्न दोषः उरःशब्दस्य तदादित्वाभावादिति वाच्यम्, एवं तर्हि उत्तरसूत्रस्य इणः ष इत्यस्य इणः परस्य विसर्गान्तस्य तदादेः षत्वमित्यर्थापत्तौ दधिसर्पिष्पाशमित्यादौ षत्वसिद्धावपि सर्पिष्पाशमित्यादौ षत्वानापत्तेः । श्रुतानुमितयोरिति परिभाषया इण इति विसर्गस्यैव विशेषणम् ततश्च इण्परविसर्गान्ततदादेरित्यर्थादुक्तदोषवारणमिति चेत् तर्हि प्रकृतिप्रत्यययोः प्रत्येकमनुकरणे दोषतादवस्थ्यमित्यवेहि ।

## द्विस्त्रिश्चतुरिति कृत्वोऽर्थे ३२

अत्र सुच इत्येव सूत्रयितुमुचितमिति शेखरकाराः । नच सुच इति न्यासकरणे पदस्येतिविशेष्यान्तरसत्त्वेन प्रत्ययग्रहणपरिभाषया प्राप्ताप्राप्तविवेकन्यायेन तदादित्वरूपधर्ममात्रस्यैवोपस्थितौ सुजन्ततदादिपदावयवस्य विसर्गस्य षत्वमित्यर्थापत्तौ द्विःकरोतीत्यादावेव षत्वं स्यान्न परमद्विःकरोतीत्यादाविति वाच्यम्, नित्यंसमासेऽनुत्तरपदस्थस्येति सूत्रेऽनुत्तरपदस्थग्रहणेन क्वचिद्विशेष्यान्तरसत्वेऽपि तदादीतिधर्मिण उपस्थितौ इसुसोः सामर्थ्ये, वनोर चेत्यादाविव द्विस्तदन्तविधौ सुजन्तान्तपदस्येत्यर्थेन परमद्विष्करोतीत्यादावदोषात् । नच सुच इत्यस्य द्विष्करोति, त्रिष्करोतीत्यादौ चारितार्थ्येन चतुष्करोतीत्यादावसिद्धत्वेऽपि इदुदुपधस्येति नित्यषत्वापत्तिः सिद्धान्ते तु चतुरित्यस्य विशेषविहितत्वेन इदुदुपधस्येति षत्वापवादत्वान्न दोष इति वाच्यम्, द्वित्रिचतुर्भ्यः सुजित्यस्य स्थाने द्वित्रिभ्यां सुच् चतुरो लोपश्चेति न्यासकरणेन चतुरो रेफस्य लोपात्सुच एव विसर्गः इत्यप्रत्ययस्येति पर्युदासान्न नित्यषत्वप्राप्तिरित्यदोषात् ।

केचित्तु सुच इति सूत्रमिदुदुपधस्येति सूत्रात्प्रागेव पाठ्यमिति नासिद्धत्वादिशङ्केति वदन्ति ।

अन्येतु कस्कादिषु भ्रातुष्पुत्रशब्दस्य पाठबलेन लोपनिमित्तरेफस्थानिकविसर्गस्य इदुदुपधस्येति षत्वं नेति ज्ञापकान्न चतुष्करोतीत्यादौ नित्यषत्वप्राप्तिरित्याहुः ।

CC-0. Vasishtha Tripathi Collection. Digitized by eGangotri

यत्तु द्विष्करोति, त्रिष्करोतीत्यादौ इसुसोः सामर्थ्यं इत्येव षत्वसिद्ध्या सुच इति सूत्रवैयर्थ्यान्नासिद्धत्वमिति—

तन्न, अर्थवतोरिसुसोस्तत्र ग्रहणेन द्विष्करोतीत्यादौ इसुसोरित्यस्याप्राप्तेरित्यलम् ।

## प्रथमयोः पूर्वसवर्णः ३२

ननु सुट्शसोः पूर्वसवर्ण इत्येव सूत्रमस्तु एवं च प्रथमयोरिति विभक्त्योर्ग्रहणं नतु वचनयोरिति ज्ञापकानुसरणमपि न कार्यमिति लाघवम् । नच पदलाघवाभावः यथान्यासेऽप्येकशेषेण पदद्वयस्य सत्वात् सुटि पूर्वसवर्ण इत्येकं योगं कृत्वा ततः शसः इति तस्मादेव शसोऽनुवृत्या सिद्धे तस्माच्छस इत्यत्र शस्ग्रहणं न कार्यमिति विभावयन्तु सुधियः॥

प्रथमयोरिति सूत्रे वचनयोर्ग्रहणे औजसोः पूर्व इत्येव वक्तव्ये प्रथमयोर्ग्रहणाद्विभक्त्योर्ग्रहणमिति भाष्यम् ।

नच प्रथमयोः सवर्ण इत्येव सूत्रमस्तु पूर्वग्रहणं किमर्थमिति वाच्यम्, हरी इत्यादौ परस्यौकारस्य सवर्णदीर्घे दोषात् । नच ईदूदेद्द्विवचनं प्रगृह्यमिति सूत्रारम्भान्न परसवर्णदीर्घ इति वाच्यम्, वारिणी इत्यादौ तच्चारितार्थ्यात् । यदि चेकारांशे चारितार्थ्येऽपि ऊकारांशेऽचारितार्थ्येन ज्ञापकत्वं सम्यगित्युच्यते तदा पूर्वग्रहणं व्यर्थमेवेति तत्वविदः ।

अत्र दीर्घग्रहणाभावे हरी इत्यादौ त्रिमात्रस्थानिनां त्रिमात्रपूर्वसवर्णादेशापत्तिः । ईदूदेद्द्विवचनं प्रगृह्यमिति सूत्रवैयर्थ्यं तु न त्रिमात्रिकस्यैव विधाने ईदूदेदित्यत्रापि त्रिमात्रिकस्यैव ग्रहणात् । पूर्वो भवति सच दीर्घ इत्यर्थे पूर्वस्यादीर्घत्वात्सामर्थ्यात्पूर्वजातीय इत्यर्थो भविष्यतीति सवर्णग्रहणं सुत्यजमिति शेखरकृतः । नच गमॄनित्यस्यासिद्ध्यापत्तिः ॠत्वजातेॠकारेऽभावादिति वाच्याम् । अणुदित्सूत्रे जातिपक्षमाश्रित्याण्ग्रहणप्रत्याख्याने प्राल्कारीयतीत्याद्यर्थं ॠऌवर्णयोः साजात्यं वाच्यमिति वार्तिकस्यारभ्यमाणतयाऽदोषात् ।

## अर्थवदधातुरप्रत्ययः प्रातिपदिकम् ३४

स्वादिविधौ प्रातिपदिकाधिकारात्तां संज्ञामाहार्थवदिति शेखरः । नङ्याप्प्रातिपदिकादित्युक्तया प्रथमोपस्थितत्वान्ङ्याब्विधायकशास्त्राण

लिखित्वैव प्रातिपदिकसंज्ञाशास्त्रं लेखितुमुचितमिति चेन्न। ङ्याब्विधायकशास्त्रेष्वपि प्रातिपदिकाधिकारस्य सत्वेन तेभ्यः प्रागपि प्रातिपदिकसंज्ञालेखौचित्यात्।

अर्थवदिति। अर्थोऽस्यास्तीति अर्थवत् अर्थशब्दात्तदस्यास्त्यस्मिन्निति मतुपि "मादुपधायाश्चमतोर्वोऽयवादिभ्य" इति मकारस्य वकारे अर्थवदिति सिद्धम्।

ननु आन्तरतम्यादनुनासिकमकारस्यानुनासिकोवकारः कुतो नेति चेन्न। वकारस्य विधीयमानत्वेनाणुदित्सूत्राप्रवृत्त्या अनुनासिकाकारग्रहणाभावेनादोषात्। जातिपक्षेण गुणा अभेदका इति पक्षेण वा दोष इति चेच्छृणु "भाव्यमानेन सवर्णानां ग्रहणं न" इति परिभाषया जातिपक्षेण गुणा अभेदका इत्यनेन वाऽनुनासिकवकारस्य प्राप्त्यभाव इति।

नन्वत्रार्थशब्दादत इनिठनाविति परत्वादिनिः स्यात् नचास्मादेव निर्देशादर्थशब्दादिनिर्नेतिकल्प्यते इति वाच्यम्, अर्थी समर्थी अर्थिनश्च राजानो हिरण्येन भवन्तीति भाष्येणार्थशब्दादिनोऽनभिधानस्य कर्तुमशक्यत्वादिति चेन्न।

"अर्थाच्चासन्निहिते" इति वार्तिकेन प्रकृते सन्निहितत्वेन इनो निषेधात् नित्ये शब्दार्थसंबन्धे इति भाष्येण शब्दार्थसम्बन्धस्य नित्यतया शब्देऽर्थसन्निधानसत्वात्। असन्निहित इत्यनेन स्वविषयकेच्छासमवायित्वसम्बन्धेनार्थविशेषेऽर्थे अर्थशब्दादिनिरित्यर्थे तात्पर्यावधारणेन शब्दस्य तादृशसम्बन्धेनार्थविशिष्टत्वाभावाच्च। अर्थं लिप्सोः स्वविषयकेच्छासमवायित्वसंबन्धेनार्थविशिष्टतयाऽसन्निहितत्वेनेनिर्भवत्येव प्राप्तार्थस्याप्यर्थविषयकेच्छासत्वे इनिर्भवत्येव अनिष्टत्वेतु स्वाभाववत्वे सतीति निवेशनीयम् एवञ्च विद्यार्थीत्यादावपि निःसिद्धिः।

केचित्तु लक्ष्यानुरोधात्प्रयोजनवाच्यर्थशब्दादेवेनिरिति न दोष इति वदन्ति।

केचित्तु विद्यार्थिशब्दे लाघवमूलकेन न कर्मधारयान्मत्वर्थीय इति न्यायेन न इनिरपि तु विद्यामर्थयते इति विग्रहे णिनिरिति वदन्ति।

नन्वर्थवदिति पदे उगिदचामिति नुम् कुतो नेति चेन्न।

अर्थवच्छब्दस्य शब्दस्वरूपपरतया न सकृत्वेन सोर्लुका लुप्तत्वेन

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

प्रत्ययलक्षणाभावेन सर्वनामस्थानपरत्वाभावेन नुमोऽप्राप्तेः ।

ननु शब्दार्थयोः कः संबन्धः । न तावद्वाच्यवाचकभावः अनुभवतीत्यत्रानुभवरूपार्थस्य द्योतकोऽनुरिति सिद्धान्तस्तथाच वाच्यवाचकभावसम्बन्धग्रहणेऽनोरर्थवत्त्वाभावेन प्रातिपदिकत्वाभावात्सोरनुत्पत्त्या पदत्वाभावेन अनुभवतीत्यादौ निघातानापत्तेः । न च तिङ्ङतिङ इत्यत्र पदादित्यस्य नानुवृत्तिरिति न दोष इति वाच्यम्, वहुपचतीत्यत्र तिङश्चेति बहुचि निघातापत्तेः नवा द्योत्यद्योतकभावः घटादीनां प्रातिपदिकत्वानापत्तेः नाप्यभेदः अग्निशब्दोच्चारणे मुखे दाहापत्तरिति चेन्न।

शब्दार्थयोस्तादात्म्यं संबन्ध इति स्वीकारेणादोषात् । तादात्म्यं च तद्भिन्नत्वे सति तदभेदेन प्रतीयमानत्वम् अत एव ओमित्येकाक्षरं ब्रह्म वृद्धिरादैजिति सामानाधिकरण्येन निर्देशाः संगच्छन्त इत्यलम् ।

नन्वधातुरित्यत्र "नञर्थौ द्विविधः प्रोक्तः पर्युदासःप्रसज्यकः । पर्युदासः सदृग्ग्राही प्रसज्यस्तु निषेधकृत्" इत्यभियुक्तोक्त्या प्रसज्य एव नञ् इति चेन्न ।

प्रसज्यप्रतिषेधो हि क्रियया सह यत्र नञित्युक्त्या धातुना नञोऽसंबन्धेन विशेष्यविशेषणभावावगाह्युपस्थितिजनकत्वरूपसामर्थ्याभावेन समासानापत्तेः अतः पर्युदास एव । धातुं वर्जयित्वेति व्याख्यानं तु आर्थिकं निषेधमादृत्येति बोध्यम् ।

ननु अतिप्प्रातिपदिकम् इत्येव सूत्रमस्तु तिवन्ततदादिभिन्नं प्रातिपदिकसंज्ञकं भवतीति सूत्रार्थः तिविति च प्रत्याहारः तिप्तस्झीति तिशब्दमारभ्यासुपः पकारात् ह्रस्वो नपुंसक इत्यत्र भाष्ये व्यवहृतः । अर्थवत्सूत्रं कृत्तद्धितेतिसूत्रे कृत्तद्धितग्रहणं च मास्तु समासग्रहणं च नियमार्थं तेन वाक्ये न दोष इति चेन्न । धनं वनमित्यादौ प्रत्येकवर्णस्य दशदाडिमानीति निरर्थकसमुदायस्य पञ्चगवधन इत्यादौ पञ्चगवादेस्तिवन्ततदादिभिन्नत्वेन प्रातिपदिकत्वापत्तेः ।

केचित्तु लिङ्गवत्प्रातिपदिकमित्येव सूत्रमस्तु एवं च धनादौ प्रत्येकवर्णस्य दशदाडिमानीत्यादिसमुदायस्य पञ्चगवधनेत्यादौ पञ्चगवादेश्च लिङ्गवत्त्वाभावेन न प्रातिपदिकत्वप्राप्तिरिति न कश्चिद्दोषः, तद्धितग्रहणस्य नियमार्थतया च न कापडे इत्यादौ दोषः परमलिङ्गमित्यादिसिद्धा च समासे

CC-0. Vasishtha Tripathi Collection. Digitized by eGangotri

लिङ्गवत्त्वाभ्युपगमेन अनेनैव प्रातिपदिकत्वसिद्ध्या समासग्रहणं च न कार्यम् अव्ययादाप्सुप इति सूत्रबलाच्चाव्ययानामलिङ्गत्वेऽपि स्वाद्युत्पत्तिः, नचाधिहरीत्याद्यर्थमव्ययादाप्सुप इति सूत्रमिति वाच्यम्, तथासति अव्ययीभावात्सुप इत्येव वदेदिति वदन्ति।

अन्ये तु अर्थवत्प्रातिपदिकमित्येव सूत्रमस्तु अधातुग्रहणमप्रत्ययग्रहणं च मास्तु सुपो धातुप्रातिपदिकयोरित्यत्र धातुग्रहणेन धातोर्न प्रातिपदिकत्वमिति ज्ञापनाद्धातोः, सात्पदाद्योरित्यत्र सादग्रहणाच्च प्रत्ययस्य, तद्धितग्रहणाच्च प्रत्ययान्तस्य न प्रातिपदिकसंज्ञेति ज्ञापनान्न कश्चिद्दोषः समासग्रहणकृतनियमाच्च न वाक्यस्य संज्ञेति वदन्ति।

तन्न; अनेकनियमस्वीकारे ज्ञानगौरवात्।

कश्चित्तु अर्थवदविभक्ति प्रातिपदिकमित्येव सूत्रमस्तु उत्तरसूत्रे कृत्तद्धितग्रहणं च न कार्यं सातिग्रहणात्प्रत्ययस्य, समासग्रहणस्य नियमार्थत्वाद् वाक्यस्य च न संज्ञेति प्राह।

तन्न; प्राग्दिशीयानां विभक्तित्वेन तत्रेत्यादौ प्रातिपदिकत्वानापत्त्या पदत्वानापत्तेः। वस्तुतो न्यासे भवेत्यादौ प्रातिपदिकत्वापत्तिः, नङि सम्बुद्ध्योरित्यत्र सम्बुद्धिग्रहणेन प्रत्ययलक्षणेनाविभक्तीति निषेधाप्रवृत्तेः। मम तु शपः प्रत्ययत्वेन तस्य प्रत्ययान्तत्वाद्धतिरिति ध्येयम्।

परे तु अर्थवदधातुः प्रातिपदिकम् इत्येव न्यासः कार्यः। अर्थवत्त्वं च वृत्तिमत्त्वं वृत्तिश्च शक्तिलक्षणान्यतररूपा। शक्तिश्चोपस्थापिकैव न बोधजनिकेति तादृशशक्तेः कृदन्ते तद्धितान्ते अव्युत्पन्नप्रातिपदिके एव सत्वेन तत्र तत्र प्रातिपदिकत्वसिद्धिः। सुबन्ते तिङन्ते तदितरवाक्ये च न सेति न प्रातिपदिकत्वप्राप्तिः। कृत्तद्धितेत्यत्र कृत्समासावित्येवास्तु लिडादावुपसज्जनिष्यमाणन्यायेनाधातुपर्युदासाप्रवृत्तौ तत्त्वसिद्धये कृद्ग्रहणम् मूलकेनोपदंशमित्यत्रोपस्थापिकायाः शक्तेः सत्त्वेऽपि समासग्रहणस्य नियमार्थत्वान्न दोषः केवलप्रत्ययस्य तु फलाभावादेव न तत्त्वमिति वदन्ति।

अन्ये तु शक्तिमत्प्रातिपदिकमित्येव सूत्रमस्तु अव्ययेऽपि शक्तिसत्त्वात्प्रातिपदिकत्वसिद्धिः। वाक्ये शक्तिसत्त्वेऽपि समासग्रहणकृतनियमादेव न तत्त्वम्। धातोः प्रातिपदिकत्वेऽपि न स्वाद्युत्पत्तिः, अपवादै-

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

स्तिङादिभिर्बाधात् । केवलप्रत्ययस्य प्रातिपदिकत्वेऽपि संख्याकर्माद्यन्वयायोगान्न सुबापत्तिः, औत्सर्गिकमेकवचनमपि सत्येव गमके, प्रत्ययान्तस्य प्रातिपदिकत्वे अहन्नित्यत्र नलोपापत्तिस्तु वक्तुमशक्या नलोपः प्रातिपदिकान्तस्येत्यस्य स्थाने तिङन्तभिन्नपदान्तस्य नस्य लोप इत्यर्थकेन नलोपोऽतिङिति न्यासेन सिद्धेः । नच अ अहन्निति यस्मिन् व्यापारे स आह। व्यापार इत्यत्र नलोपापत्तिरिति वाच्यम् , नलोपः सुब्यत इति न्यासेन सिद्धेः । एवं च रामान् सर्वस्मिन्नित्यादौ नलोपवारणाय सामर्थ्याश्रयणमपि न कार्यम् । न च सिंहो माणवक स्यादौ लाक्षणिकसिंहादिशब्दे प्रातिपदिकत्वं न स्याच्छक्त्यभावादिति वाच्यम् , वैयाकरणनये प्रसिद्धाऽप्रसिद्धभेदेन शक्तिद्वैविध्यमङ्गीकृत्य लक्षणाया अनङ्गीकारेणादोषात् । शक्यार्थं एव सिंहादिपदानि संसाध्य पश्चाल्लक्षणेत्यभ्युपगमेनादोषाच्च । न च केवलप्रत्ययस्य प्रत्ययान्तस्य वा प्रातिपदिकत्वे ह्रस्वापत्तिरिति वाच्यम् , ह्रस्वो नपुंसके इत्येव सिद्धे प्रातिपदिकग्रहणसामर्थ्येन सत्वप्रधानप्रातिपदिकस्य ग्रहणमिति स्वीकारेणादोषादित्याहुः ।

नन्वर्थवद्ग्रहणं किमर्थमिति चेन्न । अर्थवद्ग्रहणाभावे धनं वनमित्यादौ प्रतिवर्णं प्रातिपदिकसंज्ञायामेकवचनमुत्सर्गतः करिष्यते इति भाष्यसिद्धान्तेन हुं फडादिभ्य इव सोरुत्पत्त्यापत्तेः । नचार्थवत्परिभाषया निस्तारः । विशिष्टरूपोपादानाभावेनोक्तपरिभाषाऽप्रवृत्तेः । न च प्रतिवर्णं प्रातिपदिकसंज्ञायामन्तरङ्गत्वात् स्वाद्युत्पत्तौ सत्यां ततः समुदायप्रातिपदिकत्वात्सुपोधात्विति लुकि न कश्चिद्दोष इति वाच्यम् , जश्त्वनलोपाद्यापत्तेस्तादवस्थ्यात् । पचति धनतीत्यादौ तु न दोषो धातुप्रत्ययान्तपदयोः तदवयवपरत्वेन निषेधात् । धिनोतेर्धनमितिव्युत्पत्तिपक्षे वनमित्युदाहरणमिति शब्दरत्नकारः । कैयटस्तु वन संभक्तौ धन धान्ये इत्येतयोर्धात्वोः पचाद्यचि व्युत्पादितयोरधातुप्रतिषेधो न अव्युत्पत्तिपक्षाश्रयणादित्युक्त्वा "किंच प्रतिवर्णं धनवनशब्दयोः संज्ञा स्यात् नचप्रतिवर्णं धातुसंज्ञेति" ब्रुवाणोऽधातुप्रत्ययपदयोर्नावयवपरतां सूचयति । युक्तं चैतत् अवयवपरत्वेमानाभावात् । यदि तु अवयवावयव संख्याकर्माद्ययोगात् सुबनुत्पत्तिः औत्सर्गिकैकवचनमपि न गमकं विना

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

तदप्रवृत्तेः अव्यये तु अव्ययादाप्सुप इत्येव गमकं पचतः कल्पमित्यत्र तु तदुत्पत्तौ भाष्यप्रयोग एव गमकमित्युच्यते तदा दशदाडिमानीत्यादिनिरर्थकसमुदायस्य प्रातिपदिकसंज्ञावारणमेवार्थवद्ग्रहणप्रयोजनमित्यवधेयम् ।

विषमीकारास्तु–दशदाडिमानीति निरर्थकसमुदायस्य समासग्रहणकृतनियमेन व्यावृत्तिसंभवात् नैतदर्थवद्ग्रहणव्यावर्त्यम् । नचार्थवत्समुदायानां समासग्रहणं नियमार्थमितिभाष्ये तन्त्रेण अर्थवतां योऽर्थवान् समुदायः स एव समासग्रहणकृतनियमेन व्यावर्त्यते न दशदाडिमानीत्यादीति वाच्यम्, व्यावर्त्यसमुदायेऽर्थवत्त्वविशेषणे फलाभावात् । भाष्येऽपि दशदाडिमानीति पदसमुदायस्य प्रातिपदिकत्वमाशङ्क्यानर्थकत्वेन नेति परिहृत्य गामभ्याज शुक्लामित्यादि सार्थकवाक्यस्यप्रातिपदिकत्वमाशङ्क्य समासग्रहणकृतनियमेन वारितम् । एवं च समासग्रहणकृतनियमेनैव निरर्थकसार्थकसमुदाययोः प्रातिपदिकत्ववारणं भाष्याभिप्रेतं लभ्यते अनर्थकसमुदाये अनर्थकत्वान्नेति वारणं तु समासग्रहणकृतनियमस्यासाधारणफलप्रदर्शनाय न तु तदेवार्थवद्ग्रहणप्रयोजनं किन्तु हरिषु करोषीत्यादौ षुकरोषीत्यस्य प्रातिपदिकत्ववारणमर्थवद्ग्रहणस्य मुख्यं प्रयोजनं समासग्रहणकृतनियमेन तु न व्यावृत्तिः पूर्वभागस्यापदत्वादित्याहुः ।

नच धातुसाहचर्यात्प्रातिपदिकसंज्ञाप्रयोजकस्य सुपो ग्रहणान्न षुकरोषीत्यादौ लुगापत्तिर्दोष इति वाच्यम्, समुदायघटकसुपः प्रकृते प्रातिपदिकसंज्ञाप्रयोजकत्वादन्यथा प्रत्ययान्ततदादित्वात्सा न स्यात् । अपोयोनियन्मतुपु इति वार्तिककारस्सेण प्रकृते सहचरितपरिभाषाया अनाश्रयणाच्चेति दिक् ।

नन्वस्मिन्सूत्रे अधातुग्रहणं किमर्थमिति चेन्न । अहन्नित्यत्र धातोः प्रातिपदिकत्वापत्तौ परत्वात्स्वाद्यापत्तेः। नच भूवादय इत्यस्य लविधौ तिबादिविधौ चोपस्थितेर्निरवकाशतयाऽपवादैस्तिबादिभिः स्वादीनां बाधान्न दोष इति वाच्यम्, एवमपि नलोपापत्तेर्दुर्वारत्वात् । नच कार्यकालपक्षे प्रत्ययान्तत्वेन पर्युदास इति वाच्यम्, नङि संबुद्ध्योरित्यत्र सम्बुद्धिग्रहणेन प्रत्ययलक्षणेनोत्तरपदत्वस्यापर्युदासाभावज्ञापकत्वात्, अन्यथा राजे-

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

त्यादौ नलोपो न स्यात् । नच राजेत्यादौ कृदन्तत्वात्प्राप्तिरिति वाच्यम्, तत्राप्यप्रत्यय इत्यस्य सम्बन्धात् । अत एव दाक्षी दिदृक्षु इत्यादौ न सुपो लुक् । नच सुब्लोपविषयमेवज्ञापकम् असतिबाधके प्रमाणानां सामान्ये पक्षपातात् अन्यथा सूत्रोपस्थितङिसंबुद्धिमात्रविषयता स्यादिति राजपुरुषासिद्धिः ।

नच नलोपोऽतिङ इति न्यासान्नाहन्नित्यादौ दोषः 'तिङन्ततदादिभिन्नं यत्पद तदन्तस्य नस्य लोप इति सूत्रार्थं' इति वाच्यम्, रामानित्यादौ नलोपापत्तेः तस्माच्छसो न इति सूत्रारम्भान्न नलोप इति तु वक्तुमशक्यम् निर्विसर्गकरूपसिद्ध्यर्थं सूत्रसार्थक्यात् । नच सलोपविधानेनाऽकारकरणेन वा निर्विसर्गस्य सिद्धत्वान्नत्वविधानसामर्थ्यं सूपपादमिति वाच्यम्, अनुकरणे अनुकरणं प्रकृतिवन्नेति पक्षे सम्बुद्धौ हल्ङ्यादिलोपे प्रत्ययलक्षणेन नङि संबुद्ध्योरिति निषेधाच्छ्रवणार्थं तत्सार्थक्यात् । नच कानाम्रेडित इति निर्देशात् तस्माच्छसो नः पुंसीत्यत्र तस्माच्छसोन्सपुंसीतिविन्यस्य संयोगान्तलोपस्यासिद्धत्वाद्वा रामानित्यादौ न दोष इति वाच्यम्, सर्वस्मिन्नित्यत्र नलोपापत्तेः । नचोच्चारणसामर्थ्यान्न नलोप इति वाच्यम्, हे सर्वस्मिन्शयेत्यत्र नलोपस्यासिद्धत्वात्संयोगसंज्ञायां गुरुत्वे गुरोरनृत इति प्लुतार्थं तदावश्यकत्वात् । नचेकोऽचिविभक्ताविति सूत्रेऽजग्रहणं न लुमतेति निषेधानित्यत्वज्ञापनार्थमिति भाष्येण संयोगसंज्ञायां नलोपासिद्धत्वेनेति ज्ञाप्यते अन्यथा वारिशुशयेत्यादौ नुमि प्लुतः तदभावे च नेति फलभेदसत्वेन अजग्रहणस्य ज्ञापकत्वायोग इति वाच्यम्, शयवासेति सूत्रे हलदन्तादित्यस्यानुवृत्त्याऽलुकोऽभावेनोक्तरूपस्यैवाभावात् । नच वारिचर इति लक्ष्ये तत्पुरुषे कृतीत्यलुकि उक्तरीत्या फलभेद इति ज्ञापनस्य सुस्थतया नत्वविधानान्न नलोप इति वाच्यम्, एधेरन्पचेराइत्यत्रनलोपानापत्तेः प्रत्ययग्रहणपरिभाषया तदाद्युपस्थितौ समुदायस्य तिङन्ततदादिभिन्नत्वेन नलोपोपपादने तु अ अहन्निति यस्मिन्व्यापारे स आहा व्यापार इत्यत्र परादिवद्भावेनतिङन्ततदादित्वसत्त्वान्नलोपानापत्तिः

ननु नलोपः सुब्यतोऽन्तस्येतिन्यासान्न दोषः 'यतः सुब्विधीयते तादृशं यत्पदं तदन्तस्य नस्य लोप इत्यर्थादि'ति चेत् ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

अहन्निवाचरन्नित्यर्थे सर्वप्रातिपदिकेभ्य इति क्विपापत्तेर्दुर्वारत्वात् अहन्नकरोदित्यर्थे तत्करोतीति णिजापत्तेश्च ।

यत्तु गतिकारकोपपदानामिति परिभाषया चर्मकार इत्यत्र सुबुत्पत्तेः प्राक् समासे नलोपो न स्यात् । सिद्धान्ते तु पदपदस्य पदत्वयोग्यपरत्वान्न दोष इति—

तदसत्, तया पूर्वपदे सुबनुत्पत्तेरबोधनात् पदपदस्य पदत्वयोग्यपरत्वे प्रातिपदिकग्रहणवैयर्थ्यापत्तेः, राजानावित्यत्र नलोपापत्तेश्चेत्यलम् । तस्मादधातुग्रहणमहन्नित्यस्य प्रातिपदिकत्ववारणायावश्यकमिति स्थितम् ।

आवर्तिते प्रत्ययपदे प्रत्ययग्रहणपरिभाषया तदन्तग्रहणमिति शेखरः । केचित्तु प्रत्यय इत्यस्यावृत्तौ नञर्थैकदेशे भेदे एकस्य प्रत्ययस्य, परस्य प्रत्ययस्योपस्थिततदादिपदार्थेऽन्वयेनासमर्थ्यात्समासो न स्यादतोऽप्रत्यय इत्यस्यावृत्तिर्युक्तेति वदन्ति ।

वस्तुतस्तु प्रत्यय इत्यस्यावृत्तावपि प्रत्ययग्रहणपरिभाषाया लक्षणाग्राहकतया उभयोः पदार्थयोर्नञर्थभेदेनान्वयात्सामर्थ्यमस्तीति ध्येयम् ।

नन्वावृत्तौ किम्मानमिति चेदत्र मनोरमाकारः—यदि प्रत्ययं वर्जयित्वेत्यर्थो नाश्रियेत तदा सात्पदाद्योरितिसूत्रे साद्ग्रहणं व्यर्थं स्यात् । यदि च प्रत्ययान्तं वर्जयित्वेत्यर्थो न स्यात्तदा कृत्तद्धितेतिसूत्रे तद्धितान्तस्य संज्ञाविधानं व्यर्थं स्यात् औपगव इत्यादौ अर्थवत्सूत्रेणैव तत्सिद्धेरिति । न च अकारो वासुदेवस्तस्यापत्यमिरित्यत्र अत इञ् इत्यनेन इञि भत्वादकारलोपे इमात्रं तिष्ठति तदर्थं तद्धितग्रहणं चरितार्थं तत्र च प्रत्ययपर्युदासान्न पूर्वसूत्रस्य प्राप्तिरिति वाच्यम्, अ अस् इ इत्यवस्थायां सुपो लुगर्थं प्रातिपदिकत्वस्यावश्यकत्वेन अ अस इ इत्यस्य स्थाने इ इत्यादेश इति आनुमानिकस्थान्यादेशभावस्वीकारेण स्थानिवत्त्वेन प्रातिपदिकत्वसिद्धौ तद्धितग्रहणस्य तदर्थमनावश्यकत्वात् । आदेशपदेन आनुमानिकोऽप्यादेशो गृह्यते इत्यत्र स्थानिवत्सूत्रस्थमादेशग्रहणं मानमिति शेखरे स्पष्टम् । न च अधुनेत्यस्य प्रातिपदिकत्वार्थं तद्धितग्रहणमिति वाच्यम्, अधुनाप्रत्ययः इदमो लोपश्चेति पक्षस्य भाष्ये उक्तत्वेऽपि धुनाप्रत्ययः इदमोऽशिति पक्षान्तरस्यापि तत्रोक्तत्वात् चरितार्थ्यमिति स्यात् । स्वार्थिकादव्ययाद-

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

शब्दादिनौ यस्येतिचेति लोपे ई इत्यत्र चरितार्थं तदिति वाच्यम्, निपात इति प्रगृह्यसंज्ञाया एवान्तरङ्गत्वात्प्रवृत्तेर्यस्येति चेतिलोपाप्रवृत्तेः। न च प्रातिपदिकादित्यधिकाराद्विभाषासुप इत्यत्र सुब्ग्रहणाच्च प्रातिपदिकात्तद्धितोत्पत्तौ अशब्दादिनौ तच्चरितार्थमिति वाच्यम्, "इतिठनोरेकाक्षरात्प्रतिषेधः" इति वार्तिकादिन्यादेरप्रवृत्तेः । अशब्दादतिशायने इष्ठनि नित्यत्वात्प्राप्तं टेरितिलोपं बाधित्वाऽन्तरङ्गत्वात्प्रातिपदिकसंज्ञाया एव प्रवृत्तेः । घकालतनेष्वित्यलुग्विधानसामर्थ्यात्सुबन्तात्तद्धितोत्पत्तिरिति पक्षस्यैवाभ्युपगमाच्च ।

ननु घकालतनेष्वितिज्ञापकात् सुबन्तात्तद्धितोत्पत्तौ दिवातनमित्यत्र सप्तमी श्रवणापत्तिः सुपोधातुरितिवदव्ययादित्यस्यापि घकालेत्यनेन बाधात् । नच प्रत्ययाश्रयत्वेन समानाश्रयस्य लुको बाधकत्वस्येष्टतयाऽव्ययादित्यस्याव्ययमात्रापेक्षत्वेनान्तरङ्गत्वात्समानाश्रयत्वविरहादिति वाच्यम्, प्रातिपदिकाधिकारात्ततस्तदुत्पत्तौ तेनाऽलुग्विधानबलेनासद्विभक्त्याकर्षणेनाव्ययादितिलुकोऽपि तद्धितोत्पत्त्युत्तरकालिकलुस्थानिकत्वात्तस्यापि बाधकत्वं स्यादिति चेन्न ।

हलदन्तादित्यनुवृत्याऽव्ययादलुकोऽप्रवृत्तेः ।

न च सुबन्तादुत्पत्तौ द्विपद आगतं द्विपाद्रूप्यमित्यत्रान्तरङ्गत्वाद्विभक्तिनिमित्तकपदादेशः स्यादिति वाच्यम्, अन्तरङ्गानपीतिन्यायेन पूर्वं लुक्प्रवृत्तेः । विभाषा सुप इत्यत्र सुब्ग्रहणं तु तिङन्ताद्बहुचोऽभावाय ।

न च केवलादनुकृताद्व्यञ्जनमात्राड्शब्दात्कनि नित्यत्वाड्लोपे चरितार्थं तद्धितग्रहणमिति वाच्यम्, अनुकार्यानुकरणयोरभेदविवक्षायां सुबभावेन ततः कनोऽसम्भवाद् अन्तरङ्गत्वात्प्रातिपदिकसंज्ञाया एव पूर्वं प्रवृत्तेश्च। ननु कृद्ग्रहणमपि प्रत्ययान्तपर्युदासे मानमिति वक्तुमुचितं कथं प्रथमोपस्थितं तमपहाय तद्धितग्रहणं मानमुक्तमिति चेन्न ।

लिड्धुगित्यादौ अधातुरिति पर्युदासेन पूर्वसूत्राप्रवृत्त्या चारितार्थ्यात् । नचावयवस्य धातुत्वेऽपि समुदायस्य धातुत्वाभावात्पूर्वेण सिद्धिरिति वाच्यम्, उपसर्जनिष्यमाणपरिभाषया उपसर्जनिष्यमाणनिमित्तोऽपवादः अधातुरितिउपसञ्जातनिमित्तमर्थवत्प्रातिपदिकं बाधते तथा च लिड्धौ पूर्वसूत्राप्रवृत्त्या कृद्ग्रहणचारितार्थ्यमित्यदोषात् ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

केचित्तु अप्रत्यय इति किमर्थ काण्डे कुण्डथे इति, न कर्तव्यं कृत्तद्धितग्रहणं नियमार्थं भविष्यति कृत्तद्धितान्तस्यैव प्रत्ययान्तस्य प्रातिपदिकसंज्ञा नान्यस्येतिभाष्येण कृद्ग्रहणस्यापि प्रत्ययान्तपर्युदासे प्रमाणत्वमेव परत्वान्नित्यत्वात्प्रतिपदोक्तत्वाच्चापृक्तस्य वस्य लोपे लिडित्यादौ चारितार्थ्यं तु न संज्ञायोर्बाध्यबाधकभावविरहेण अपृक्तसंज्ञासमकालमेव प्रातिपदिकसंज्ञाप्रवृत्तेः, 'अधुना' प्रत्ययपक्षे तद्धितस्य चारितार्थ्येनास्यैव प्रमाणता धुना प्रत्ययपक्षे तु तस्यापीति वदन्ति।

ननु येनविधिरित्यत्र स्वंरूपमित्यस्यानुवृत्त्या स्वस्य च संज्ञेत्यर्थेन, स्वंरूपमित्यस्यप्रत्याख्याने तदन्तस्य चेतिन्यासेन प्रत्ययस्यापि निषेधः सिद्ध एवेत्यावृत्तिर्व्यर्थेतिचेद्—

इदमत्रावधेयम्—केवलस्य ग्रहणाय स्वस्य च संज्ञेत्यर्थो, मूलकृता कृतः, तदन्तस्य चेतिन्यासश्च शेखरकृता। स व्यपदेशिवद्भावमूलकः अपूर्वो वा। नाद्यः रोणीति सूत्रविहितप्रत्ययस्य रोणीशब्दादप्रवृत्त्यापत्तेः व्यपदेशिवद्भावोऽप्रातिपदिकेनेतिनिषेधात्, नान्त्यः सुप् तिङन्तमितिसूत्रे सुप्तिङोः संज्ञावारणाय अन्तग्रहणस्य चारितार्थेन अन्तग्रहणं संज्ञाविधावितिपरिभाषाज्ञापकमिति भाष्योक्त्यसङ्गतेः। एवञ्च व्यपदेशिवद्भावोऽप्रातिपदिकेनेति परिभाषा सूत्रोपात्तान्तादिशब्दविषयेत्यास्थीयते इति रोणीशब्दादणप्रत्ययोनिर्बाध इति प्रथमपक्ष आस्थीयते ततश्च असहाय एव व्यपदेशिवद्भावप्रवृत्त्या केवलप्रत्ययस्य प्रातिपदिकत्वनिषेधाय प्रत्ययपर्युदास आवश्यक इति।

न च संज्ञाविधावितिपरिभाषया तदन्तविधिनिषेधःस्यादिति वाच्यम्, ज्ञापकसाजात्यात् यत्र संज्ञानिष्ठविधेयतानिरूपितोद्देश्यता साक्षात्प्रत्ययनिष्ठा तत्रैव तदन्तविधिनिषेध इतिस्वीकारेणादोषात् अर्थात् संज्ञानिष्ठविधेयतानिरूपितसाक्षादुद्देश्यताप्रयोजकं प्रत्ययमात्रवृत्तिविषयताप्रयोजकं पदन्ततदादिविशेष्यकतदन्तग्राहकं न भवतीति परिभाषार्थः। एवं कृत्तद्धितसूत्रेऽपि अर्थवतोऽनुवृत्त्या प्रत्ययनिष्ठसाक्षादुद्देश्यताया अभावेन न निषेधः। नचार्थवदित्यनुवृत्तिसामर्थ्यात्तदन्तविधिरिति मनोरमाविरोध इति वाच्यम्, अर्थवदनुवृत्तौ संज्ञाविधावित्यस्य प्रवृत्तिविरहे तदन्तविधिरित्यर्थवत्त्वेनाबोधात्। न च अप्रत्यय इत्यस्येदानीं प

CC-0. Vasishtha Tripathi Collection. Digitized by eGangotri

भाषाया अप्रवृत्त्या तदन्तविधिःस्यादिति वाच्यम्, आद्यवच्छेदेन प्रत्ययः षः इत् इत्यर्थेन प्रत्यये साक्षादुद्देश्यतायाः सत्वात् । तत्र प्रत्ययपदस्य प्रत्ययबोधकपदत्वाभावेनादोषाच्च । न च कृदतिङित्यादावगतिरिति वाच्यम्, प्रसज्यप्रतिषेधाङ्गीकारेण प्रत्ययः कृत्संज्ञकोभवति तिङ् कृत्संज्ञकोनभवतीत्यर्थस्वीकारेण प्रत्ययनिष्ठायाः साक्षादुद्देश्यतायाः सत्वेनादोषात् धातोरित्यस्य संबन्धेन प्रत्ययग्रहणं चापञ्चम्या इति तदन्तविधिनिषेधाच्च । एवं लः परस्मैपदं, सुपः, तिङस्त्रीणि त्रीणि, तान्येकवचनद्विवचनबहुवचनानीत्यादिसूत्रेषु कार्यकालपक्षे विधिशास्त्रेणैकवाक्यतया धातोरित्यधिकारात्प्रत्ययग्रहणं चापञ्चम्या इति तदन्तविधिनिषेधः । एकवचनं संबुद्धिः, सुप इत्यादौ प्रतिपदिकादित्यस्य संबन्धेन उक्तरीत्या निषेधः । तद्धितश्चासर्वविभक्तिः, सामन्त्रितम्, प्रथमचरमेत्यादौ च महासंज्ञाकरणसामर्थ्यान्निषेधाप्रवृत्तेस्तदन्तविधिरित्यलम् ।

केचित्तु संज्ञानिष्ठविधेयतानिरूपितसाक्षात्प्रत्ययेतरावृत्त्युद्देश्यताप्रयोजकपदघटितशास्त्रघटकप्रत्ययमात्रवृत्तिविषयताप्रयोजकं पदं तदन्तवृत्तिविषयताप्रयोजकं न भवतीत्यर्थाभ्युपगमेन सकलदोषवारणम् । ईदूदेद्द्विवचनमित्यादौ ईदन्तं यद्द्विवचनमित्यर्थेन प्रत्ययेतरावृत्त्युद्देश्यतायाः सत्वेन तदन्तविधिनिषेधः सुलभः । सामन्त्रितं क्त्वातोसुन्कसुनः इत्यादौ च शब्दस्वरूपविशेष्यमादायोद्देश्यतायाः प्रत्ययेतरवृत्तित्वेनादोष इत्याहुः ।

वस्तुतस्तु संज्ञाविशिष्टसंज्ञाविधौ प्रत्ययग्रहण इत्याद्यर्थस्वीकारेण न कापि दोषः । वै० स्वतादात्म्य स्वविशिष्टशास्त्रप्रयोज्यविधेयतावच्छेदकानुपूर्व्यभाववत्वोभयसंबन्धेन, अत्रवै० स्वघटितत्व स्वनिष्ठविधेयतानिरूपितप्रत्ययेतरनिष्ठोद्देश्यताप्रयोजकपदघटितत्वोभयसंबन्धेन । डतिचेत्यत्र निषेधाभावादाद्यः, अर्थवदित्यादौ निषेधवारणाय द्वितीयः । कृदतिङित्यत्र तिङ्भिन्नप्रत्ययस्यैव ग्रहणेन प्रत्ययेतरनिष्ठोद्देश्यताया अभावात् क्त्वातोसुन्नित्यादौ त्वव्ययसंज्ञानिष्ठविधेयतानिरूपितप्रत्ययेतरस्वरादिनिष्ठोद्देश्यताप्रयोजकपदघटितशास्त्रप्रयोज्यविधेयतावच्छेदकानुपूर्व्यभाववत्वविरहान्न दोष इति ध्येयम् ।

नन्वर्थवदिति, कृत्तद्धितसमासाश्च, ह्रस्वो नपुंसके प्रातिपदिकादितिसूत्रत्रयं

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

मास्तु पचतीत्यादौ संख्याकर्मादेरभावान्न स्त्राद्युत्पत्तिः सुपो धातुप्रातिपदिकयोरित्यस्य स्थाने सुपोऽकृद्वृत्तेरितिन्यासेन मूलकेनोपदंशमित्यादौ न दोषः। धातुप्रत्ययाद्यतिरिक्तशब्दस्वरूपस्य फिडितिसंज्ञास्वीकारान्न फिषोऽन्त उदात्त इत्यादौ दोषः, नलोपोऽतिङः इति न्यासात् ह्रस्वोनपुंसकेयत्तस्येति न्यासान्न तेष्वपि दोषः इति चेन्न।

प्रातिपदिकाद्धात्वर्थे सर्वप्रातिपदिकेभ्य इत्यत्रानिर्वाहात् प्रकृतिपदोपादाने तु सर्वस्यविकारः सार्वे इत्यत्राजं बाधित्वा सर्वस्यसुपीत्याद्युदात्तत्वेऽओनापत्तिरितिशेखरे स्पष्टम्।

ननु कृत्तद्धितसमासाश्चेतिसूत्रं मास्तु वृत्तिश्चेत्येवास्तु अर्थवत्प्रातिपादिकमिति न्यासेन सिद्धे वृत्तिश्चेतिसूत्रं नियमार्थं यत्र संघाते पूर्वभागः पदं तस्य चेत्तर्हिवृत्तेरेवेति चेन्न।

मूलकेनोपदंशंभुंक्ते इति वाक्यस्यापि प्रातिपदिकत्वेन सुब्लुगापत्तेरिति दिक्।

ननु व्युत्पत्तिपक्षे कृत्तद्धितसूत्रेणैव प्रातिपदिकत्वे सिद्धेऽर्थवत्सूत्रं किमर्थम्। नच च वा ह इत्याद्यर्थंतदिति वाच्यम्, तत्रापि प्रकृत्यादिकल्पनसंभवात् निपातस्यानर्थकस्येतिवार्तिकेन सिद्धत्वाच्चेति चेन्न।

वहुपटव इत्यत्र प्रातिपदिकत्वायार्थवत्सूत्रस्यावश्यकत्वात् समुदायस्यप्रातिपदिकत्वे प्रथमजसोलुकि विशिष्टाज्जसि चित इत्यन्तोदात्तत्वं टकाराकारस्य सूत्राभावेतकारोत्तराकारस्य स्यादतः सूत्रम्। नच स्वप्रकृतिघटितत्व स्वस्वप्रकृतोतराघटितत्वोभयसम्बन्धेन तद्धितविशिष्टस्य तद्धितपदेन ग्रहणान्नदोष इति वाच्यम्, पचतकि अकैदित्यादौ प्रातिपदिकत्वापत्तेः। नन्वेवं वहच्पूर्वः प्रातिपदिकमित्येव सूत्र्यतामिति चेन्न समासग्रहणस्य नियमार्थत्वानापत्तौ मूलकेनोपदंशमित्यस्यप्रातिप्रदिकत्वापत्तेः शिवभागवतः परमगार्ग्यायण इत्यादेः प्रातिपदिकत्वाय यथान्यासस्यावश्यकत्वाच्च। नहि तत्र कृत्तद्धितसूत्रेण सिद्धिसंभवः भागवत इत्यस्य तद्धितान्ततदादित्वेऽपि शिवभागवत इत्यस्य तत्वाभावात् शिवभगवदित्यत्र समासत्वेऽपि शिवभागवत इत्यस्य तत्वाभावादित्यलम्।

CC-0. Vasishtha Tripathi Collection. Digitized by eGangotri

प्रत्ययपर्युदासे सार्वपदार्थोरिति सूत्रघटक सादितिमानमिति मनो-

रमाकाराः । नचोशब्दात्सातिप्रत्यये ततो बहुचि एकादेशे बहुसादिति-रूपमिष्टमिदानीं पूर्वान्तवद्भावेन एकादेशविशिष्टस्य बहुत्वात् बहुच्पूर्वस्य नेति वार्तिकेन बहुवाचावित्यत्रेव प्रत्ययलक्षणनिषेधेन सादित्यस्यापदत्वात्तत्रषत्वनिषेधो न स्यादतः सातिग्रहणं चरितार्थमिति वाच्यम्, प्रत्यासत्त्या बहुच्प्रत्ययप्रवृत्तिप्रयोजकीभूतसुप्प्रयोज्यपदत्वे कर्तव्ये प्रत्ययलक्षणनिषेधेऽपि सात्प्रकृतिकसुन्निमित्तकपदत्वेऽनिषेधेन तद्वैयर्थ्यस्य सुवचत्वात् । प्रत्ययपर्युदासाभावे बहुवाचावित्यादौ बहुचोऽपि वात्सुपि ततस्योः सुप्सुपेतिसमासे उत्तरपदत्वे चेतिनिषेधेनैव कुत्वव्यावृत्त्या बहुच्पूर्वस्य न इति वचनस्यैव प्रत्ययपर्युदासे ज्ञापकत्वसम्भवाच्च । प्रत्ययपर्युदासफलं हरिषुइत्यादौ सोः प्रातिपदिकत्वाभावः। अन्यथा औत्सर्गिकैकवचने नपुंसकत्वमाश्रित्य लुक्यपि सात्पदाद्योरिति षत्वनिषेधः स्यात् । षत्वं तु भविष्यतीत्यादौ चरितार्थम् । नच प्रत्ययपर्युदासाभावेऽपि सात्पदाद्योरितिसूत्रे सातिग्रहणं श्रूयमाणप्रकृतिकप्रत्ययरूपपदस्य षत्वनिषेधश्चेत् सातेरेवेतिनियमार्थमतो न दोषः व्यतिसे इत्यादौ षत्वनिषेधाय श्रूयमाणप्रकृतिकेतिविशेषणमिति वाच्यम्, आदेशानपहृतप्रकृतिप्रत्ययस्य चेत्सातेरेवेति विपरीतनियमापत्त्या इशब्दादुशब्दाच्च सातिप्रत्यये तस्य हरिगुरुशब्दाभ्यां समासे हरीसात् गुरूसादित्यत्र षत्वापत्तेः । नियमस्वीकारापेक्षया प्रत्ययपदस्य तन्त्रेण प्रत्ययपरत्वकल्पनाया औचित्याच्च ।

नन्वेवमपि प्रत्ययपर्युदासो विफलः दधिसेचावित्यत्र सुबुत्पत्तेः प्राक्समासे षत्वनिषेधाय पदादादिः पदादिरिति समासस्यावश्याश्रयणीयतया तथैव हरिष्वित्यत्रापि षत्वनिषेधस्येष्टत्वात् । नच पञ्चमीसमासाश्रयणे हरिषु इत्यादौ षत्वनिषेधापत्तिरिति वाच्यम् , सातिग्रहणसामर्थ्येन स्वादौ पदमिति या पदसंज्ञा तामाश्रित्योक्तनिषेधो न प्रवर्तत इति कल्पनेन हरिष्वित्यादौ षत्वनिषेधाप्राप्तेः । नच ग्रामं हरिषु देवदत्तेत्यादौ ग्राम एकान्तरमामन्त्रितमनन्तिके इति एकान्तरत्वप्रयुक्तामन्त्रितनिषेधसिद्धिरेव फलम् । प्रत्ययपर्युदासे हि सोः पदत्वाभावे पदद्वयान्तरितत्वाभावात्तत्सिद्धिरिति वाच्यम् , सिद्धान्तेऽपि स्वादिष्विति प्रकृतिभागस्य सुप्तिङन्तमिति समुदायस्य पदत्वेन पदद्वयव्यवधानसत्त्वादेकान्तरितत्वाभावेन

Vasishtha Tripathi Collection. Digitized by eGangotri

तत्प्रवृत्तेर्दुरुपपादत्वात्। यदि श्रां पचसि पचसि देवदत्त इत्याष्टमिक-द्विर्वचने समासव्यवधाने च निघातनिषेधाय व्यवधायकस्य एकपदत्वे निषेध इत्येवार्थः न तु तस्य अनेकपदत्वे अप्रवृत्तिरिति चेत्तर्हि ममापि-हरिष्वित्यादौ समुदायगतं पदत्वमादाय निर्वाह इति चेन्न।

बहुसेचावित्यादौ बहुच्पूर्वस्य चापदादिविधौ इति वार्तिकेनापि अपदादि विधावेव प्रत्ययलक्षणनिषेधेन तत्र सेच् इत्यस्य पदत्वेन तत्र षत्व-निषेधाय पदस्यादिरिति षष्ठीसमासस्यावश्यकत्वेन हरिष्वित्यादौ षष्ठीस-मासपक्षे षत्वनिषेधापत्त्या प्रत्ययपर्युदासस्यावश्यकत्वात्। नच पञ्चमीस-मासानाश्रयणे दधिसेचावित्यादौ षत्वनिषेधापत्तिरिति वाच्यम्, गतिका-रकोपपदानामित्यस्यानित्यत्वेन सुबन्तेन समासाङ्गीकारेणादोषादित्यलम्।

स्वौजसमौड्डिति ३५

नन्वत्र प्रक्रियालाघवायवौंजसमौङ्डियेवास्तु इति चेन्न।

राम इत्यादौ सुपिचेत्येतत्स्थानीय रुपिचेति दीर्घापत्तेः। यथान्यासे रुत्वस्यासिद्धत्वान्न दीर्घ इति ध्येयम्।

नचामोऽकारमारभ्य सुपः पकारपर्यन्तमप्प्रत्याहारमाश्रित्य अपि-चेति भिचेति न्यस्य पथिमथीत्यात्वविधानेन प्रथमैकवचने न दीर्घ इति कल्पयित्वा वाऽदोषः। न च पथिमथीति ह्रस्वाकारविधाने हे पन्था इत्यादौ एङ्ह्रस्वादिति सुलोपापत्तिरिति वाच्यम्, परत्वान्नित्यत्वाच्च रुपिचेति दीर्घेण बाधादिति वाच्यम्,

यशोऽत्र पयोऽत्रेत्यादौ अतोरोरिति दृष्टया ससजुषोरुरिति रुत्व-स्यासिद्धत्वेन उत्वानापत्तेः सिद्धान्ते तु रुत्वमनूद्य उत्वविधिसामर्थ्यान्ना-सिद्धत्वम् संप्रति प्रथमैकवचने उत्वस्य चारितार्थ्येनोक्तकल्पनायाः कर्तु-मशक्यत्वम्।

नच ससजुषोरुरित्यस्य सपादसप्ताध्याय्यां पाठकरणेन नायं दोष इति वाच्यम्, पिपठीरित्यत्र रुत्वे कर्तव्ये पूर्वत्रासिद्धे न स्थानिवदित्य स्याप्राप्त्याऽल्लोपस्यस्थानिवत्वेन रुत्वानापत्तेः कसिधातोर्नुमि संयोगा न्तरलोपस्यासिद्धत्वाद्रुत्वे कनितिरूपासिद्धेश्च।

न चाहन्निति सूत्रारम्भसामर्थ्यादुत्वे रुत्वस्यासिद्धत्वं नेति कल्प्यं अन्यथा रेफे एव विधातव्ये रुत्वविधानमफलं स्यादिति वाच्यम्, भोभगो

CC-0 Vasishtha Tripathi Collection. Digitized by eGangotri

इति यत्वार्थं रुविधानस्य तदभावार्थं रविधानस्य च चरितार्थेनोक्तकल्पनायाः कर्तुमशक्यत्वात् रेफविधाने अहस्सुइत्यत्र रोः सुपीति नियमेन विसर्गानापत्तेश्च । रुत्वरत्वविधायकयोरन्यतरसामर्थ्येन स्वविधेयरोरुत्वं प्रति सिद्धत्वप्रतिपादनेऽपि ससजुषोरुरिति शास्त्रविधेयरोः सिद्धत्वप्रतिपादने मानाभावेन यशोऽत्रेत्यादेरसिद्धेश्च ।

नच रूपरात्रीतिवार्तिकं रोरुत्वेऽसिद्धत्वं न भवतीति कल्पनायां मानमिति वाच्यम्, भोभगो इति यत्वार्थंतदावश्यकत्वात् । न च यकार एव विधातव्ये रुविधानं तज्ज्ञापकमिति वाच्यम्, अहन् शब्दात्तत्करोतीति णिचि टिलोपे क्विपि गोशब्देन समासे पश्चाद्रूपशब्दसन्निधाने परादिवद्भावेन ओहूशब्देन अहन्शब्दत्वाद्रूपरात्रीतिरुत्वे भोभगोइत्यस्याप्राप्त्यारोरितिलोपे गोरूपमिति भवति यत्वविधाने गोय्रूपमितिस्यादिति यत्वस्य विधातुमशक्यत्वात् ।

नन्वेवमपि वार्तिकेन रुत्वविधानं व्यर्थं अहन्शब्दस्य लोप एव विधीयताम् सचाहोरूपमित्यत्र नकारस्य गोरूपमित्यत्र हकारस्येति तत्सामर्थ्येनोत्वदृष्ट्या रुत्वस्य नासिद्धत्वमिति चेन्न ।

रूपशब्दादाचारक्विवन्ताल्लङि अरूपदिति तस्य गोहशब्दसन्निधाने वार्तिकेन रुत्वे गोररूपदिति लोपे तु गोरूपदिति फलभेदात् ।

यदितु गोररूपदित्यादीनामनभिधानमित्युच्यते तदा तच्छास्त्रीयरुत्वस्योत्वं प्रति सिद्धत्वेऽपि सकलरुत्वस्य सिद्धत्वे मानाभाव इत्येव दूषणं मन्तव्यम्, नच अतोरोरिति सूत्रस्थाप्लुतपदग्रहणमेवोक्तार्थे ज्ञापकमस्तु अन्यथा एहि सुस्रोता ३ अत्रस्नाहीत्यादौ रुत्वस्यासिद्धत्वेनैव दोषाभावादिति वाच्यम्, आगच्छतु भवान् देवदत्ता ३ अत्रेत्यदौ वैजिसिति सूत्रविहितरोरुत्वाभावाय तच्चारितार्थ्यात् वात्सीवन्धुरिति भाष्यप्रयोगेण प्रातिपदिकार्थे प्रथमायामपि प्लुतस्येष्टत्वात् । हे दीर्घाहा अत्र स्नाहीत्यत्र रोरसिद्धत्वाभावस्य हे अहः रूपमस्त्रीत्यत्रासिद्धत्वाभावस्य कल्पनाया उक्तत्वात्तत्रोत्वापत्तेश्च । होतव्य दीक्षितस्य गृहा ३ इ इत्यत्र विचार्यमाणानामिति व्य इत्यत्राकारस्य प्लुतत्वे रोरसिद्धत्वाभावेन तद्व्यावृत्त्या चारितार्थ्यात् ।

यत्तु द्वितीयाप्लुतग्रहणं अदीति तपरकरणं चोक्तार्थे ज्ञापकम् ।

CC-0. Vasishtha Tripathi Collection. Digitized by eGangotri

तथाहि तिष्ठतु पय आग्निदत्तेत्यत्र देवा अत्रेत्यत्रश्च आगन्तेत्यत्र च रुत्वस्यासिद्धत्वेन उत्वाप्राप्त्या तदर्थमिति तन्न।

तिष्ठतु देवदत्त अ ३ ग्निदत्तेत्यत्र देवदत्त आगन्तेत्यत्र च उत्वाभावाय तेषां चारितार्थ्येन ज्ञापकताया असम्भवादित्यलम्।

## विभक्तिश्च ३६

विभक्तिश्चेति सूत्रं मास्तु न विभक्तावित्यत्र सुप्तिङ्ग्रहणमेवास्तु अघ्न आविभक्तावित्यत्र विभक्तिपदस्थाने सुपीत्येवास्तु न चैवं त्यदादीनामित्यत्र सुपीत्यस्मानुवृत्तौ यत्रतत्रेत्यादावत्वानापत्तिः सुप्त्वाभावादिति वाच्यम्, प्राग्दिशो विभक्तिरित्यनेन सुप्संज्ञाविधानेनादोषात्। नच सुप्संज्ञाविधाने एतर्हीत्यत्र सुपि चेति दीर्घापत्तिरिति वाच्यम्, सुपि चेत्यत्र भिचेतिन्यासेनादोषात्। अस्याङ्गाधिकारीयतया अङ्गसंज्ञानिमित्तके यकारादौ भकारादौ च प्रत्यये दीर्घ इत्यर्थेन ब्राह्मणभिस्सेत्यादौ न दीर्घापत्तिरिति ध्येयम्। नच सारसायनभक्त इत्यत्राङ्गसंज्ञानिमित्तकभादिप्रत्ययसत्वाद्दीर्घापत्तिरिति वाच्यम्, अतो भिस इति सूत्रान्तरसाहचर्येणाङ्गसंज्ञानिमित्तकस्य सुप एव ग्रहणेनादोषात्। अर्हिलं दिधाय यञ्परत्वाभावसंपादनेनादोषाच्च। सुप्यरिचेति न्यासेनादोषाच्च। नच प्राग्दिशीयानां सुप्त्वे यत्रेत्यादौ त्रलः सुपोधात्विति लुगापत्तिः कुत्रति यत्रतीत्यादौ सुबन्तत्वेन पदत्वे अतोगुण इति पररूपानापत्तिः इदानीं तदानीमित्यादौ अनुदात्तौ सुप्पितौ इत्यनुदात्ततापत्तिश्चेति वाच्यम्, त्रलादीनां विधानेन अत्रानुनासिक इति निर्देशेन वा लुग्वारणसंभवात्। पदसंज्ञाविधायके तिङोऽष्टाध्यायीस्थैकसूत्रोपात्तत्वेन सुपोऽपि तादृशस्यैव ग्रहणेन प्रकृते पदत्वाभावेन कुत्रतीत्यादौ पररूपसिद्धेश्चेत्यलम्।

केचित्तु तद्धितान्तत्वादव्ययसंज्ञायां सुब्लुगर्थं त्रलादिविधानस्य चारितार्थ्येन तत्सामर्थ्यान्न लुगिति वक्तुमशक्यमपि तु सन्निपातपरिभाषया न लुगिति वदन्ति।

अन्येतु इवेन समासो विभक्त्यलोपश्चेत्यत्रापीदानीं विभक्तिपदस्थाने सुब्ग्रहणेन तत्रेवेत्यादौ श्रवणार्थं त्रलादिविधानस्य चारितार्थ्येन अत्रेत्यादिनिर्देशादेव लुग्वारणमुचितम्। एवंच तत्तद्विभक्तिस्थाने त्रलाद्यादेशा एव विधेयाः आविभक्तिः सुबिस्थाने न कार्यं स्थानिवत्वेनैव सुप्त्वनि-

CC-0. Vasishtha Tripathi Collection. Digitized by eGangotri

मित्तककार्यस्य सत्वादित्यपरं लाघवमित्याहुः ।

यत्तु त्रलादेर्लित्वस्य तत्रेत्यादौ चारितार्थ्येन सर्वदेत्यादौ सर्वस्य सुपीत्याद्युदात्ततापत्तिः प्राग्दिशीयानां सुप्त्वे इति ।

तन्न—तादिदादिथादिभिन्ने सुपि सर्वस्याद्युदात्त इत्यर्थकेन सर्वस्य सुप्यत्त्येषु इति न्यासेनादोषात् ।

परे तु अष्टाविवाचरतीति आचारक्विबन्ताल्लटि तिपि शपं बाधित्वा परत्वात्प्रतिपदोक्तत्वाद्विभक्तिग्रहणसामर्थ्याच्चात्वे अ तीति प्रयोगार्थम् अष्टन आ विभक्तावित्यत्र विभक्तिग्रहणमावश्यकम् तत्र सुप्करणे तन्न सिध्येदिति प्राहुः ।

अष्टन आ सुप्तिङीति न्यसान्न दोष इतीतरे। अपरे तु प्राग्दिशीयानां विभक्तिसुप्संज्ञे एवास्तां त्यदाद्यत्वाय त्यदादीनां प्राग्दिशीयेषु तसादिषु पाठोऽस्तु सुपिचेत्यत्र यिभचेत्येतावतैव सिद्धे अष्टन इत्यत्र सुप्तिङेवास्तु। दानीमोऽदन्तत्वात् न विभक्तावित्यत्र सुप्तिङीति न्यासाद्वा नेत्त्वम् इत इत्यत्र ऊडिदमिति स्वरार्थं सुपीत्यस्यैव संबन्ध इति न दोषः। तथा च लाघवेन विभक्तिश्चेति सूत्रं मास्तु इति वदन्ति ।

## एकवचनं सम्बुद्धिः ३७

ननु सुः सम्बुद्धिरित्येव सूत्रमस्तु सम्बोधने चेत्यतः सम्बोधन इत्यस्यानुवृत्त्या सप्तमी बहुवचने नातिप्रसङ्गः। नच सुः संबुद्धिरित्येव वक्तव्ये एकवचनग्रहणम् एकत्वविशिष्टार्थवाचकस्यैव संबुद्धिसंज्ञार्थम् अन्यथा सामन्त्रितमिति सूत्रेण आमन्त्रितमिति महासंज्ञाबलेन। तदन्तस्यामन्त्रितसंज्ञावत् सम्बुद्धिरिति महासंज्ञया तदन्तस्यैव संबुद्धिसंज्ञा स्यादिति वाच्यम् , संबुद्धावङ्गस्य गुण इति व्यवहारान्न तदन्तस्य संज्ञेति शेखरेणैव दत्तोत्तरत्वादिति चेद्—

न, दृष्टप्रयोजनाभावेऽपि अदृष्टार्थमेकवचनं सम्बुद्धिरिति सूत्रस्यावश्यकत्वादित्यलम् ।

## अमि पूर्वः ३८

ननु शुक्लाम्बरधरमित्यत्र शुक्लशब्दस्य अम्बरशब्दे परतः दीर्घं बाधित्वा अमिपूर्वं इति पूर्वरूपं कुतो न। नच प्रत्ययाप्रत्यययोः प्रत्ययस्यैव

CC-0. Vasishtha Tripathi Collection. Digitized by eGangotri

ग्रहणम् इति परिभाषया प्रत्ययस्यैव ग्रहणान्न दोष इति वाच्यम्, अकोऽमि परतः पूर्वपरयोः पूर्वरूपमेकादेश इत्यर्थे अमः सर्वस्य पूर्वरूपमिया इको यणचीत्यतोऽचीत्यनुवर्त्य अकोऽमि योच् तस्मिन्परतः पूर्वपरयोः पूर्वरूपमेकादेश इत्यर्थस्य अवश्याश्रयणीयतया अमोऽनुवादत्वेन विधौ परिभाषोपतिष्ठते नानुवाद इति परिभाषया प्रत्ययाप्रत्यययोरिति-परिभाषयाः प्रकृतेऽप्रवृत्तेः। उदीचामातः स्थाने इति सूत्रे स्थानग्रहणमेव विधौ परिभाषोपतिष्ठते इति परिभाषायाम्मानम्। अत एव इको गुणवृद्धी इति परिभाषा वृद्धिर्यस्याचामादिरितिसूत्रे न प्रवर्तते इति शालीयादिसिद्धिः। उपस्थितौ तु तैकायनीयम् औत्सीयम् नार्कुटीय-मित्यादावेव छः स्यान्न शालीयादाविति बोध्यम्।

नच मालादीनां चेति स्वरविधानमेव वृद्धिर्यस्येति सूत्रे इक्परिभाषानुपस्थितौ मानम् अन्यथा मालाशब्दस्यावृद्धत्वेन प्रस्थेऽवृद्धमक-र्यादीनामिति पूर्वसूत्रेणैव स्वरसिद्धौ मलादीनां चेति व्यर्थमेव स्यात्। नच वा नामधेयस्येति वार्तिकेन वैकल्पिकवृद्धसंज्ञाविधानात् वृद्धत्वपक्षे मालादीनां चेत्यस्य चारिताथ्र्येन निरुक्तार्थे मानत्वासंभव इति वाच्यम्, पौरुषेयं नाम नामधेयशब्दार्थ इति कैयटात् नामधेयशब्दः सांकेतिके तु रूढ इति हरदत्तोक्तेश्च मालाशब्दे तदप्रवृत्तेरिति वाच्यम्,

मलादीनां चेति वार्तिकारम्भेण वृद्धिर्यस्येत्यत्रेक्परिभाषानुपस्थितिकल्पनेऽपि उत्तरपदवृद्धौ सर्वं चेत्यत्र इक्परिभाषोपस्थित्या सर्ववैद-भंक इत्यत्र सर्वशब्दान्तोदात्तत्वं स्यात् न सर्वपाञ्चालक इत्यत्रेति दोषात्। एवं च विधौ परिभाषोपतिष्ठते इति परिभाषाऽऽवश्यिकी अत एव अचः परस्मिन्नित्यत्र परस्मिन्नित्यस्यादेशविशेषणत्वात्तस्मिन्निति परिभाषाया अप्रवृत्त्या अल्लोपस्य स्थानिवत्त्वेन प्रतिदीव्न इत्यत्र वलोपो न।

नचार्थवद्ग्रहणपरिभाषया शुक्लाम्बरमित्यत्र न दोष इति वाच्यम्, तस्या अपि अनुवादेऽप्रवृत्तेरिति चेद्—

न, उदीचामात इति सूत्रे स्थाने ग्रहणस्य स्पष्टार्थत्वेन विधाविति परिभाषायां मानाभावेन अमः प्रत्ययस्य ग्रहणेनादोषात्। विधौ परिभाषोपतिष्ठत इत्युद्घोषस्तु इको गुणवृद्धी इत्यादौ विधीयते इत्यध्याहारमूलकः। नच मयानमत प्रत्ययाप्रत्यययोरित्यस्याभावेन दोषतादव-

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

स्थ्यमिति वाच्यम्, तन्मतेऽर्थवद्ग्रहणपरिभाषयैव वारणसम्भवात्। तस्थस्थमिपां तांततामः इति निर्देशेन अमि पूर्व इत्यस्यानित्यत्वान्न दोष इति तु न सम्यक् आदेशस्वरूपप्रतिपत्तये तत्र पूर्वरूपाकरणादित्यलम्।

## लशक्वतद्धिते ३९

ननु क्वतद्धिते इत्येव सूत्रमस्तु लशग्रहणं किमर्थम् कर्तरि शवित्यादौ छप एव विधानेन चुटू इत्यनेनैवेत्संज्ञासिद्धेरिति चेद्—

न, ल्युल्युडादौ लस्येत्वाभावेन लित्स्वरानापत्तेः। नच युल्, ट्युल इति प्रत्ययविधानेनादोष इति वाच्यम्, एवमपिछ्वादौ छस्येयादेशापत्तेः नचेत्संज्ञालोपाभ्यामपहारान्नायं दोष इति वाच्यम्, इयादेशेन तयोर्वाधात्। अत एव तद्धितीयछप्रत्ययादौ चुटू इत्यस्य न प्रवृत्तिः। नच फढादिसाहचर्यात्तद्धिते एव ईयादेशस्य प्रवृत्तिरिति वाच्यम्, मत्वर्थाच्छ इति वार्तिकविहितस्य कृतोऽपि मत्वर्थीय इत्यादौ ईयादेशदर्शनात् शंख इत्यत्र ईनादेशमाशङ्क्य प्रातिपदिकविज्ञानाच्च भगवतः पाणिनेः सिद्धमिति भाष्याच्च सहचरितपरिभाषायाः प्रकृतेऽप्रवृत्तेरिति दिक्।

## तस्माच्छसो नः पुंसि ४०

शसो नुक् पुंसि, शसो नुम् पुंसि इति वा सूत्रमस्तु अक इत्यनुवर्त्यं अकः परस्य शसो नुक् नुम्वेत्यर्थः। एवं च आदेः परस्येति परिभाषया, मिदचोऽन्त्यात्परस्येतिपरिभाषया वा शसोऽकारस्यान्तावयवो नुक् नुम् वा भविष्यति पश्चात्पूर्वसवर्णदीर्घे संयोगान्तलोपे रामानित्यस्य सिद्धिः। गा इत्यत्र च न दोषः अकः परस्य शसोऽभावादिति चेन्न। विश्वप इत्यत्र अचः परस्मिन्निति पञ्चमीसमासपक्षे आलोपस्य स्थानिवत्त्वेन अकः परत्वान्नुगापत्तेः।

वस्तुतस्तु पञ्चमीसमासस्यासत्त्वात्सत्त्वेऽपि वा प्रतिगण्येति भाष्योदाहरणेनानित्यत्वात् आलोपस्य स्थानिवत्त्वाभावेन दोषाभावान्न्यासः सुवच एव। नचाष्टावित्यत्रात्वे कृते शस औशादेशे तस्य नुगापत्तिरिति वाच्यम्, आकारस्य परनिमित्ततया वहिरङ्गत्वेनासिद्धतया अकः परत्वाभावेनादोषादित्यलम्।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम् ४१

ननु यस्मात्प्रत्ययस्तदादि प्रत्ययेऽङ्गमित्येव सूत्रमस्तु विधिग्रहणं किमर्थम्।

न च विधिग्रहणाभावे दिग्योगलक्षणपञ्चम्या यस्मात्परः प्रत्ययस्तस्मिन्प्रत्यये तदाद्यङ्गमित्यर्थे इदंशब्दाद्वतुपि किमिदंभ्यां वो घ इति वकारस्य घकारे आयनेयीति तस्येयादेशे इदंकिमोरीश्की इति इदमः ईशादेशे अनुबन्धलोपे यस्येतिचेतीकारलोपे उगितश्चेति ङीपि इयतीत्यस्य सिद्धौ स्त्री इयतीत्यत्र स्त्रीशब्दस्य इयत्प्रत्यये परतोऽङ्गसंज्ञायां स्त्रिया इतीयङापत्तिः। विधिग्रहणसत्त्वे तु यस्मादिति ल्यब्लोपपञ्चम्या यमुद्दिश्य प्रत्ययविधिरित्यर्थात्स्त्रीशब्दमुद्दिश्येयतोऽविधानान्न दोषः। नच सुनिरूपिताङ्गत्वस्य स्त्रीशब्दे सत्त्वेन विधिग्रहणसत्त्वेऽपि इयङ् दुर्वार इति वाच्यम्, प्रत्यासत्त्याऽजादिप्रत्ययप्रयोज्याङ्गसंज्ञावत एव स्त्रीशब्दस्येयङ् अजादौ प्रत्यये इत्येतादृशस्यैव स्त्रिया इतिसूत्रार्थस्य स्वीकारेणादोषात्। नच विधिग्रहणाभावेऽपि ईकारलोपस्य अचः परस्मिन्निति स्थानिवत्त्वात् अजादिप्रत्ययपरत्वाभावान्नायं दोष इति वाच्यम्, न पदान्तेति स्थानिवत्त्वनिषेधात्, पदसंस्कारपक्षे स्थानिवत्त्वस्य प्राप्त्यभावाच्च। असिद्धवदत्राभादिति ईकारलोपस्य स्थानिवत्त्वं तु न शङ्क्यम्, समानाश्रयत्वाभावात्। समानाश्रयत्वंच असिद्धत्वाश्रयशास्त्रसंबन्धिसमुदायान्यूनानतिरिक्ताश्रयकत्वम्। प्रकृते च स्त्रीशब्दस्य इयङ्विधावधिकस्यापेक्षणेन समानाश्रयत्वाभावेन यस्येतिचेतीकारलोपस्य नासिद्धत्वमिति बोध्यम्। नच वाम्शसोरिति सूत्रसाहचर्येण अजादौ सुप्येव स्त्रिया इत्यस्य प्रवृत्तिरिति वाच्यम्, सूत्रान्तरसाहचर्यस्य क्वाप्यदृष्टत्वात् इति वाच्यम्,

स्त्रिया इति सूत्रे अभ्यासस्यासवर्णे इत्यतोऽसवर्णपदानुवृत्त्या स्त्री इयतीत्यादावदोषादिति चेन्न।

विधिग्रहणाभावे भनक्तीत्यादौ श्नम्प्रत्यये परतो भशब्दस्याङ्गत्वेऽतोयञीति दीर्घापत्तेः।

ननु अदः सर्वेषामित्यादिसाहचर्याद् भूसुवोस्तिङीत्यतस्तिङोऽनुवर्तनाद्वा यञादौ तिङ्येव दीर्घ इति स्वीकारेण न भनक्तीत्यादौ दोषः।

CC-0. Vasishtha Tripathi Collection. Digitized by eGangotri

नच ज्ञाजनोर्जा इति सूत्रस्थभाष्यविरोधः । तथा हि—ह्रस्वमेव जादेशं विधायातोदीर्घोयञीति दीर्घेण जानातीत्यस्य सिद्धयाऽऽकारोच्चारणम- ङ्गवृत्तपरिभाषाज्ञापकमित्युक्तमिदानीं यञादितिङ्परत्वाभावेन दीर्घो न स्यादित्याकारोच्चारणस्य चारितार्थ्येन अङ्गवृत्तपरिभाषाज्ञापकत्वासं- भव इति वाच्यम्, विधिग्रहणखण्डनकर्तुरीदृशभाष्यविरोधस्याकिंचि- त्करत्वादिति चेत्तर्हि अभनगित्यत्र तिङश्चेत्यकचि अङ्गसंज्ञायामभनक- गित्यत्राल्लोपोऽन इत्यनेनाल्लोपापत्तिरेव दूषणमित्यवेहि ।

ननु विधिग्रहणसत्त्वेऽपि प्रत्ययनिरूपितोद्देश्यताश्रयस्याङ्गसंज्ञेत्य- थन अकज्निष्ठविधेयतानिरूपितोद्देश्यताश्रयाभनित्यस्याङ्गत्वं दुर्वार- मिति चेद्—

न, तादृशोद्देश्यताश्रयपर्याप्त्यधिकरणेत्यर्थे विधिग्रहणस्य तात्पर्य- ग्राहकत्वात् । नच अल्लोपोऽनोऽनक इति न्यासाद् अभनकगित्यत्रापि न दूषणमिति वाच्यम्, तादृशन्यासे लाघवाभावात् तावतापि अशब्दा- दौविभक्तौ "औ" इति रूपं ततः प्राक् वारिशब्दयोगे वारि औ इत्यत्र परादिवद्भावेन विभक्तित्वे इकोऽचिविभक्ताविति नुमापत्तेश्च । नच सुपी- त्यनुवृत्त्यैव सिद्धे विभक्तिग्रहणमनतिदिष्टविभक्तिलाभार्थं तेन न दोष इति वाच्यम्, अशब्दादौविभक्तौ आविति रूपं ततः स्त्रीशब्दयोगे स्त्री औ इत्यत्रेयङापत्तेरिति शम् ।

वस्तुतस्तु विधिग्रहणाभावे तदादिग्रहणवैयर्थ्येन यस्मादिति ल्यब्लो- पे पञ्चमीति कल्प्यते ततश्च यमुद्दिश्य विहित इत्यर्थलाभान्न क्वापि दोष इति विधिग्रहणं सुत्यजमित्यलम् ।

ननु सत्यपि विधिग्रहणे तदादिग्रहणं किमर्थम् । नच भवामीत्यादौ विकरणविशिष्टस्याङ्गसंज्ञार्थं तदिति वाच्यम्, अतो दीर्घो यञीति सूत्रा- रम्भसामर्थ्येन तद्विषये तदादेरङ्गसंज्ञेति ज्ञापनेनादोषात् । नच ह्यथा- तोर्यङ्लुकि मिपि यकारलोपे जाहामीति तत्रातोदीर्घोऽयञीति सूत्रस्य चारितार्थ्येन निरुक्तार्थज्ञापकत्वासंभव इति वाच्यम्, यङ्लुकश्छान्दस- त्वात् । नच पिपठिषामीत्यत्र चारितार्थ्यम्, अत्रापि शपा सह पररूपस्य स्थानिवत्त्वेन अव्यवहितपूर्वप्रकृतेरभावात्तदादेरङ्गसंज्ञेति ज्ञापनमन्तराऽ- तोदीर्घोयञीत्यस्य चारितार्थ्यासंभवात् । किञ्च अतोदीर्घो यञीत्यस्या

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

ङ्गाधिकारात्प्राक् पाठकरणेनापि न भवामीत्यादौ दोष इति चेन्न।

तदादिग्रहणाभावे करोमीत्यादौ विकरणविशिष्टस्याङ्गत्वाभावेन गुणानापत्तेः, गुणविधायकशास्त्रं तु भवामीत्यादौ चरितार्थमिति न तद्बलेन काचित्कल्पना कर्तुं शक्यते। नच गुणविधायकशास्त्रस्याङ्गाधिकारात्प्राक्पाठकरणान्नायं दोष इति वाच्यम्, अशब्दादाचारक्विन्ताद्धिञ अतोलोपे अ इति आर्धधातुकं रूपं तस्मिन्परतो वारिशब्दादेरन्त्यस्य गुणापत्तेरित्यलम्।

प्रत्यये किमिति। ननु यस्मात्प्रत्ययविधिस्तदाद्यङ्गमित्येव सूत्रमस्तु प्रत्यये ग्रहणं किमर्थम्। नच प्रत्ययग्रहणाभावे रामाभ्यामित्यादौ रामेत्यादेरङ्गत्वं न स्यात्ससहाये व्यपदेशिवद्भावाप्रवृत्तेरपि तु रामभ्यामिति समुदायस्यैवेति सुपिचेतिदीर्घानापत्तिरिति वाच्यम्, सुपिचेतिसूत्रारम्भेण उत्तमैकाभ्यामितिनिर्देशेन च अङ्गावयवस्यातो दीर्घो यञादौ सुपीत्यर्थाङ्गीकारेणादोषात्। नचैवमपि उरदत्वस्य परनिमित्तकत्वाभावेन स्थानिवत्त्वानापत्तौ वव्रश्चेत्यादौ न संप्रसारणे इति निषेधाप्रवृत्त्या अभ्यासवकारस्य संप्रसारणापत्तिः। प्रत्ययग्रहणसत्वे तु अङ्गेन प्रत्ययाक्षेपात् उरदत्वस्य परनिमित्तकत्वेन स्थानिवत्त्वात् न संप्रसारणे संप्रसारणमिति संप्रसरणनिषेधान्न दोष इति वाच्यम्, न संप्रसारणे इत्यस्य सम्प्रसारणाश्रयस्य प्रतिषेधो वक्तव्य इति वार्तिकेन प्रत्याख्यानात्। सत्यपि वस्य संप्रसारणे संप्रसारणाच्चेति पूर्वरूपस्योक्तवार्तिकेन निषिद्धतया यणि वव्रश्चेत्यस्य सिद्धेः अभ्यस्तस्य चेत्येव सम्प्रसारणे सिद्धे चङ्परे णौ सम्प्रसारणविधायकस्य ह्वः संप्रसारणमित्यस्य सामर्थ्येन अभ्याससंज्ञानिमित्तकशास्त्राणामभ्याससंज्ञाप्रयोजकद्वित्वनिमित्तप्रत्ययनिमित्तकत्वं ज्ञाप्यते। ज्ञापिते तु द्वित्वनिमित्तचङ्निमित्तकत्वेनाभ्यस्तस्यचेत्यस्य णिज्व्यवधानेऽप्राप्तौ ह्वः संप्रसारणमितिचरितार्थम्। ततश्च उरदत्वस्य परनिमित्तकत्वमक्षतमेवेति न संप्रसारणे इति सूत्रसत्त्वापदेऽपि वव्रश्चेत्यादावदोषाच्च। नच राजपुरुष इत्यादौ राजन्नित्यादेः पदत्वानापत्त्या नलोपानापत्तिः प्रत्ययविशिष्टस्याङ्गत्वेन नलुमताङ्गस्येति निषेधेन प्रत्ययलक्षणासंभवादिति वाच्यम्, न लुमता तस्मिन्नितिन्यासकरणेन तत्राप्यदोषादिति चेन्न।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

देवदत्त ओदनमपाक्षीत्यत्र सुप्रत्ययमाश्रित्य जायमानाङ्गसंज्ञायाः लुङन्ते सत्त्वेन देवदत्तात्पूर्वमडागमापत्तेरित्यलम्।

## सुपि च ४२

नन्विदं सूत्रं किमर्थम् रामायेत्यादौ "अतो दीर्घो यञि" इति सूत्रे सार्वधातुकग्रहणासंबन्धेन अदन्ताङ्गस्य दीर्घः स्याद्यञादौ प्रत्यये परे इत्यर्थस्वीकारेण दीर्घसिद्धेः [न च तत्र सार्वधातुकग्रहणासम्बन्धे केशव इत्यत्रापि दीर्घः स्यादिति वाच्यम्, "केशाद्वोऽन्यतरस्याम्" इत्यत्र केशादव इति विन्यस्य अवं विधाय यस्येतिचेत्यल्लोपेन केशव इत्यस्य सिद्धेः [नचावकरणे केशमाचष्टे केशयति केशयतीति केट् तत एकदेशविकृतन्यायेन स्थानिवत्त्वेन वा केशशब्दत्वात्केशव इति स्यादिष्यते तु केड्व इति वाच्यम्, आग्गुदीचामित्यत्र एका सिद्धे आकारोच्चारणमन्यतो विधानार्थं तेन जाडार इति सिद्ध्यतीति भाष्योक्त्या णिजन्तात्कर्तृक्विपोऽनभिधानेन केडित्यादीनामभावेनादोषात्। न च ज्ञापकस्य सजातीयापेक्षत्वेन आवन्तप्रकृतिकणिजन्तात्कर्तृक्विपोऽनभिधानेऽपि केशादिशब्दप्रकृतिकणिजन्तात्कर्तृक्विपोऽनभिधाने मानाभावः। किञ्च वासुदेवार्जुनाभ्यां कनित्येव सिद्धे वुन्विधानमर्जुनक इति रूपार्थमन्यथाऽर्जुनमाचष्टेऽर्जुनयति अर्जुनयतीति अर्जुन् ततः कनि नलोपे अर्जुक इति स्यात्तस्मादनभिधानकल्पनमयुक्तमिति अवेति न्यासे केशव इत्यनिष्टं स्यादिति वाच्यम्, एवं तर्हि श्रृङ्गवृन्दाभ्यामारकन्नित्यत्राकारोच्चारणसामर्थ्यैन तद्धितेऽतो दीर्घो यञीति दीर्घो नेति कल्पनया केशव इत्यादौ दोषाभावात्। नच श्रृङ्गमाचष्टे श्रृङ्गयति ततः क्विपि श्रृङ्गारक इति रूपसिद्ध्यर्थमाकारोच्चारणं चरितार्थमिति वाच्यम्, विनञ्भ्यां नानाञाविति सूत्रे नाञो ञित्करणेन तद्धितेऽतोदीर्घो यञीति दीर्घो नेति कल्पनयाऽदोषात्। न च ञित्करणं ञ्नित्यादिर्नित्यमिति स्वरार्थमिति वाच्यम्, वेर्ना नञो नोदात्तश्च इति न्यासेन स्वरसिद्धेः।

केचित्तु शरादीनां चेति शरावतीत्यत्र दीर्घविधानं नियमार्थं तद्धिते दीर्घश्चेत्तर्हि शरादीनामेवेति' केशव इत्यादौ न दोष इति वदन्ति।

तदसत् [illegible] मतुपि दीर्घे

CC-0. Vasishtha Tripathi Collection. Digitized by eGangotri

शरीवतीत्यत्र दीर्घार्थं सूत्रस्य चारितार्थ्येन नियामकत्वासंभवात् 'शरादीनां दीर्घश्चेत्तर्हि तद्धित एवेति' विपरीतनियमापत्तौ शराभ्यामित्यस्यासिद्धेश्चेत्यलम्।

नाञो ञित्करणेन तद्धिते दीर्घाभावज्ञापनादङ्गनाइत्यादावपि न दोषः। एवं मुखर इत्यत्रापि दोषवारणं बोध्यम्। अरं विधाय दोषवारणं तु न युक्तम् शुषिर इत्यस्यासिद्ध्यापत्तेः।

यत्तु 'लोमादिसूत्रेणाकारादिनप्रत्ययविधानादङ्गनेत्यत्र न दोषः लक्ष्म्या अच्चेत्यत्राद्ग्रहणमपि न कर्त्तव्यमिति' तन्न, विगुण इत्यस्यासिद्धेः।

न च सुपि चेत्यस्याभावेऽतो दीर्घो यञीति दीर्घस्य सुब्विधित्वाभावेन नलोपस्यासिद्धत्वाभावाद् राजभ्यामित्यादावतो दीर्घो यञीति दीर्घापत्तिरिति वाच्यम्, सुप्त्वधर्मवन्निमित्तके विधौ नलोपोऽसिद्ध इत्यर्थकरणेनादोषात्। नच सुप्त्वतद्व्याप्यान्यतरधर्मावच्छिन्नोद्देश्यताके विधौ नलोपोऽसिद्ध इत्येवार्थो युक्तः, अन्यथा षत्वे अप्राप्तनलोपासिद्धत्वार्थं सुब्विधावित्यस्य विधायकत्वापत्त्या पथिषु इत्यादौ षत्वानापत्तिः। एवञ्च राजभ्यामित्यादौ दीर्घो दुर्वार इति वाच्यम्, पूर्वत्रासिद्धमित्यतः पूर्वत्रेत्यनुवर्त्य पूर्वस्मिन्सुबादिविधौ नलोपोऽसिद्ध इत्यर्थेन षत्वविधेः नलोपविध्यपेक्षया पूर्वत्वाभावेनादोषात्।

केचित्तु नलोपः स्वरसंज्ञायैस्तुग्विधिषु इति न्यस्य संज्ञा च आश्च एश्च पेश्चेति द्वन्द्वे राजभ्यामित्यादौ न दोषः। नच राजाश्व इत्यत्रापि नलोपासिद्धत्वं स्यादिति वाच्यम्, अत आ यञोति न्यस्य प्रतिपदोक्तस्यैवाकारस्य ग्रहणेनादोषादिति वदन्ति।

नच अयपयधात्वोर्वनिपि लोपोव्योरितियलोपे सौ अवा यवा इत्यत्र दीर्घापत्तिरिति वाच्यम्, विड्वनोरनुनासिकस्यात् इत्यनेन ह्रस्वाकारे विधातव्ये दीर्घाकारविधानेन कृति परे दीर्घोनेति कल्पनयाऽदोषात्। नच ह्रस्वाकारविधाने गोजा इत्यस्यासिद्धिरिति वाच्यम्, प्रत्ययलक्षणेन विटि दीर्घेणैवसिद्धेः। वर्णाश्रये नास्ति प्रत्ययलक्षणमिति निषेधस्तु न तस्य वर्णप्राधान्यविषयत्वात्। तस्मात्सुपिचेति सूत्रं व्यर्थमिति चेद्—

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

न, बहुवचने झल्येदित्युत्तरार्थत्वात् तेन पचध्वमित्यादावेत्वं नेति

वोध्यम् । नचाध्वं करणान्न दोष इति वाच्यम् , एधांचकृढ्वे इत्यस्या- सिद्ध्यापत्तेः । नच वहुवचने स्म्येदिति न्यासान्न दोष इति वाच्यम् , संपूर्वाद्गमेः समोगमृच्छिभ्यामित्यात्मनेपदे संगसीरन्नित्यत्रैत्वापत्तेः । यदि च भादिसाहचर्यात्सादिरपि सुवेव गृह्यते इति न प्रकृते दोष इत्यु- च्यते तदा पटूवीत्यत्र गुणाभावाय घेर्ङितीत्युत्तरार्थं सुपिचेति सूत्र- मिति वोध्यम् । नच वोतो गुण इत्यादिभिर्ङीप एव विधेयस्तथाच न गुणप्राप्तिरिति सुपिचेति व्यर्थमिति वाच्यम् , पटूवीशब्दादाचारक्विवन्ता- दात्मनेपदार्थं ङित्करणस्यावश्यकत्वात् कुरूरित्यत्र गुणाभावार्थमपि सुपिचेत्यस्य संवन्ध आवश्यकः । किञ्चानेकत्र क्लिष्टकल्पनया दोषवार- णापेक्षया सूत्रकरणमेव युक्तमित्यलम् ।

## बहुवचने झल्येत् ४३

नन्वस्मिन्सूत्रे वहुवचनग्रहणं किमर्थम् । नच वहुवचनग्रहणाभावे राम इत्यत्र रुत्वस्यासिद्धत्वादेत्वापत्तिरिति वाच्यम् , अकृतव्यूहाः पाणिनीया इति परिभाषया एत्वनिमित्तस्य सकारस्य विनाशोन्मुखत्वे- नैत्ववारणसंभवात् । नचानुस्वारविसर्गजिह्वामूलीयोपध्मानीययमानाम- कारोपरि शर्षु च पाठस्योपसंख्याततत्वेन विसर्गे जातेऽपि एत्वप्रवृत्त्या नैत्वनिमित्तविनाश इति अकृतव्यूहा इत्यस्याप्राप्त्या राम इत्यत्रैत्वं स्यादेवेति वाच्यम्, नुम्विसर्जनीयशर्व्यवायेऽपीति सूत्रे शर्त्वादेव सिद्धे विसर्जनीयग्रहणवलाद्विसर्गस्य शरि पाठोऽनित्य इति कल्पनेन विसर्ग- स्य झल्त्वाभावेन विसर्गे जाते एत्वप्राप्त्या अकृतव्यूहपरिभाषया एत्व- वारणसंभवात् । न च ज्ञापकस्य सजातीयापेक्षत्वेन षत्वार्थं शरि विस- र्गस्य पाठाभावकल्पनेऽपि एत्वे पाठाभावकल्पने मानाभाव इति वि- सर्गस्य झल्त्वादेत्वप्राप्त्या अकृतव्यूहा इत्यस्याप्रवृत्तिरेवेति राम इत्य- त्रैत्वं स्यादेवेति वाच्यम् , एङ्ह्रस्वात्संवुद्धेरिति सूत्रे ह्रस्वग्रहणसामर्थ्येन सावेत्वं नेति कल्पनेनादोषात् अन्यथा राम इत्यत्रैत्वे एङन्तत्वादेव सिद्धे ह्रस्वग्रहणं व्यर्थं स्यात् । नच हे लक्ष्मि हे वधु इत्याद्यर्थं ह्रस्वग्रहणं चरितार्थमिति वाच्यम् , तावन्मात्रप्रयोजनकत्वे इदुदेङः संवुद्धेरित्येव सिद्धे ह्रस्वग्रहणवैयर्थ्यस्य तादवस्थ्यात् । न च हे ज्ञानेत्यत्र मलोपाय

Tripathi Collection. Digitized by eGangotri

ह्रस्वग्रहणं चरितार्थमिति वाच्यम्, ह्रस्वदेङः संबुद्धेः ततो मः इति न्यस्य सबुद्ध्यवयवस्य मस्य लोप इत्यर्थेनादोषात्। न च हे अम्बेत्यत्र सुलोपाय तच्चरितार्थं नहि तत्रैत्वप्राप्तिरम्बार्थेतिह्रस्वविधानसामर्थ्याच्च तच्च राम इत्यत्रैत्वं स्यादिति वाच्यम्, अम्बार्थनद्योर्डडिव इति न्यासेन अम्बेत्यादावदोषेण ह्रस्वग्रहणसामर्थ्यस्य सूपपादत्वात्। एवमपि नचैङः पदात्परो रुरस्तीति भाष्येण असौ झल्येदिति न्यासेन सुपिचेत्यस्य स्थाने शपि चेतिन्यासेन वा राम इत्यत्रैत्ववारणसंभवात्।

केचित्तु न बहुव्रीहाविति सूत्रारम्भेण अकृतव्यूहपरिभाषाया अनित्यत्वात्, भाष्यानुक्तत्वेनाप्रामाणिकत्वात्, सत्त्वे वा पूर्वत्रासिद्धमिति रुत्वादीनामसिद्धत्वेन निमित्तस्य विनाशोन्मुखत्वाभावेन अप्राप्तेश्च। राम इत्यत्र एत्वं स्यादेव बहुवचनग्रहणाभावे रामस्येत्यत्रैत्वापादनं तु द्विर्बद्धं सुबद्धमिति न्यायेनेति वदन्ति।

तदसत्, पूर्वोक्तरीत्याऽरुचिवर्णनसंभवे द्विर्बद्धमितिरीत्या समाधानस्यातिफल्गुत्वात्।

नच स्वौजसमौडित्यत्र वौंजसितिन्यासेन झल्परत्वाभावेन नैत्वमिति वाच्यम्, तथासति रामर् इत्यवस्थायां सुपिचेत्येतत्स्थानीयरुपिचेति सूत्रेण दीर्घापत्तेः। नच ह्यवरडित्यत्र हरयवडिति न्यासेन यञ्परत्वाभावान्न दोष इति वाच्यम्, एधेरन्नित्यत्र लोपो व्योर्वलीतियलोपानापत्तेः। लोपोव्योरलीति न्यासे तु अव्यादित्यत्रापि वलोपापत्तिः। लोपो व्योरिति सूत्रे वकारप्रत्याख्यानपक्षेऽपि हय्यादित्यत्र यलोपापत्तिदुरुद्धरैव। तथाच राम इत्यत्र दीर्घापत्तिभिया रुन्यासः कर्तुमशक्य इति चेन्न। सुपिचेत्यस्य स्थाने शपिचेति आपिचेतिवा न्यासेनादोषात्। ननु रुन्यासे यशोत्रेत्यादावुत्वानापत्ती रुत्वस्यासिद्धत्वात्। राद्धान्ते तु रुत्वमनूद्योत्वविधानसामर्थ्यान्नासिद्धत्वम्। नचाप्लुतादुग्रहणसामर्थ्याद्रोरसिद्धत्वं नेति कल्प्यते इति वाच्यम्, भवान् देवदत्त३अत्र स्नाहीत्यत्रोत्ववारणायाप्लुतादुग्रहणस्य चारितार्थ्यात्। अप्लुते ग्रहणमपि भवान् देवदत्त अ३ग्निदत्तेत्यत्र चरितार्थमिति न तदपि रोरसिद्धत्वाभवज्ञापकमिति बोध्यम्। नच रूपरात्रीतिवार्तिकेन रुविधानमसिद्धत्वाभावज्ञापकमिति वाच्यम्, यत्नार्थं रुविधानस्य चरितार्थ्यात्। नच तथासति

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

यकारे एव विधातव्ये रुविधानं ज्ञापकमेवेति वाच्यम्, अहराचष्टे अहयति टिलोपे क्विपि अह् शब्दस्य गोशब्देन समासे गोरूपमिति भवति यकारविधाने तु गोयूरूपमिति स्यात्। लोपविधाने तु सिद्धान्ते रूपमिवाचरत् अरूपत् गोररूपदिति भवति इदानीं गोअरूपदिति स्यात्। रुत्वविधानं तु अहोरूपित्वा अहोरूप्त्वा इत्यत्रेड्विकल्पार्थं चरितार्थम्। नचाहन्निति सूत्रारम्भसामर्थ्यादुत्वं प्रति रोर्नासिद्धत्वमिति वाच्यम्, दीर्घाहत्वा दीर्घाहरित्वा इति रूपद्वयार्थं रुविधानस्य चारितार्थ्यात् अहरित्वेति एकरूपार्थं रेफविधानस्य चरितार्थत्वं बोध्यम् अतो रुन्यासो न युक्तः।

ननु प्रत्यय इति निर्देशेन नमुने इत्यत्र योगविभागेन क्वचित्त्रिपाद्या असिद्धत्वं नेति कल्पनया परत्वाद्रुत्वे विसर्गे च कृते सकृद्गतिन्यायादेत्वं न स्यादिति चेन्न, निर्देशेन सूत्रान्तरखण्डनस्यायुक्तत्वात्, नमुने इति योगविभागस्य भाष्येऽदर्शनाच्च।

नच बहुवचनग्रहणाभावे असौ झल्येदितिन्यासेन राम इत्यत्रैत्ववारणसम्भवेऽपि रामस्येत्यत्रैत्वापत्तिरिति वाच्यम्, टाङसिङसामिनादस्या इति न्यस्य 'अस्य' आदेशं विधायातोगुण इति पररूपे रामस्येत्यस्य सिद्धेः। एवं सर्वस्मै सर्वस्मात्सर्वस्मिन्नित्यत्रापि एत्ववारणाय अकारादय एव स्मादयो विधातव्या इति न काचित्क्षतिः। नच सर्वत्राकारप्रश्लेषकरणे लाघवाभाव इति वाच्यम्, सर्वनाम्नः स्मै अट् चेति न्यस्य ङसिङ्योरित्यत्रापि अटःसंबन्धेन सिद्धावनेकत्राकारकरणाभावेन गौरवाभावात्।

नच अस्यादेशविधाने इदंशब्दान्ङसि अस्येत्यस्यासिद्ध्यापत्तिः हल्परत्वाभावेन हलिलोप इति इदो लोपाप्राप्तेरिति वाच्यम्, हलि लोपोऽकः अनाप्यक इत्यस्य स्थाने अननसोति न्यस्य असुभिन्ने असदृशेऽजादावेवानादेशविधानेनेष्टसिद्धेः।

केचित्तु अनटौसोराप्यकोलोप इति न्यासेन अस्येत्यत्र दोषं परिहरन्ति। नचास्यादेशकरणे निर्जरशब्दान्ङसि निर्जरसस्येति रूपापत्तिरिति वाच्यम्, संनिपातपरिभाषया तत्र जरसादेशाप्राप्त्याऽदोषात्। अत एव अतिजरैरिति भवितव्यं सन्निपातपरिभाषयेत्युक्तं भाष्ये। नच

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

सुपाच्छब्दस्य अशब्देन समाहारद्वन्द्वे ङसि सुपादस्येत्यत्र भत्वात्पदादेशापत्तिरस्येति न्यासे इति वाच्यम्, तत्र अतोगुण इति पररूपस्य अचः परस्मिन्निति स्थानिवत्त्वेन आयसावित्यत्र नुम इव प्रकृते पदादेशस्याप्यप्राप्तेः। यदि च न पदान्तेतिनिषेधान्न स्थानिवत्वप्राप्तिरित्युच्यते तदा अस्यादेशस्य विधातुमशक्यतया रामस्येत्यत्रैत्वापत्तिवारणाय बहुवचनग्रहणमावश्यकमेवेति ध्येयम्। नच रामस्येत्यत्र संनिपातपरिभाषयैत्वं न भविष्यतीति वाच्यम्, हलिसर्वेषामिति निर्देशेनैत्वे संनिपातपरिभाषाया अप्रवृत्तेः। निर्देशस्य षष्ठीबहुवचने एवानित्यत्वबोधकत्वे तु रामस्येत्यत्र सन्निपातपरिभाषया एत्ववारणसम्भवेऽपि रामाभ्यामित्यत्रैत्ववारणाय बहुवचनग्रहणमित्यवधेयम्। नच सुपि चेत्यस्य स्थाने ङेभ्यामीति न्यस्य विशेषविहितत्वेनैत्वापवादतया दीर्घे रामाभ्यामित्यत्र न दूषणमिति वाच्यम्, सुपिचेत्यस्याभावे बहुवचने झल्येदित्यत्रापि तदसंबन्धे पचध्वमित्यत्रैत्वापत्तेः। अध्वंकरणे तु एधांचकृढ्वे इत्यस्यासिद्धिः। झल्येदित्यस्य स्थाने स्भ्येदितिन्यासेन पचध्वमित्यत्र दोषवारणे तु एधस्वेत्यत्रैत्वापत्तिः। स्भ्येदतिङ इति न्यासेन भकारसाहचर्येण सकारस्य तिङव्यवच्छिन्नस्य ग्रहणेन वा एधस्वेत्यत्र न दूषणं किन्तु घेर्ङितीत्यत्र सुपीत्यस्यासंबन्धेन पट्वीत्यत्र गुणापत्तिर्दोषः। दीपकरणे तु पट्वीशब्दादाचारक्विबन्तात्पट्वयते इत्यत्र ङित्वादिष्टस्यात्मनेपदस्यानापत्तिः इति चेदुच्यते—तद्धिता इति सूत्रस्य स्त्रियामित्यनन्तरं पाठोऽस्तु यस्येतिचेतिसूत्रे ईकारग्रहणम् औङः श्यां प्रतिषेधो वाच्य इति वार्तिकम्, प्राचां ष्फ इति सूत्रे तद्धितग्रहणं च मास्तु ततश्च ओर्गुण इतिगुणे पटवीतिरूपसिद्ध्या तादृशपाठाकरणेन स्त्रीप्रत्यये गुणो नेति कल्पनान्ङीषि पट्वीत्यत्र न गुण इति।

ननु प्राचांष्फ इति सूत्रीयतद्धितग्रहणाकरणरूपलाघवप्रदर्शनमनुचितं तद्धितग्रहणस्य क्वचिदन्यतोऽप्ययमितिज्ञापनद्वारा आसुरायणीतिसिद्ध्यर्थमावश्यकत्वादितिचेन्न। फडंविधाय डित्वफलस्यान्यत्रैव सत्त्वेन क्वचिदन्यतोप्ययमित्यस्य ज्ञापनसंभवात्। नच गोकक्षशब्दाद् गर्गादित्वाद्यञि ततः क्रौड्यादित्वात् ष्यङि चापि ष्फप्रत्यये कर्तव्ये भस्याढ इति पुंवत्वे गौकक्षायणीति भवति इदानीं ष्फप्रत्ययस्य तद्धि-

CC-0. Vaishali Tripathi Collection. Digitized by eGangotri

तत्वाभावेन तन्न स्यादितिवाच्यम्, बाह्यश्चापूर्ववक्तव्य इति चाप उदीचांमते एव सत्वेन प्राचांमते चाप्बाधकस्य ष्फस्य सत्वेबाधकाभावात्, इदानीं तद्धिताधिकारे पाठेन प्राचांष्फ इत्यत्रतद्धितग्रहणाभावेऽपितद्धितत्वसिद्धेश्च ।

नच तथा करणे शुनीति रूपासिद्धिः, अतद्धित इति निषेधेन संप्रसारणाप्राप्तेरिति वाच्यम्, श्वयुवमघोनामतद्धितेङ्यांचेतिन्यासेनादोषात् । नच बहुराज्ञीत्यत्र नस्तद्धित इति टिलोपापत्तिरिति वाच्यम्, डापो डित्करणेन स्त्रीप्रत्यये नस्तद्धिते इति टिलोपो नेतिज्ञापनात् । नच ङीबादौ ङकारस्येत्वं न स्याल्लशक्वतद्धिते इत्यत्रातद्धितग्रहणादिति वाच्यम्, चुटुङः इतिन्यासेनादोषात् । नच कुरूरित्यत्र गुणापत्तिः, ङूङुत इति न्यासेनादोषात् ।

नच नद्या अः नद्यस्तमिच्छतीतिविग्रहे क्यचि स्थानिवद्भावेन यकारे तद्धितत्वमाश्रित्यय यच्व्योश्चेति लोपापत्तिरिति वाच्यम्, आदेशिन्यल्याश्रीयमाणे प्रतिषेध इति वार्तिकबोधितेन नागेशाभिमतानल्विधावित्यस्यार्थेन प्रकृते स्थानिवत्त्वाप्राप्त्याऽदोषात् । तस्माद् बहुवचनग्रहणं चिन्त्यप्रयोजनम् ॥ १ ॥

ननु बहुवचने झल्येदित्यस्मिन्सूत्रे झल्ग्रहणं किमर्थम् । न च तथा सति रामा इत्यत्रैत्वापत्तिरिति वाच्यम्, उतो वृद्धिर्लुकि हलीत्यतो हलपदमनुवर्त्य अदन्ताङ्गस्यैत्वं स्याद्बहुवचने हलादौ सुपि परे इत्यर्थकरणेन रामा इत्यत्रैत्वाप्राप्तेरिति चेन्न ।

रामशब्दादामि आमो ह्रस्वनद्यापो नुडिति नुटि हरीणाम् इत्यत्र चरितार्थं नामीति दीर्घं बाधित्वा परत्वादेत्वे रामाणामित्यस्यासिद्ध्यापत्तेः । उतो वृद्धिरित्यत्र हलीत्यस्य स्थाने झलीति करणे तु रौमीत्यत्र वृद्ध्यनापत्तिः । मुझलीति करणे तुरुस्तुशम्यमः सार्वधातुके इति सूत्रे तदनुवृत्त्या स्तुवीव इत्यादेरसिद्ध्यापत्तिः, नच सन्निपातपरिभाषया रामाणामित्यत्रैत्वं न स्यादिति झल्ग्रहणं व्यर्थमेवेति वाच्यम्, एत्वे सन्निपातपरिभाषाया अनित्यत्वज्ञापनार्थं झल्ग्रहणस्यावश्यकत्वात् तेन सर्वेषामित्यत्रैत्वसिद्धिरतो यथान्यासमेव रम्यम् ।

केचित्तु झलि किं रामाणामित्यस्य पूर्वोक्तरीत्याभिप्रायवर्णने झली-

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

त्वस्य-स्वांशे चारितार्थ्याभावः। राम नाम् इति स्थिते कृताकृतप्रसङ्गित्वेन नित्यत्वान्नामीति दीर्घे अदन्तत्वाभावेनैत्वाप्राप्त्या झल्ग्रहणस्य वैयर्थ्यात्। अतः झलि किमित्यस्यायमभिप्रायः—अदन्ताङ्गस्य बहुवचने सुप्येत्वमिति। न च रामाः, रामानित्यादौ प्रथमयोरिति दीर्घं बाधित्वैत्वापत्तिरिति वाच्यम्, तस्माच्छसो न इति सूत्रे तच्छब्दपदेन दीर्घपरामर्शकरणेन प्रथमयोरिति दीर्घस्यैत्वबाधकत्वमिति कल्पनेनादोषादिति प्रष्टुराशयः। उत्तरकर्तुस्तु राम आमिति स्थिते हरीणामित्यादौ चरितार्थं नुटं परत्वाद्बाधित्वा एत्वापत्तिरिति वदन्ति। कश्चित्तु शब्दान्तरस्य प्राप्नुवन्निति न्यायान्नामीत्यस्यानित्यतया परत्वात्प्राप्तैत्ववारणाय झल्ग्रहणं स्वांशे चरितार्थमित्याह ॥ २ ॥

ननु बहुवचने झलीक इत्येव सूत्रमस्तु अर्धमात्रालाघवानुरोधात्। तथा च रामशब्दाद्भ्यसि अदन्ताङ्गस्येगागमे आद्गुणे रामेभ्य इत्यस्य सिद्धिरिति चेन्न।

तथा सति सम्बुद्धौ चेत्यत्रापीकः सम्बन्धात् रमाशब्दात्सम्बुद्धौ इगागमे रमाइस् इति स्थिते घटकनिमित्तकत्वरूपान्तरङ्गत्वेन एङ्ह्रस्वादित्यतः पूर्वं प्राप्तं गुणं बाधित्वा वार्णादाङ्गमिति परिभाषया ह्रस्वस्य गुण इति गुणे वृद्धिरेचीति वृद्धौ हे रमे इत्यस्यासिद्ध्यापत्तेः।

ननु सम्बुद्धौ चेत्यत्र विषयसप्तमीमङ्गीकृत्य विभक्त्युत्पत्तेः पूर्वमेवेकि गुणे ततः सौ एङ्ह्रस्वादिति सोर्लोपे हे रमे इत्यस्य सिद्धिरिति चेन्न।

एवं तर्हि ओसिचेत्यत्रापीकः सम्बन्धात् ज्ञान इ औस् इति स्थितेऽन्तरङ्गमपि गुणं बाधित्वा वार्णादाङ्गमिति परिभाषया इकोऽचि विभक्ताविति नुमि ज्ञानयोरित्यस्यासिद्ध्यापत्तेः।

न च वार्णशास्त्रीयस्थानितावच्छेदकपर्याप्त्यधिकरणपर्याप्तस्थानिताकत्वरूपसमानस्थानिताकत्वे एव वार्णशास्त्रप्रवृत्त्या प्रकृते वार्णशास्त्रमाद्गुण इति तदीया स्थानिता अ इ इत्युभयनिष्ठा तदवच्छेदको धर्मः पूर्वत्वं परत्वं च तत्पर्याप्त्यधिकरणम् अ इ इति तत्पर्याप्तस्थानिताकत्वस्य इकोऽचीत्यस्याभावेन परिभाषाऽप्रवृत्त्या गुणे ज्ञानयोरित्यस्य सिद्धिरिति वाच्यम्, वार्णशास्त्रीयसप्तम्यन्तपञ्चम्यन्तान्यतरपदप्रयो-

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

ज्यविषयतापर्याप्त्यनुयोगितावच्छेदकधर्मावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगिभूतोपस्थितीयमुख्यविशेष्यताप्रयोजकपदघटितत्वरूपसमानाश्रयत्वे एव तत्प्रवृत्तेः स्वीकारेण गुणशास्त्रीयसप्तम्यन्ताच्पदप्रयोज्यविषयता इकारपर्याप्ता इति तादृशपर्याप्त्यनुयोगितावच्छेदको धर्मः इकारगततद्व्यक्तित्वम् तदवच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगिभूतोपस्थितीयमुख्यविशेष्यता इकारे तत्प्रयोजकेकपदघटितत्वेन नुम्विधायके समानाश्रयत्वसत्वेन वार्णपरिभाषाप्रवृत्त्या ज्ञानयोरित्यस्यासिद्धेः । किञ्च निरुक्तसमानस्थानिकत्वे एव प्रवृत्यङ्गीकारेऽपि ज्ञानशब्दस्य अशब्देन समासे तत आचारक्विबन्तात्कर्तरि क्विपि नपुंसकह्रस्वत्वे परमशब्देन समासे ओसि इगागमे इयङि परम ज्ञानयोरित्यस्यासिद्ध्यापत्तेः । न च परनेकाचं इति यणा सिद्धिरिति वाच्यम्, गतिकारकपूर्वस्यैवेष्यते इति नियमेन तदप्रवृत्तेरित्यलम् ॥ ३ ॥

ननु वहुवचने झलीट् इत्येव सूत्रमस्तु इक्करणे ज्ञानयोरित्यत्र नुमापत्तिसम्भवेऽपीदानीमिटः विभक्त्यवयवत्वेन इगन्ताङ्गत्वाभावेन नुमोऽप्राप्तेरिति चेन्न । हे गङ्गे इत्यत्र गङ्गा स् इत्यवस्थायामिटि गुणे पञ्चमीसमासाश्रयणेन अचः परस्मिन्निति स्थानिवद्भावेनेकारव्यवधानात्सम्बुद्धिलोपस्य हल्ङ्यादिलोपस्य वाऽनापत्तेः । नच प्रातिगणग्येति भाष्योदाहरणेन पञ्चमीसमासस्यानित्यत्वान्न स्थानिवत्त्वमिति गङ्गे इत्यस्य सिद्धिरिति वाच्यम्, इट्करणे एभिरित्यत्र भिस इटि हलादित्वाभावेन हलि लोपानापत्तेः । नच अनाप्यकः, हलि लोप इत्यनयोः स्थाने आपि लोपोऽकः, अनटौसोरिति न्यासेन लोपे हलादित्वस्यानपेक्षणेन एभिरित्यस्य सिद्धिः स्वौजसमौट्शस्सु लोपापत्तिस्तु न, इदोय् पुंसि, यः सौ, दश्चेत्यादिभिर्बाधादिति वाच्यम्, इट्करणे एभिरित्यत्र दोषाभावेऽपि निर्जरेभ्य इत्यत्र जरसादेशापत्तेः ।

नच सन्निपातपरिभाषया न जरसादेश इति वाच्यम्, एवमपि आङिचाप इत्यनेनापीटि रमया, रमयोरित्यादेरसिद्ध्यापत्तेः । तथाहि पूर्वं पूर्वमन्तरङ्गमित्येवंरूपान्तरङ्गत्वस्य गुणे सत्वेऽपि न धातुलोप आर्धधातुके इति सूत्रे प्रेद्ध इत्युदाहरणमुपादाय अर्थवद्द्वयसम्बन्धिवर्णद्वयापेक्षत्वरूपबहिरङ्गत्वस्य भाष्योक्तस्य गुणे सत्वेन बहिरङ्गत्वासमानाधि-

CC-0. Vasishtha Tripathi Collection. Digitized by eGangotri

करणान्तरङ्गत्वस्यैव प्राबल्यप्रयोजकतया पूर्वं पूर्वमन्तरङ्गमित्यस्य भाष्यानुक्ततया च अर्थवदेकसम्बन्धिवर्णद्वयापेक्षत्वरूपान्तरङ्गत्ववति यणि रमया रमयोरिति स्यादिति ।

नच न धातुलोप इति सूत्रस्थभाष्यात्पदद्वयसम्बन्धिवर्णद्वयापेक्षत्वरूपमेव वहिरङ्गत्वमस्तु, तथा च प्रकृते पदद्वयसम्बन्धिवर्णद्वयापेक्षत्वरूपवहिरङ्गत्वस्य गुणेऽभावेन परत्वाद्यणं वाधित्वा गुणेऽयादेशे रमयः इत्यादेः सिद्धिरिति वाच्यम्, गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक्सुबुत्पत्तेरिति परिभाषया सुबुत्पत्तेः प्राक् समासे प्रेद्ध इत्यत्रापि गुणे पदद्वयसम्बन्धिवर्णद्वयापेक्षत्वरूपवहिरङ्गत्वाभावेनासिद्धत्वाभावान्नधात्विति गुणनिषेधापत्तिरतोऽर्थवद्द्वयसम्बन्धिवर्णद्वयापेक्षत्वरूपवहिरङ्गत्वस्यावश्यमङ्गीकर्तव्यतया रमयेत्यादेरसिद्धितादवस्थ्यात्, जिधातोरचि आचारक्विबन्ताद्विच्यल्लोपयलोपयोर्भ्यसि जभ्य इत्यत्रैत्वे कर्तव्येऽल्लोपस्य स्थानिवत्त्वेनाकारव्यवधानात् स्वविधौ च स्थानिवत्त्वाभावादेत्वं न भवति इटि तु अदन्तात्परस्य भ्यसः सत्वेन जेभ्य इत्यनिष्टापत्तेः। सुपाच्छब्दस्याशब्देन समासे भ्यसि इटि गुणे सत्वे पादः पदिति पदादेशापत्तेश्च । पदादेशे गुणस्य स्थानिवत्त्वं तु न, न पदान्तेतिनिषेधादित्यलम् ॥ ४ ॥

ननु वहुवचने झल्येदित्यस्य स्थाने असावेदित्येव सूत्रमस्तु । सुपि चेत्यतः सुपीत्यस्य सम्बन्धात् असाविति पर्युदासाद्वा सुप्येव प्रवृत्तिरिति पचध्वमित्यादौ न दोषः । ओसि चेति सूत्रं नियमार्थमजादौ चेदोस्येवेति तेन हरिमित्यादौ चरितार्थस्य अमि पूर्व इत्यस्य बाधेन राममित्यादौ एत्वापत्तिर्न, रामैरित्यत्र च ओसि चेति नियमात् सन्निपातपरिभाषया वा नैत्वम् । किञ्च एदित्येव सूत्रमस्तु एङ्ह्रस्वादिति सूत्रे ह्रस्वग्रहणाच्च सौ नेत्वमिति कल्पनाद्राम इत्यत्र नैत्वम् । नच हे लक्ष्मि हे वधु इत्याद्यर्थं ह्रस्वग्रहणमिति वाच्यम्, इदुदेङः सम्बुद्धेरित्येव वक्तव्ये ह्रस्वग्रहणवैयर्थ्येनोक्तार्थकल्पनात् हे ज्ञानेत्याद्यर्थमपि न इदुदेङः सम्बुद्धेर् इत्येतावतैव सिद्धेरिति चेन्न ।

रामाभ्यामित्यत्रैत्वापत्तेरिति दिक् ॥ ५ ॥

ननु वहुवचने झल्येदित्यस्य स्थाने स्येदित्येव सूत्रमस्तु सकारादौ

CC-0. Vasishtha Tripathi Collection. Digitized by eGangotri

भकारादौ च सुप्यदन्ताङ्गस्यैत्वमित्यर्थात्सारसायनभक्त इत्यादौ नैत्वम् । बहुवचनग्रहणाभावे रामो रामाभ्यां रामस्येत्यत्र न दूषणं भकारादिसाहचर्येणैकवचनभिन्नस्य सादेः सादिसाहचर्येण द्विवचनभिन्नस्य भादेर्ग्रहणात् । नन्वेवं न्यासे सादिभादिप्रत्ययपरत्वाभावेन पचध्वमित्यत्रैत्वाप्राप्त्या सुपीत्यनुवृत्तिरपि मास्तु । नच पचस्वेत्याद्यर्थं सेति वाच्यम्, परस्परसाहचर्येण बहुवचनस्यैव प्रत्ययस्य ग्रहणमित्यस्यानुपदमुक्तत्वात् । नच क्रियासमभिहारे लोट् लोटो हिस्वौ वा च तध्वमोरिति ध्वंविषये स्वादेशे पचस्वेत्यत्र बहुवचनप्रत्ययपरत्वसत्त्वेनैत्वापत्तिरिति वाच्यम्, भादिसाहचर्येण तिङतिरिक्तस्यैव सादेर्ग्रहणेनादोषादिति चेन्न ।

सुट् तिथोरित्यत्रेकारोच्चारणेन शास्त्राबोधिताजव्यवहितहल्समुदायस्यासाधुत्वबोधनेन स्भ्येदिति न्यासस्यासाधुत्वापत्त्या कर्तुमशक्यत्वात् । वस्तुतस्तु स्वाव्यवहितत्वसम्बन्धावच्छिन्नाच्त्वावच्छिन्नप्रतियोगिताकाभाववद्धल्समुदायस्यैवासाधुत्वं बोध्यते तेन झलो झलि स्कोरिति संहितापाठे स्कोरित्यस्य साधुत्वसिद्धिरिति न सौत्रत्वाश्रयणक्लेशोपि । एवं च सुपिच स्भ्येदिति संहितापाठेऽस्यापि साधुत्वमस्त्येव किन्तु परस्परसाहचर्याश्रयणे ज्ञानगौरवमित्येव दूषणं प्रकृतन्यासे इति दिक् ॥६॥

## ह्रस्वनद्यापो नुट् ४४

ननु ह्रस्वनद्यापो नुट् इत्यस्य स्थाने नुट् इत्येव सूत्रमस्तु अङ्गात्परस्यामो नुडागम इति तदर्थः । नच हाहाशब्दाद् ग्रामणीशब्दाच्चामो नुडापत्तिरिति वाच्यम्, नद्याप इति पृथक्सूत्रकरणेन दीर्घान्ताच्चेन्नुट् तर्हि नद्याप एवेति नियमेनादोषात् । नच लिहामित्यत्र नुडापत्तिरिति वाच्यम्, हलन्ताच्चेन्नुट् तर्हि षट्चतुर्भ्य एवेति नियमस्य षट्चतुर्भ्यश्चेति सूत्रबलेन करणात् . वसुस्रंसुध्वंस्वनडुहां द इत्यादिनिर्देशाच्च हलन्तेभ्यो नुटोऽप्रवृत्तेः । एवं च ह्रस्वग्रहणं व्यर्थमिति चेद्—

अत्र शेखरकृतः—नियम्यशास्त्रीयोद्देश्यतावच्छेदकव्याप्यं नियामकशास्त्रीयोद्देश्यतावच्छेदकव्यापकं च यद्रूपं तद्रूपावच्छिन्नातिरिक्तत्वेन नियम्यशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्ने संकोचः क्रियते ततश्च नियम्यनुडितिशास्त्रीयोद्देश्यतावच्छेदकाङ्गत्वव्याप्यस्य दीर्घान्तत्वे सत्वेऽपि

CC-0. ... Digitized by eGangotri

नद्याप इति नियामकशास्त्रीयोद्देश्यतावच्छेदकनद्यन्तत्वाबन्तत्वयोर्ह्र-स्वान्तेऽतिखट्वादिशब्देऽपि सत्वेन तद्व्यापकत्वस्याभावाद्दीर्घान्तातिरिक्तत्वेन नुडिति शास्त्रे संकोचासम्भवेन ग्रामण्यादिशब्दे नुडापत्तेर्दुर्वारत्वात् स्त्रीलिङ्गानां चेन्नद्याप एवेति विपरीतनियमापत्तौ मतीनामित्यादौ नुडनापत्तेश्चेति वदन्ति ।

तदसत्, कुमारीवाचरन् ब्राह्मणः कुमारो, वनितेवाचरन् ब्राह्मणः वनितेत्यादौ नद्यन्ताबन्तत्वयोः सत्त्वेऽपि स्त्रीलिङ्गत्वस्याभावात् स्त्रीलिङ्गत्वे नद्याप इति नियामकशास्त्रीयोद्देश्यतावच्छेदकव्यापकत्वस्यासत्वेन स्त्रीलिङ्गातिरिक्तत्वेन नुडितिशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्ने संकोचासम्भवेन मतीनामित्यादेः सिद्धौ बाधकाभावात् । ग्रामण्यवहितपूर्वत्वविशिष्टनद्यन्तत्वस्य, जरसामित्यादौ स्थानिवत्वेनाबन्तत्वमाश्रित्य प्राप्तनुटो वारणाय नद्याप इत्यत्राकारप्रश्लेषात् आरूपाबन्तत्वस्य च ह्रस्वान्तेऽभावेन नद्याप इति नियामकशास्त्रीयोद्देश्यतावच्छेदकव्यापकत्वं दीर्घान्तत्वे स्यादिति दीर्घान्तातिरिक्तत्वेन नुडितिशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्ने संकोचाद् ग्रामण्यादिशब्दे दोषाभावाद् ह्रस्वग्रहणं सुत्यजमिति चेन्नियमद्वयाश्रयणे गौरवमिति यथान्यासमेव रमणीयमित्येव सन्तोष्टव्यम् ।

केचित्तु नुडिति सामान्यतः सूत्रकरणे ङेराम्नद्याम्नीभ्य इति ङेरामि परमप्याटं बाधित्वा सामान्यापेक्षत्वेनान्तरङ्गत्वन्नुटि बहुश्रेयस्यामित्यस्यासिद्धिः । नच तत्र नुडिष्यत एवेति वाच्यम्, बहुश्रेयस्यामित्यत्र परत्वादाटि सकृद्गतिन्यायान्नुड् नेति भाष्येण नद्यां मतुबित्यादिनिर्देशेन च सप्तम्येकवचने नुटोऽनिष्टत्वावगमात् । नच नियमशास्त्राणां विधिमुखेन प्रवृत्तिरिति पक्षे नद्याप इत्येव नुड्विधायकं तच्च न सामान्यापेक्षमिति नोक्तदोष इति वाच्यम्, निषेधमुखेन प्रवृत्तिरितिपक्षे नुडित्येव नुड्विधायकं तच्च सामान्यापेक्षमिति दोषादिति वदन्ति ।

तन्न, सामान्यापेक्षस्यान्तरङ्गत्वे त्यदादीनाम इत्यस्यान्तरङ्गत्वेन तदोरिति बाधित्वाऽन्त्यस्यात्वेऽर्थादादेरेव सत्वे अनन्त्ययोरित्यस्य वैयर्थ्यभिया सामान्यापेक्षस्यान्तरङ्गत्वानङ्गीकारेणादोषात् ।

अन्ये तु नद्याप इत्यत्र ... नुडेव ... नियमादिति विपरीतनियमापत्तौ

CC-0. Vasishtha Tripathi Collection. Digitized by eGangotri

भकारादौ च सुप्यदन्ताङ्गस्यैत्वमित्यर्थात्सारसायनभक्त इत्यादौ नैत्वम् । बहुवचनग्रहणाभावे रामो रामाभ्यां रामस्येत्यत्र न दूषणं भकारादिसाहचर्येणैकवचनभिन्नस्य सादेः सादिसाहचर्येण द्विवचनभिन्नस्य भादेर्ग्रहणात् । नन्वेवं न्यासे सादिभादिप्रत्ययपरत्वाभावेन पचध्वमित्यत्रैत्वाप्राप्त्या सुपीत्यनुवृत्तिरपि मास्तु । नच पचस्वेत्याद्यर्थं सेति वाच्यम्, परस्परसाहचर्येण बहुवचनस्यैव प्रत्ययस्य ग्रहणमित्यस्यानुपदमुक्तत्वात् । नच क्रियासमभिहारे लोट् लोटो हिस्वौ वा च तध्वमोरिति ध्वंविषये स्वादेशे पचस्वेत्यत्र बहुवचनप्रत्ययपरत्वसत्त्वेनैत्वापत्तिरिति वाच्यम्, भादिसाहचर्येण तिङतिरिक्तस्यैव सादेर्ग्रहणेनादोषादिति चेन्न ।

सुट् तिथोरित्यत्रेकारोच्चारणेन शास्त्रावोधिताजव्यवहितहल्समुदायस्यासाधुत्वबोधनेन स्भ्येदिति न्यासस्यासाधुत्वापत्त्या कर्तुमशक्यत्वात् ।

वस्तुतस्तु स्वाव्यवहितत्वसम्बन्धावच्छिन्नाच्त्वावच्छिन्नप्रतियोगिताकाभाववद्धल्समुदायस्यैवासाधुत्वं बोध्यते तेन झलो झलि स्कोरिति संहितापाठे स्कोरित्यस्य साधुत्वसिद्धिरिति न सौत्रत्वाश्रयणक्लेशोऽपि । एवं च सुपिच स्भ्येदिति संहितापाठेऽस्यापि साधुत्वमस्त्येव किन्तु परस्परसाहचर्याश्रयणे ज्ञानगौरवमित्येव दूषणं प्रकृतन्यासे इति दिक् ॥६॥

## ह्रस्वनद्यापो नुट् ४४

ननु ह्रस्वनद्यापो नुट् इत्यस्य स्थाने नुट् इत्येव सूत्रमस्तु अङ्गात्परस्यामो नुडागम इति तदर्थः । नच हाहाशब्दाद् ग्रामणीशब्दाच्चामो नुडापत्तिरिति वाच्यम्, नद्याप इति पृथक्सूत्रकरणेन दीर्घान्ताच्चेन्नुट् तर्हि नद्याप एवेति नियमेनादोषात् । नच लिहामित्यत्र नुडापत्तिरिति वाच्यम्, हलन्ताच्चेन्नुट् तर्हि षट्चतुर्भ्य एवेति नियमस्य षट्चतुर्भ्यश्चेति सूत्रबलेन करणात्, वसुस्रंसुध्वंस्वनडुहां द इत्यादिनिर्देशाच्च हलन्तेभ्यो नुटोऽप्रवृत्तेः । एवं च ह्रस्वग्रहणं व्यर्थमिति चेद्—

अत्र शेखरकृतः—नियम्यशास्त्रीयोद्देश्यतावच्छेदकव्याप्यं नियामकशास्त्रीयोद्देश्यतावच्छेदकव्यापकं च यद्रूपं तद्रूपावच्छिन्नातिरिक्तत्वेन नियम्यशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्ने संकोचः क्रियते ततश्च नियम्यनुडितिशास्त्रीयोद्देश्यतावच्छेदकाङ्गत्वव्यापकत्वस्य दीर्घान्तत्वे सत्त्वेऽपि

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

नद्याप इति नियामकशास्त्रीयोद्देश्यतावच्छेदकनद्यन्तत्वावन्तत्वयोर्ह्रस्वान्तेऽतिखट्वादिशब्देऽपि सत्वेन तद्व्यापकत्वस्याभावाद्दीर्घान्तातिरिक्तत्वेन नुडिति शास्त्रे संकोचासम्भवेन ग्रामण्यादिशब्दे नुडापत्तेर्दुर्वारत्वात् स्त्रीलिङ्गानां चेन्नद्याप एवेति विपरीतनियमापत्तौ मतीनामित्यादौ नुडनापत्तेश्चेति वदन्ति।

तदसत्, कुमारीवाचरन् ब्राह्मणः कुमारी, वनितेवाचरन् ब्राह्मणः वनितेत्यादौ नद्यन्तावन्तत्वयोः सत्त्वेऽपि स्त्रीलिङ्गत्वस्याभावात् स्त्रीलिङ्गत्वे नद्याप इति नियामकशास्त्रीयोद्देश्यतावच्छेदकव्यापकत्वस्यासत्वेन स्त्रीलिङ्गातिरिक्तत्वेन नुडितिशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्ने संकोचासम्भवेन मतीनामित्यादेः सिद्धौ बाधकाभावात्। आमव्यवहितपूर्वत्वविशिष्टनद्यन्तत्वस्य, जरसामित्यादौ स्थानिवत्वेनावन्तत्वमाश्रित्य प्राप्तनुटो वारणाय नद्याप इत्यत्राकारप्रश्लेषात् आरूपावन्तत्वस्य च ह्रस्वान्तेऽभावेन नद्याप इति नियामकशास्त्रीयोद्देश्यतावच्छेदकव्यापकत्वं दीर्घान्तत्वे स्यादिति दीर्घान्तातिरिक्तत्वेन नुडितिशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्ने संकोचाद् ग्रामण्यादिशब्दे दोषाभावाद् ह्रस्वग्रहणं सुत्यजमिति चेन्नियमद्वयाश्रयणे गौरवमिति यथान्यासमेव रमणीयमित्येव सन्तोष्टव्यम्।

केचित्तु नुडिति सामान्यतः सूत्रकरणे ङेराम्नद्याम्नीभ्य इति ङेरामि परमप्याटं बाधित्वा सामान्यापेक्षत्वेनान्तरङ्गत्वन्नुटि बहुश्रेयस्यामित्यस्यासिद्धिः। नच तत्र नुडिष्यत एवेति वाच्यम्, बहुश्रेयस्यामित्यत्र परत्वादाटि सकृद्गतिन्यायान्नुड् नेति भाष्येण नद्यां मतुबित्यादिनिर्देशेन च सप्तम्येकवचने नुटोऽनिष्टत्वावगमात्। नच नियमशास्त्राणां विधिमुखेन प्रवृत्तिरिति पक्षे नद्याप इत्येव नुड्विधायकं तच्च न सामान्यापेक्षमिति नोक्तदोष इति वाच्यम्, निषेधमुखेन प्रवृत्तिरितिपक्षे नुडित्येव नुड्विधायकं तच्च सामान्यापेक्षमिति दोषादिति वदन्ति।

तन्न, सामान्यापेक्षस्यान्तरङ्गत्वे त्यदादीनाम इत्यस्यान्तरङ्गत्वेन तदोरिति बाधित्वाऽन्त्यस्यात्वेऽर्थादादेरेव सत्वे अनन्त्ययोरित्यस्य वैयर्थ्यभिया सामान्यापेक्षस्यान्तरङ्गत्वानङ्गीकारेणादोषात्।

अन्ये तु नद्यापः परस्यामो नुडेव नान्यदिति विपरीतनियमापत्तौ

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

सुडागमस्य पुंसि, आड्याट्स्याटां ङिदन्तरे चारितार्थ्याद् गौर्या रमायां सर्वासां सर्वस्यामित्यादि न सिद्ध्येदिति वदन्ति ।

तन्न, नद्यां मतुप् भाषायां सद्वसस्रुवः सर्वासां प्रायदर्शनमित्यादिनिर्देशैः विपरीतनियमस्य वारणेनादोषात् ।

कश्चित्तु नियमस्य सजातीयापेक्षत्वादाकारान्तादीकारान्तादूकारान्ताच्च नुट् चेत्तर्हि नद्याप एवेति नियमापत्तौ रायां नावां गवामित्यादौ नुडापत्तिर्दुर्वारा । नच गोः पादान्ते इति सूत्रारम्भाल्लोके गोशब्दान्नुड् नेष्यते इति वाच्यम्, तावतापि रायामित्यादौ दोषतादवस्थ्यादित्याह—

तन्न, दीर्घात्परस्यामों नुट् चेत्तर्हि नद्याप एवेति नियमे गोः पादान्त इति सूत्रं विध्यर्थमिदानीं तदपि नियमार्थमिति नद्यापः, षट् चतुर्भ्यश्च, गोः पादान्ते, इति त्रयाणां नियामकत्वस्वीकारेऽत्यन्तं ज्ञानगौरवादिति दिक् ।

## नामि ४५

ननु नामीत्यस्य स्थाने नुटीत्येव सूत्रमस्तु, अचश्चेति सूत्रात् षष्ठ्यन्ताच्पदोपस्थित्या अचो दीर्घः स्यान्नुटीति सूत्रार्थः । नच अनश्व इत्यादौ दीर्घापत्तिरिति वाच्यम्, तस्मान्नुडचीत्यस्य स्थाने तस्य नुगचीति न्यासेन नुग्विधानेनादोषात् । नच नुक्करणेऽनश्व इत्यादौ नलोपापत्तिरिति वाच्यम्, विधानसामर्थ्येन नलोपवारणात् । नचैवमपि ङमो ह्रस्वादचीति ङमुडापत्तिरिति वाच्यम्, नवीनमते उञि च पदे इत्यतः पदे इत्यनुवर्त्य अजादेः पदस्य ङमुडित्यर्थात् प्रकृते उत्तरपदत्वे चेति प्रत्ययलक्षणनिषेधेन अश्वस्य पदत्वाभावेन ङमुटोऽप्रवृत्तेः । नच नञोऽशब्देन समासे अन इति ततो णिचि टिलोपे मित्रशब्देन समासे नलोपे स्वरविधौ नलोपस्यासिद्धत्वान्नकारेण व्यवधानात् 'नञो जरमरमित्रमृता' इति स्वरो न भवति, नुकि तु नलोपासिद्धत्वेऽपि यदागमन्यायेन नुग्विशिष्टस्य नञ्ग्रहणेन ग्रहणात् स्वरापत्तिरिति वाच्यम्, तस्मान्नडचीति न्यासकरणेनादोषात् । नच सन्नच्युत इत्यत्र नोपधाया इति दीर्घापत्तिरिति वाच्यम्, दीर्घे संयोगान्तलोपस्यासिद्धत्वेन, ङमो ह्रस्वादचीति ङमुटो विधानेन वाऽदोषात् । नच तस्मान्नुडचीति करणे अनश्व-

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

शब्दादाचारक्विबन्तात्क्त्वाप्रत्यये उदितो वेतोड्विकल्पानापत्तिरिति वाच्यम्, नुटीत्यस्याङ्गाधिकारीयत्वेनाङ्गेन प्रत्ययस्याक्षेपादजन्ताङ्गस्य दीर्घः स्यान्नुडादौ प्रत्यये इत्यर्थेनोक्तलक्ष्येषु नुडादिप्रत्ययपरत्वाभावेनादोषात्। अस्यापत्यमिः न इः अनिः इत्यत्र नादिप्रत्ययसत्त्वेऽपि अङ्गत्वाभावान्न दोषः। नचैवमपि अक्षण्वन्त इत्यत्र नलोपस्यासिद्धत्वेन नान्ताङ्गत्वसत्त्वान्नोपधाया इति दीर्घापत्तिरिति वाच्यम्, अनो नडिति करणेनादोषात्। नचाचारक्विबन्तात्क्त्वाप्रत्यये इड्विकल्पार्थमुदित्करणमिति वाच्यम्, ह्रस्वनद्यापो नुडिति सूत्रस्थभाष्यप्रामाण्येन हलन्तेभ्य आचारक्विपोऽनभिधानेनादोषादिति चेन्न।

भृञः किन्नुट्चेत्यौणादिकसूत्रेण भृञो नगि नुडागमे दीर्घापत्तेः। नच तेन नडागमस्य विधानान्नायं दोष इति वाच्यम्, भृङ्ग इवाचर्य भृङ्गित्वेत्यादावुदितोवेति वैकल्पिकेडागमानापत्तेः।

वस्तुतस्तु शमेः खः शंखः इत्यत्र आयनेयीतीनादेशमाशङ्क्य प्रातिपदिकविज्ञानाच्च भगवतः पाणिनेः सिद्धमिति भाष्यादुणादिष्वव्युत्पत्तिपक्षस्यैव भाष्यसंमततया नात्र दोष इति नुटीति न्यासे दूषणं चिन्त्यम्। नच अयामन्तेति सूत्रारम्भाद्व्युत्पत्तिपक्षस्याप्याकरसंमततया दोष इति वाच्यम्, अयामन्तेति सूत्रस्य शाकटायनरीत्या सत्त्वादेकपक्षेण निर्वाहे पक्षान्तरेण दोषदानस्यानौचित्याच्चेति दिक् ॥ १ ॥

ननु नामीत्यस्य स्थाने नीति सूत्रमस्तु नकारे परेऽचो दीर्घ इति तदर्थः। नच तथा न्यासेऽङ्गनेत्यत्र दीर्घापत्तिरिति वाच्यम्, विनञ्भ्यामित्यत्र ञकारोच्चारणेन तद्धिते नीति दीर्घो नेति कल्पनेनादोषात्। नचैवमपि सुनोति पुनातीत्यादौ दीर्घापत्तिरिति वाच्यम, प्वादीनांचेति ह्रस्वविधानसामर्थ्येन विकरणे दीर्घो नेति सामान्यापेक्षज्ञापनेनादोषात्। नच सिनो ग्रास इत्यत्र दीर्घापत्तिरिति वाच्यम्, दुग्वोदीर्घश्चेति दीर्घविधानसामर्थ्येन कृति दीर्घो नेति कल्पनाद्दीर्घे नत्वस्यसिद्धत्वात्, सुपिचेत्यनन्तरं नीति न्यस्य अजन्ताङ्गस्य दीर्घः स्यान्नकारादौ सुपि परे इत्यर्थेन नशब्दे सुप्त्वाभावाच्चादोषादिति चेन्न।

हरिणा भानुना इत्यत्र दीर्घापत्तेः। नचाङि नुगस्त्रियामितिन्यासेन नुकोऽङ्गावयवत्वाभावान्न दोष इति वाच्यम्, अमुनेत्यस्यासिद्ध्या-

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

पत्त्या नमुने इत्यस्य वैयर्थ्यापत्तेः । नचाकारस्योच्चारणार्थतया नकारे कर्तव्ये मुत्वस्यासिद्धत्वन्नेत्यर्थान्न दोष इति वाच्यम्, अमुष्मै कुलायेत्यत्र नुमापत्तेः । नच नमु नुकीति न्यासान्न दोष इति वाच्यम्, एवमपि रम्यविणेत्यत्र विभक्तिस्थनकाराभावेन णत्वानापत्तेः। नच प्रातिपदिकान्तत्वादेव तत्सिद्धिरिति वाच्यम्, गर्गभगिनीत्याद्यर्थमुत्तरपदं यत्प्रातिपदिकं तदन्तस्यैव नस्य णत्वमिति कल्पनाया नुम्ग्रहणेन स्वीकर्तव्यतया प्रकृते प्रातिपदिकान्तत्वप्रयुक्तणत्वाप्राप्तेः । नचाङ्गि नुमस्त्रियामिति न्यासान्न दोष इति वाच्यम्, प्रियास्तिस्रो यस्य तेन प्रियत्रि आ इत्यवस्थायां नुम्तिस्रादेशयोः प्राप्तौ परत्वान्नुमि निर्दिश्यमानपरिभाषया तिस्रादेशानापत्तेर्निर्दिश्यमानस्य नुमा व्यवधानात् । सिद्धान्ते तु तिस्रादेशस्य कृताकृतप्रसङ्गित्वेन नित्यत्वात्प्रथमं तिस्रादेशेनादोषः । नचैवं प्रियतिसृणे कुलायेत्यत्र नित्यत्वान्नुमि तिस्रादेशानुपपत्तिरिति वाच्यम्, शब्दान्तरस्य प्राप्नुवन्निति न्यायेन नुमोऽनित्यत्वेनादोषात् ।

नन्वनुकरणत्रिशब्दाट्टाविभक्तौ त्रिणेत्यत्र विभक्तेर्हलादित्वाभावात् षट्त्रिचतुर्भ्यो हलादिरित्यन्तोदात्ततानापत्तिः । नच तत्र हलादेः प्रतिपदोक्तस्य ग्रहणात्सिद्धान्तेऽपि स्वरोनेष्यत एवेति वाच्यम्, विभक्तिविषये प्रतिपदोक्तपरिभाषाया अप्रवृत्तेः, अन्यथा सर्वेषामित्यत्रैत्वं न स्यात् । नादेशस्य प्रतिपदोक्तत्वेन प्रतिपदोक्तपरिभाषया स्वरस्य वारयितुमशक्यत्वाच्चेति चेन्न ।

सावेकाच इति स्वरप्रवृत्त्येष्टसिद्धेरिति चेदत्रोच्यते—परमत्रिणा प्रियत्रिणेत्यत्र सावेकाच इत्यस्याप्रवृत्त्या नुम्करणे षट्त्रीतिस्वरानापत्तिरिति यथासूत्रमेव सम्यगित्यलमियता ॥ २ ॥

ननु नामीत्यस्य स्थाने वितीति सूत्रमस्तु उरिद्यस्मिन्स वित् विति अजन्ताङ्गस्य दीर्घः स्यादिति तदर्थः। देवदत्त दीव्यति, तत्र भवानित्यादौ च न दोषः देवदत्तादेः वित्प्रत्ययनिरूपिताङ्गत्वाभावात् । नच राम इत्यत्र वित्सुप्रत्ययनिरूपिताङ्गत्वसत्वाद्दीर्घापत्तिरिति वाच्यम्, प्रत्यय इति निर्देशेन सुस्थाने सेर्विधानेन पथिमथीत्याकारविधानेन सौ वितीत्यस्याप्रवृत्तिकल्पनेन चादोषात् । नचार्थवत इत्यत्र दीर्घापत्तिः । अर्थवद् अनद्यतने इत्यादिनिर्देशैर्विति ... दीर्घाभावकल्पनेनादोषात् ।

CC-0. Vasishtha Tripathi Collection. Digitized by eGangotri

यत्तु मतुपः स्थाने मतिङ्विधानान्न दोष इति तन्न, धनवानित्यादौ उगिदचामिति नुमनापत्तेः।

वस्तुतस्तु मतुपः स्थाने मतृविति करणेन तुट्सुटोः स्थाने तिट्सिटोः करणाद्धनवान् अनद्यतनं सर्वेषामित्यादौ न दोषः। नचानद्यतनित्वा, षष्ठ्या आक्रोशे इत्यलुकि सर्वेषांसुतित्वेत्यत्रोदितो वेति विकल्पेऽना-पत्तिरिति वाच्यम्, ब्राह्मणमाणववाडाद्यनित्यत्र केदाराद्यञ्चेत्यतो यञो-ऽनुवृत्यैव सिद्धे यन्करणं क्वचिदन्यतोपि यन्विधानार्थं तेन पृष्ठादुप-संख्यानं पृष्ठ्यमिति सिद्धमिति भाष्येण प्रातिपदिकाश्रितानुबन्धप्रयुक्ता-त्मनेपदादिकार्यं न भवतीति कल्पनयोदितोवेत्येतत्प्रवृत्तेस्तादृशलक्ष्ये-ष्वनिष्टत्वेनादोषात्। नच कृतवानित्यादौ दीर्घापत्तिरिति वाच्यम्, नि-ष्ठायामण्यदर्थे इति दीर्घविधानेन क्विद्धिति न दीर्घ इति कल्पनेनादोषात्। कृति एमुलादौ वृद्ध्यादिना बाधादपि न दोष इति चेन्न।

सूत्रादिनिर्देशैः सूत्राक्षरखण्डनस्यानौचित्यात् भावकर्मभिन्नार्थकनि-ष्ठायां चेद् दीर्घः क्षिय एवेति विपरीतनियमापत्तौ कर्मणि प्रत्यये कृत इत्यादौ दीर्घापत्तेश्चेत्यलमसदावेशेन ॥ ३ ॥

परे तु वितीति न्यासे नुटीति न्यासे च वित्प्रत्यत्वस्य नुडादिप्रत्य-त्वस्य च सुप्त्वव्याप्यत्वाभावेन नलोपस्यासिद्धत्वाभावात् पञ्चानामि-त्यत्र नोपधाया इति दीर्घानापत्तिः। नच तदपि मास्तु विति नुटि आ-भ्यामेव दीर्घो भविष्यतीति वाच्यम्, नृनयशब्दयोः समासे आचार-क्विन्तात्कर्तरि क्विपि अल्लोपयलोपयोः नृन् तस्य यशब्देन समासे नलोपे आचारक्विन्तात्कर्तरि क्विपि अल्लोपयलोपयोः नलोपः सुप्स्वरेति नलोपस्यासिद्धत्वात्तुकोऽभावे आमि नृ आम् इति स्थिते आस्त्वस्य कास्प्रत्ययादितिसूत्रविहितास्यपि सत्वेन सुप्त्वव्याप्यत्वाभावान्नलोपा-सिद्धत्वाभावेन नुटि नास्त्वस्य सुप्त्वव्याप्यत्वेन नलोपासिद्धात्वान्नृ चेति दीर्घाभावे नोपधाया इति दीर्घे नृणामित्येकं रूपमिदानी वित्प्रत्यत्वस्य नुडादिप्रत्ययत्वस्य च सुप्त्वव्याप्यत्वाभावेन नलोपस्यासिद्धत्वाभावा-न्नृचेति वैकल्पिकदीर्घापत्तेः। नुडागमेऽल्लोपस्य स्थानिवत्त्वं तु न पञ्चमीसमासस्यानित्यत्वात्, क्वौ लुप्तं न स्थानिवदिति निषेधाच्च। नलो-पः सुवित्यस्य सु[illegible] करणे तु दण्डिघयतेः

CC-0. Mahamahopadhyaya Pandit Gopinath Kaviraj Collection. Digitized by eGangotri

क्विपि दण्डियावित्यत्रेयङि कर्तव्ये नलोपस्यासिद्धत्वेन इयङ्नापत्तिरिति वदन्ति ॥ ४ ॥

ननु नामीत्यत्र न इति लुप्तषष्ठ्यन्तं पृथक्पदं तथा च नान्तस्याङ्गस्याचो दीर्घ आमीति सूत्रार्थः । ह्रस्वनद्यापो नुडित्यनेन नुगेव विधीयताम् । येन नाव्यवधानमिति न्यायेनैकवर्णव्यवधानं सोढव्यमिति । नच रामाणामित्यत्राल्लोपोऽन इति लोपापत्तिरिति वाच्यम्, श्वुवः पञ्चानामिति निर्देशेन, सन्निपातपरिभाषया वा तदप्रवृत्तेः । एवं च पञ्चानामित्यत्रानेनैव दीर्घे नोपधाया इदं सूत्रं न कार्यं बहुवचने झल्येदिति सूत्रे झल्ग्रहणं च न कार्यमदन्ताङ्गत्वाभावादेवैत्वाप्राप्तेः । न च झल्ग्रहणाभावे हरीणामित्यत्र नुकश्चारितार्थ्येन, रामाणामित्यत्र नुकं बाधित्वा परत्वादेत्वं स्यादिति वाच्यम्, उतो वृद्धिरित्यतो हलोऽनुवर्तनेनादोषात् । वारीणामित्यत्र नुम्यपि दीर्घो भविष्यतीति तदर्थं नुमचिरेतिवार्तिके नुम्ग्रहणं च न कार्यम् । नच षण्णामित्यत्र नुटि प्रत्यये भाषायां नित्यमिति नित्यमनुनासिको भवति इदानीं न स्यादिति वाच्यम्, षट्चतुर्भ्यश्चेति सूत्रेण णुट एव विधानेनादोषात् । नचैवं पञ्चानामित्यत्रापि सणत्वप्रयोगश्रवणापत्तिरिति वाच्यम्, चतुर्शब्दसाहचर्येण षष्शब्दस्यैव तत्र ग्रहणेनादोषात् । एवं च नपदान्तादिति सूत्रे नाम्ग्रहणं च मास्तु प्रत्ययावयवणकाररूपानुनासिके डकारस्यानुनासिकणकारेणैवेष्टसिद्धेः । नचैवं चर्मणामित्यत्र दीर्घापत्तिरिति वाच्यम्, नामीत्यनन्तरं षष इत्यपूर्वं सूत्रं क्रियते नान्तस्य षषो दीर्घ इति तदर्थः । इदं च सूत्रं नियमार्थम्—आम्विभक्तेः प्राङ्नान्तस्याचो दीर्घश्चेत्तर्हि षट्संज्ञकानामेवेति दोषाभावादिति चेन्न ।

षट्त्रिचतुर्भ्यो हलादिरिति तिसृणामित्यादौ स्वरानापत्तेरेव दोषात् ।

नच तत्र हलादिग्रहणं मास्तु इत्येतावतैवादोषः । नच जश्शसोर्दृषः षट्त्रीत्यनन्तरमामीति पठित्वा अजादेश्चेदाम एवेति नियमेनादोषादिति वाच्यम,

तावतापि नामन्यतरस्यामिति सूत्रे विशिष्टरूपोपादानसत्त्वेन अर्थवद्ग्रहणपरिभाषया अर्थवतो नामो ग्रहणेन चेतन्ती सुमतीनामित्यत्र स्वरानापत्तेः । नचेदानीमर्थवतो नामो ऽसम्भवेन नार्थवत्परिभाषाप्रवृत्ति-

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

रिति वाच्यम्, पञ्चारत्नीनामित्यत्रेगन्तत्वाभावेन इगन्तेति स्वरानापत्तेः।

वस्तुतस्तु नुकः समुदायभक्तत्वेन नोत्तरपदे इगन्तत्वविघात इति नायं दोषः किन्त्वनेकक्लिष्टकल्पनायां गौरवमेवैतन्न्यासत्यागे बीजमिति दिक् ॥ ५ ॥

ननु नडीत्येव सूत्रमस्तु नुड्विधायकैर्नट एव विधीयतामिति चेन्न। षष्ठ्या आक्रोशे इत्यलुकि आचारक्विवन्तात्क्वाप्रत्यये चौराणांसुतित्वेत्यादावुदितोवेति वैकल्पिकेडागमानापत्तेः ॥ ६ ॥

ननु नामीति सूत्रस्याऽङ्गाधिकारे पाठाभावेऽप्यचो दीर्घः स्यान्नामीत्यर्थेन सिद्धेऽङ्गाधिकारे पाठः किमर्थः। नच तथासति चर्मणामित्यादौ दीर्घापत्तिरिति वाच्यम्, अर्थवद्ग्रहणपरिभाषयाऽस्य नामोऽनर्थकत्वेनाग्रहणेनादोषात्। नच नामयतीति नाम् चर्मणो नाम् चर्मनाम् इत्यत्र दीर्घापत्तिरिति वाच्यम्, प्रत्ययाप्रत्यययोः प्रत्ययस्यैव ग्रहणमिति परिभाषयाऽस्याग्रहणेनादोषत्वादिति चेन्न।

अतो भिस् सूत्रेऽङ्गग्रहणासम्बन्धे ब्राह्मणभिस्सेत्यादौ भिस ऐसापत्तिप्रदर्शनपरभाष्येणास्मिन् प्रकरणेऽर्थवत्परिभाषायाः प्रत्ययाप्रत्ययोरिति परिभाषायाश्चाप्रवृत्तिकल्पनेन चर्मणामित्यत्र दीर्घापत्तेर्दोषत्वात्। नच प्रत्ययग्रहणे यस्मादितिपरिभाषया तदाद्युपस्थितौ अजन्ततदादेर्दीर्घो नामीत्यर्थाच्चर्मणामित्यादौ न दोष इति वाच्यम्, प्रकृतेऽर्थवत्परिभाषायाः प्रत्यययोरितिपरिभाषायाश्चाप्रवृत्त्या नामः प्रत्ययस्यैव ग्रहणमिति नियमाभावेन प्रत्ययग्रहणपरिभाषायाः प्रत्ययमात्रग्रहणे एव प्रवृत्त्याऽदोषात्। नच नोपधाया इति सूत्रबलात्सुप एव नामो ग्रहणमन्यथा पञ्चानामित्यत्र नलोपे नोपधाया सुब्विधित्वाभावेन नलोपः सुप्स्वरेत्यस्याप्रवृत्त्या नान्तोपधाया अभावात्तदप्रवृत्त्या नोपधाया इत्यस्य वैयर्थ्यापत्तिरिति वाच्यम्, तत्राप्यङ्गस्य सम्बन्धाभावेन नमतेः क्विप्यनुनासिकस्य क्वीति दीर्घे हे चर्मन् नामिति वाक्ये दीर्घार्थं नोपधाया इत्यस्य चरितार्थ्येन तद्बलेन नामीति सूत्रे सुप एव नामो ग्रहणमित्यस्य वक्तुमशक्यत्वात्।

नच नामीत्यस्य स्थाने आमीतिकरणे चर्मणामित्यत्र दीर्घापत्तिर्भाष्ये उक्ता यदि नकारोच्चारणाभावे चर्मणामित्यत्र दीर्घापत्तिस्तर्हि अङ्गाधिकारे पाठः किमर्थं, यद्यङ्गाधिकारे पाठाभावे दीर्घस्तर्हि नकारोच्चारणं

CC-0. Vasishtha Tripathi Collection. Digitized by eGangotri

किमर्थमिति नकारोच्चारणाङ्गाधिकारपाठसामर्थ्येनात्र दीर्घाभावसिद्धावङ्गाधिकारे पाठो व्यर्थ इति वाच्यम् । चर्मणो नाम् चर्मनामित्यत्रैव दीर्घापत्तेश्शेखरकृत्तात्पर्यविषयत्वात् चर्मणामिति पाठस्तु लेखकप्रमादादिति बोध्यम् ॥ ७ ॥

ननु नामीति सूत्रेऽचपरिभाषानुपस्थितौ को दोष इति चेच्छृणु चर्मणामित्यत्रालोन्त्यपरिभाषया रेफस्यैव दीर्घापत्तिरिति दिक् ॥ ८ ॥

ननु नामीति सूत्रस्थाने आमीत्येव सूत्रमस्तु ।

नच रामाणामित्यत्र नित्यत्वात्प्रथमं दीर्घे ह्रस्वान्तत्वाभावान्नुड् न स्यात् । नच येन नाप्राप्तिन्यायेन नुटो दीर्घापवादतयाऽदोष इति वाच्यम्, आमीत्यस्यापि येननाप्राप्तिन्यायेननुटोऽपवादत्वेन परस्परमपवाद्यापवादकभावसत्वेन नित्यत्वस्यैव बलवत्वनियामकतया दोषादिति ।

ह्रस्वग्रहणसामर्थ्येन भूतपूर्वह्रस्वान्तत्वमादाय नुट्सिद्धेः । नच दीर्घे जातेऽपि पञ्चमीसमासेन स्थानिवत्वान्नुट् स्यादेवेति उभयोर्नित्यतया परत्वान्नुटि ततो दीर्घे इष्टसिद्धया भूतपूर्वगत्याश्रयणं व्यर्थमिति वाच्यम्, पूर्वस्मादव्यवहितपरस्यैव विधौ स्थानिवत्त्वप्रवृत्तेः प्रकृते भूतपूर्वगत्याश्रयणस्यावश्यकत्वात् । एवं च हे गौरित्याद्यर्थं पञ्चमीसमासानित्यत्वाश्रयणमपि न कार्यमिति ध्येयम् । नच नृचेति दीर्घविकल्पे दीर्घाभावपक्षे नृणामित्यर्थं ह्रस्वग्रहणं चरितार्थमिति वाच्यम्, ह्रस्वग्रहणस्य नृशब्दमात्रविषयकत्वे "नृनद्याप" इत्येव सिद्धे ह्रस्वग्रहणसामर्थ्यस्य सूपपादत्वात् । न च नृशब्दादाचारक्विबन्तात्कर्तरि क्विपि नृतामित्यत्र यदागमपरिभाषया नृनद्याप इति न्यासे दीर्घापत्तिः ह्रस्वग्रहणसत्वे तु नेति वाच्यम्, गोतो णिदितिवद् नृनद्याप इति न्यासे तात्पर्यात् । नद्याप्साहचर्येण नृशब्दस्याजन्तस्यैव ग्रहणान्न दोष इति समाधानं तु न युक्तम् । नृशब्दस्य ऋशब्देन समासे नृशब्दे नुडापत्तितादवस्थ्यात् । नच तिसृणामित्यत्र "नतिसृचतसृ" इति दीर्घस्य निषिद्धतया नुडर्थं ह्रस्वग्रहणमिति वाच्यम्, षट्चतुर्भ्यश्चेत्यत्र त्रेरित्यनुवृत्त्या नुट्सिद्ध्या ह्रस्वग्रहणवैयर्थ्यस्य तादवस्थ्यात् । नच एतीति इत् त्रयाणामित् त्रीत् तस्मादामि त्रीतामित्यत्र, त्रिशब्दादाचारक्विबन्तात्कर्तरि क्विपि तुकि त्रितामित्यत्र अर्थवदर्थवत्परिभाषया यदागमपरिभाषया वा नुडापत्तिः

CC-0. Vasishtha Tripathi Collection. Digitized by eGangotri

ह्रस्वग्रहणसत्वे तु न। किञ्च ह्रस्वग्रहणसत्वे त्रिआम् इति स्थिते नुटं बाधित्वा प्रतिपदोक्तत्वात्त्रयादेशे आमीति दीर्घे त्रयामिति भवति त्रिशब्दानुवृत्तावुभयोः प्रति पदोक्तत्वाविशेषात्त्रयादेशे दीर्घे नुटि त्रयाणामिति स्यादिति फलभेद इति वाच्यम्, षट्चतुर्साहचर्येणाकारान्ततकारान्तभिन्नस्यैव त्रिशब्दस्य ग्रहणेनाऽदोषात्।

अन्ये तु नृत्रिशब्दयोः फलभेदवारणाय स्त्रियां चतुरः, षट्नद्यापः, नुर्वा, छन्दसि च, इति न्यासं कृत्वा द्वितीययोगे चतुर इत्यस्यानुवृत्ति भिन्नलिङ्गर्थां प्रथमयोगे च त्रिशब्दानुवृत्ति तक्रन्यायेन दीर्घबाधनार्थां कृत्वा नुटा दीर्घे बाधिते न तिसृचतसृ इति सूत्रमपि खण्डयन्तः तृतीययोगं नृणामित्यत्र नुड्विकल्पार्थं चतुर्थयोगं पूर्वसूत्राद्वेत्यनुवर्त्य धातृशब्दान्नुटो विकल्पार्थं वदन्ति।

वस्तुतस्त्वेतन्न्यासेऽपि ऋशब्देन नृशब्दस्य समासे दीर्घे नृणां ना-मिति ह्रस्वग्रहणसत्वे नामिति फलभेदतादवस्थ्यमतः भाष्योक्तस्य नृनद्याप इति न्यासस्य ऋन्नद्याप इति न्यासे एव तात्पर्यम्। नच ऋन्नद्याप इति न्यासे भाष्यतात्पर्यकल्पने अग्रे तिसृणामित्येतत्सिद्ध्ये षट्चतुर्भ्यश्चेति सूत्रे त्रिशब्दानुवृत्तिकथनमसङ्गतं स्यादिति वाच्यम्, भाष्ये नामीत्यत्र आमीत्युक्त्वा तिसृणामित्यस्य त्रेरनुवृत्त्या छन्दस्युभयथेत्यत्र छान्दसत्वेन निर्वाहे नृचेत्यत्र नह्येकमुदाहरणमित्युक्तम्। तस्य विशेषेणोक्तसकलदोषापाकरणाय ऋन्नद्याप इत्यत्र तात्पर्यकल्पेन बाधकाभावात्। एतेन प्रियचतसृणामित्यत्र नुडर्थं ह्रस्वग्रहणं षट्चतुर्भ्यश्चेति नुटो गौणेऽप्रवृत्तेरित्याशङ्क्य बहुवचननिर्देशस्य तिसृभ्यो जस इति वत्प्रयोगभेदाभिप्रायकतया तस्य गौणेऽप्रवृत्तावमानत्वेन गौणेऽपि नुट इष्टत्वमिति क्लेशोऽपि विफलः, ऋन्नद्याप इति न्यासेनैव सिद्धेः। नच रामाणामित्यत्र नुडर्थं भूतपूर्वह्रस्वान्तस्य ह्रस्वपदेन ग्रहणे पदां दत्तामित्यत्रापि नुडापत्तिरिति वाच्यम्, ह्रस्वत्वं नाम मात्राकालिकात्वं तत्र विशेषणीभूतमात्राकालिकत्वांशे एव भूतपूर्वगत्याश्रयणं नतु विशेष्यीभूताच्त्वांशेऽपीत्यदोषात्। 'पदादयः प्रकृत्यन्तराणीति पक्षे शङ्काया असम्भवाच्च आमुत्पत्तिकालिकह्रस्वान्तान्नुडित्यर्थं कृत्वा शस्प्रभृतिष्विति विषयसप्तमीमाश्रित्य समाधातु शक्यत्वाच्चेति चेन्न।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

आमीति न्यासे तस्यैव नोपधाया इत्यत्र संबन्धे नान्तस्योपधाया दीर्घः स्यादामीत्यर्थं चर्मणामित्यत्र दीर्घापत्तेः । नचैवं वारीणामित्यस्य नुम्यपि नोपधाया इति दीर्घेण सिद्धौ नुमचिरेति वार्तिके नुमग्रहणं व्यर्थमिति तत्सामर्थ्येन सागम आमेव नोपधाया इत्यत्र ग्रहीष्यत इति चर्मणामित्यत्र न दोष इति वाच्यम्, वारीणामित्यत्र नुमि इन्हन्पूषार्यम्णां शाविति नियमेन दीर्घानापत्तेः । अनिनस्मन्निति परिभाषया ऽनर्थकस्यापि इन इन्हन्नित्यत्र ग्रहणसंभवात् । नुम्ग्रहणसामर्थ्येन आमि परे नान्तस्येको दीर्घश्चेत्तर्हि नुमानान्तस्यैवेति नियमस्यापि सम्भवेन दण्डिनामित्यत्र इन्हन्नित्यनेन दीर्घवारणसम्भवात्प्रकृतनियमस्य न किमपि फलमिति पूर्वनियम एव युक्त इति चर्मणामित्यत्र न दूषणमिति वाच्यम्, नामन्यतरस्यामिति विकल्पोदात्तार्थं नुम्ग्रहणस्यावश्यकत्वेन तेन किञ्चित्कल्पयितुमशक्यतया चर्मणामित्यत्र दीर्घापत्तेर्दुर्वारत्वात् ।

वस्तुतस्तु अङ्गाधिकारे नामि नोपधाया इत्यनयोः पाठस्य चर्मणामित्यत्र दीर्घाभाव एव प्रयोजनं यदि नकारग्रहणाभावे दीर्घः स्यात्तर्हि अङ्गाधिकारे पाठो व्यर्थः स्यादतः षट्संज्ञकातिरिक्तनान्तस्य न दीर्घ इति कल्पनया चर्मणामित्यत्र दीर्घाभावे सिद्धे नामीत्यस्य स्थाने आमीति करणे न किमपिबाधकमिति ध्येयम् ।

इणकोः ४६

नन्विदं सूत्रं किमर्थम् । आदेशस्य प्रत्ययावयवस्य च अपदान्तस्य सस्य मूर्धन्यादेशः स्यादित्यर्थकेन आदेशप्रत्यययोरित्यनेन रामेष्वित्यादौ षत्वसिद्धेः । नच रामस्येत्यत्र षत्वापत्तिरिति वाच्यम्, षकार एवोच्चारयितव्ये स्यादेशे सकारोच्चारणेन षत्वबाधात् । नच षः प्रत्ययस्येतीत्वापत्तिरिति वाच्यम्, षकारोच्चारणसामर्थ्येन तद्बाधात् । इनात्स्या इति न्यासे ष्टुत्वं तु न तोः षीति निषेधात् । न च सकारोच्चारणसामर्थ्येन षत्वबाधकल्पने अमुष्येत्यत्र षत्वानापत्तिरिति वाच्यम्, अमुष्यायणामुष्यपुत्रिकामुष्यकुलिका चेति वक्तव्यमिति वार्तिकनिर्देशेनैव षत्वसिद्धेः । नच इणकोरित्यस्याभावे हेराघव स्येत्यत्र षत्वापत्तिरिति वाच्यम्, सात्पदाद्योरितितन्निषेधात् । नचाश्वस्यतीत्यत्र षत्वापत्तिः, सुकः प्रत्ययानवयवत्वेनादोषात् । नच रमुधातोः सर्वधातुभ्योऽसुन् इत्यसुनि तं यातीति

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

रमस्येत्यत्र षत्वापत्तिरिति वाच्यम्, सकारस्य पदान्तत्वेन षत्वाप्राप्ते-रिति चेन्न।

जारस्य अट् जारस्याट् "षष्ठ्या आक्रोशे" इत्यलुकि ततो णिचि टि-लोपे क्विपि णिलोपे यकारलोपे जारसूशब्दात् जाराः जारसावित्यादि रूपं स्यादेशकरणे तु जश्त्वे जारट् जारषावित्यादि रूपं स्यादिति स्यादेशे सकारोच्चारणसामर्थ्येन न षत्वमित्यस्य वक्तुमशक्यतया रामस्येत्यत्र-षत्वापत्तेर्दुर्वारत्वात्। एवमिणकोरित्यस्याभावे विश्वपासु इत्यत्रापि षत्वापत्तिर्दूषणम्। न च षुविति वक्तव्ये सकारोच्चारणान्न षत्वमिति वाच्यम्, लिटत्सु इत्यादौ धुडर्थं सकारोच्चारणस्यावश्यकत्वात्। किञ्च रमते इति रमस्तमिच्छति रमस्यति इत्यत्र षत्वापत्तिः, अन्तर्वर्त्तिविभ-क्त्या पदत्वं तु न, नः क्ये इति नियमादित्यलम्।

## आदेशप्रत्यययोः ४७

नन्विदं सूत्रं मास्तु इणकोरिति सूत्रमेव षत्वविधायकमस्तु शासिवसि-घसीनां चेति सूत्रं नियमार्थं 'सान्तस्य धातोः सस्य षत्वं चेत्तर्हि शा-सिवसिघसीनामेवेति' सुपीः सुपिसावित्यादौ षत्वाप्राप्तेरिति चेन्न।

निष्ठायामनिटां धातूनां सस्य षत्वं चेत्तर्हि शास्यादीनामेवेति विप-रीतनियमस्यापि सम्भवेन सुपिसावित्यादेर्नियमानाक्रान्ततया षत्वापत्तेः, अन्तिकशब्दाण्णिचि साधादेशेः सिसाधयिषतीत्यादौ षत्वापत्तेश्च। मम तु आदेशरूपसकाराभावान्न षत्वमित्यलम्।

## जराया जरसन्यतरस्याम् ४८

नन्वर्धमात्रालाघवाय असुङेव विधीयतामिति चेन्न।

असुङि ङकारोकारयोरित्संज्ञालोपयोः अनेकाल्शित्सर्वस्येति प्रबा-ध्य अलोऽन्त्यस्य तं प्रबाध्य ङिच्चेत्यस्यचानुसन्धानेऽत्यन्तं ज्ञानगौरवे-णासुङः कर्तुमशक्यत्वादिति शेखरः।

ननु जराशब्दात् "तत्करोति तदाचष्टे" इति णिचि टिलोपे क्विपि णिलोपे जर् इति तस्यैकदेशविकृतन्यायेन, आनुमानिकस्थान्यादेशभा-वमाश्रित्य स्थानिवत्त्वेन वा जराशब्दत्वे जरसादेशे जरसावित्यादि रूपम्, असुङादेशे जसावित्यादीति लक्ष्यदोषस्यापि सत्वेन ज्ञानगौरवप्रदर्शनं शे-

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

खरकृतोऽसङ्गतम्। नच णिलोपस्य स्थानिवत्त्वाद्विभक्तिपरत्वाभावान्न तन्नादेशप्राप्तिरिति वाच्यम्, क्वौलुप्तं न स्थानिवदिति निषेधेन व्यवधानाभावात्। यद्यपि क्वौलुप्तमिति न सार्वत्रिकं तथापि प्रकृते तदाश्रयणं जरसितिगुरुनिर्देशादिति चेन्न।

आरगुदीचामिति सूत्रे रका सिद्धे आकारोच्चारणमन्यतोविधानार्थं तेन जाडारः इत्यादि सिद्ध्यतीति भाष्येण आवन्तप्रकृतिकणिचोऽनभिधानम्, अन्यथा गोधाशब्दाण्णिचि टिलोपे क्वौ णिलोपे गोध इति तत्र रकि गौध्र इति आरकि गौधार इति फलभेदस्य स्पष्टतया तद्भाष्यमसंगतं स्यात् एवञ्च जर् इति रूपस्यैवासिद्ध्याऽदोषात्। नच जराशब्दस्य ऋशब्देन समासे गुणे जरर् तत्र पूर्वान्तवद्भावेन जराशब्दत्वे असुङि दीर्घे जरासाविति जरसादेशे जरसाविति लक्ष्यदोषसत्वादसंगतिरेव शेखरस्येति वाच्यम्, अतो गुण इति पूर्वरूपेण असुङादेशेऽपि जरसाविति रूपसिद्धेः। नचाकारोच्चारणसामर्थ्यात्पररूपं नेति वाच्यम्, अकारोच्चारणाभावे जराशब्दे जरसाविति रूपासिद्धेः।

केचित्तु जरामततीतिजरात् ततो णिचि टिलोपे क्विपि णिलोपे जर् इति रूपं तत्रासुङ्जरसोः फलभेदादसुङ् न्यासः कर्तुमशक्यः अत्र टिलोपस्य न स्थानिवत्त्वमज्झलादेशत्वात् णिलोपस्यापि न क्वौ लुप्तमितिनिषेधादिति बोध्यम्।

परेतु जरामिति द्वितीयान्तस्य नित्यवीप्सयोरिति द्विर्वचने कृतद्विर्वचनस्य तस्य अत्यादयः क्रान्ताद्यर्थेद्वितीयया इति अतिशब्देन समासे अतिजरा जरा तस्मादौविभक्तौ असुङि अतिजराजरसाविति रूपापत्तिः, जरसादेशकरणे तु जराजरेत्यस्यनिर्दिश्यमानत्वेन जरसादेशे अतिजरसाविति लक्ष्यदोषस्यापि सत्वेन प्रतिपत्तिगौरवप्रदर्शनं शेखरकृतोऽनुचितम्। निर्दिश्यमानत्वं च षष्ठीप्रकृतिविशिष्टत्वं वै० च स्वजन्योपस्थितीयविषयताश्रयत्व, स्वप्रयोज्यशाब्दबोधीयविषयताविशिष्टवर्णाघटितत्व, स्वजन्योपस्थितीयविषयताश्रयविशिष्टवर्णाघटितत्वैतत्त्रितयसम्बन्धेन, द्वितीयसम्बन्धघटकवैशिष्ट्यं च स्वानाश्रयत्व, स्वसमभिव्याहृतत्वोभयसम्बन्धेन, तृतीयसम्बन्धघटकवैशिष्ट्यं च स्वसमभिव्याहृतत्व स्वनिष्ठाद्देश्यतानिरूपितावयवत्वावच्छिन्नविधेयताश्रय-

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

त्वोभयसम्बन्धेन, प्रकृते स्थानेद्विर्वचनरूपपदद्वित्वे स्थानिवत्त्वाद् जराजरासमुदाये जराशब्दत्वातिदेशात् जराशब्दजन्योपस्थितीयविषयताश्रयत्वस्य, स्वप्रयोज्यशाब्दबोधीयविषयताविशिष्टोदासीनवर्णाघटितत्वस्य, स्वजन्योपस्थितीयविषयताश्रयविशिष्टोदासीनवर्णाघटितत्वस्य च सत्वेन निर्दिश्यमानत्वमिति वदन्ति ।

## सुडनपुंसकस्य ४९

अत्र प्रत्यासत्तिन्यायादौटष्टकारसामर्थ्याच्च औटष्टकारेण सुट् प्रत्याहारः । सुडागमस्य तु न ग्रहणम् प्रत्ययाप्रत्यययोः प्रत्ययस्यैव ग्रहणमिति परिभाषणात् ।

नन्वत्र सुडित्येव सूत्रमस्तु सुट् सर्वनामस्थानसंज्ञकं भवतु इति तदर्थः । नच अनपुंसकस्येत्यस्याभावे ज्ञानमित्यादौ सर्वनामस्थानसंज्ञायां नपुंसकस्य झलच इति नुमापत्तिरिति वाच्यम्, अदन्तसंनिपातेन जायमानस्यामस्तदविघातकत्वेन नुमोऽप्राप्तेः । नच प्रियक्रोष्टुनी इत्यत्र सर्वनामस्थानत्वात्तृज्वद्भावे अनिष्टापत्तिरिति वाच्यम्, "वृद्ध्यौत्वतृज्वद्भावगुणेभ्योनुम् पूर्वविप्रतिषेधेन" इति वार्तिकेन तृज्वद्भावं बाधित्वा नुमि दोषाभावात् । न च प्रियतिसृणी इत्यत्र ऋतो ङि सर्वनामस्थानयोरिति गुणापत्तिरिति वाच्यम्, वृद्ध्यौत्वतृज्वद्भावेतिवार्तिकेन गुणं बाधित्वा पूर्वं नुम्यदोषात् । नच वारिणी इत्यादौ सर्वनामस्थाने चासम्बुद्धाविति दीर्घापत्तिरिति वाच्यम्, सर्वनामस्थाने चाशीसम्बुद्धयोरितिन्यासेनादोषात् । नचैवमपि कर्तृणी इत्यत्र अप्तृन्निति दीर्घापत्तिरिति वाच्यम्, अशीसम्बुद्ध्योरित्यस्यानुवृत्त्याऽदोषात् । न च ज्ञाने इत्यत्र नपुंसकस्य झलच इति नुमापत्तिः, गोची इत्यत्र अञ्चेश्छन्दस्यसर्वनामस्थानमित्यस्याप्रवृत्त्यापत्तिश्चेति वाच्यम्, एवं तर्हि सुडनपुंसकस्येत्यस्य स्थाने सुडशीतिन्यासेनादोषात् । न चैवं न्यासे 'जसः शी' इतिसूत्रविहितश्यादेशस्यापि सर्वनामस्थानत्वाभावात् इमे इत्यत्र ऊडिदमितिस्वरानापत्तिरिति वाच्यम्, ऊडिदमित्यस्याप्रवृत्तावपि एकादेश उदात्तेनोदात्त इत्येव स्वरसिद्धेः । नच इमे इत्यत्र यचिभमिति भत्वे यस्येतिचेति लोपापत्तिरिति वाच्यम्, ओङ इत्यनुवृत्त्या अस्यां प्रतिषेधो वाच्य

CC-0. Vasishtha Tripathi Collection. Digitized by eGangotri

इति वार्तिकेनैव लोपवारणात् नदीसंज्ञकेकारे लोप इत्यर्थमङ्गीकृत्य तत्प्रत्याख्यानेऽदोषाच्चेत्यलम् ।

केचित्तु सुडित्येव सूत्रकरणे साम्नी लोम्नी इत्यादौ श्याः सर्वनामस्थानत्वेन तस्मिन्भत्वाभावादल्लोपनापत्तिरित्याहुः ।

तन्न; विभाषा ङिश्योरित्यत्र शीग्रहणेन भत्वाभावेऽप्यल्लोपसिद्धेः इदानीं श्यां भत्वाप्राप्त्या ज्ञाने इत्यादौ यस्येतिचेति लोपाप्राप्त्या औङः श्यामिति वार्तिकारम्भेण श्यामपि भत्वमित्यर्थस्य ज्ञापनेनादोषाच्च । एतेन श्यां भत्वाभावेन सुपथी इत्यादौ 'भस्य टेर्लोप' इति टिलोपानापत्तिरित्यपास्तम् ।

यत्तु ज्ञाने इत्यत्र नपुंसकस्य झलच इति नुममाशङ्क्य नपुंसके चेत्सर्वनामस्थानसंज्ञा तर्हि शावेवेति शि सर्वनामस्थानमित्यस्य नियमार्थत्वान्न दोष इति ।

तन्न, शस्स्थानिकशेः सर्वनामस्थानत्वाय तस्यावश्यकत्वेन नियमार्थत्वासम्भवात् । ज्ञाने इत्यत्र नुम्वारणं तु सुडशी इति न्यासादेवेति गृहाण ।

नचातिजरसं श्येत्यादौ नुमापत्तिरिति वाच्यम्, 'नपुंसकस्य झलचः शौ' इति न्यासेनादोषात् । नच गौरवम्, शिसर्वनामस्थानमिति सूत्राकरणेन लाघवात् । न च शसि सुपन्थानीति न स्यात् 'भस्य टेर्लोप' इति टिलोपादिति वाच्यम्, टेर्लोपे कृते थोन्थ इत्यत्र थोन्था इति न्यासेनादोषात् । न च शसि ज्ञानानीत्यादौ दीर्घानापत्तिरिति वाच्यम्, सर्वनामस्थानश्योरसम्बुद्धावितिन्यासेनादोषात् । प्रत्यञ्चीत्यादौ नुम् तु उगिदचां शिसर्वनामस्थानयोरधाताविति न्यासादिति गृहाण । एवं च नपुंसकस्य झलच इत्यत्र शिग्रहणमपि न कर्तव्यमनुवृत्त्यैव सिद्धेः ।

केचित्तु बहुपुमित्यत्रासुङमतिजरसमित्यत्र नुमं चाशङ्क्य ज्ञाने इत्यत्र लोपाप्राप्त्या औङः श्यामिति वार्तिकारम्भेण नपुंसके सुटोन सर्वनामस्थानसंज्ञेतिज्ञापनान्न दोष इति वदन्ति ।

यत्तु धनमित्यादौ नान्तलक्षणदीर्घापत्तिः परादिवद्भावेन सर्वनामस्थानपरत्वादिति । तन्न, एकादेशस्य स्थानिवत्त्वेन नान्ताङ्गत्वाभावात् ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

दीर्घे स्थानिवत्त्वनिषेधस्तु न स्वरदीर्घयलोपेषु लोपाजादेश एव न स्थानिवदित्युक्तेः।

## अल्लोपोऽनः ५०

नन्वत्र अनो नश् इत्येव सूत्रमस्तु शित्त्वात्सर्वादेशत्वेन अनो नादेशसिद्धेः, अनो न इत्येव वा सूत्रमस्तु निर्दिश्यमानपरिभाषयैवेष्टसिद्धेः। नचालोन्त्यपरिभाषयाऽन्त्यादेशापत्तिः नानर्थकेऽलोऽन्त्यविधिरनभ्यासविकार इति परिभाषया तन्निषेधात्। नकारोत्तरमकार उच्चारणार्थः। नच यथान्यासे प्रियाष्णः इत्यत्र ष्टुत्वं न भवत्यल्लोपस्य स्थानिवत्त्वादिदानीं तु स्यादिति नादेशस्याज्झलादेशत्वेन स्थानिवत्त्वाप्राप्तेरिति वाच्यम्, नवीनमते प्रियाष्ण इत्यादीनामनभिधानेन, बहिरङ्गपरिभाषया नादेशस्यासिद्धत्वेन च ष्टुत्वाप्राप्त्याऽदोषादिति चेत्—

न, प्राणितीति प्राण् ततः शसि प्राण इत्यत्र अनितेरिति णत्वस्यासिद्धत्वेनानो नादेशापत्तेः, सिद्धान्ते तु अत इति तपरकरणान्न लोप इत्यदोषात्। नच वार्णादाङ्गमिति परिभाषया दीर्घात्प्रागल्लोपप्राप्त्या ह्रस्वाकार एवेति वाच्यम्, अनुनासिकस्य क्वीति दीर्घेण सवर्णदीर्घात्प्रागपि आन एव सत्त्वात् ततश्च एकदेशविकृतन्यायेन अन्त्वात् दोषः, सिद्धान्ते तु तपरकरणान्न दोष इत्याशयात् तस्माद्यथान्यासमेव रम्यम्।

## नलोपः प्रातिपदिकान्तस्य ५१

अत्र 'पदस्य' 'पदात्' इत्यधिकारात्पदस्येत्यनुवर्तते, न इति, प्रातिपदिकेति, च लुप्तषष्ठीकम् तद् द्वयमपि पदस्य विशेषणम्। एवञ्च नान्तस्य प्रातिपदिकस्य पदस्य लोपः स्यादिति तदर्थः। एवञ्च अन्तग्रहणं शक्यमकर्तुम् अलोन्त्यपरिभाषयैवान्त्यस्य लोपसिद्धेः

यत्तु अन्त्यस्येत्युभाभ्यां सम्बध्यते प्रातिपदिकान्तस्य सतः पदान्तस्य नस्य लोप इति तेन बहुदण्डिकेत्यादौ नलोपसिद्धिः, प्रातिपदिकसंज्ञकं यत्पदं तदन्तस्य लोप इत्यर्थे, नान्तस्य पदस्य योप इत्यर्थे वा न स्यात्, यद्धि प्रातिपदिकं दण्डिन्निति तत्पदं न, कब्निरूपितपदत्वस्य बहुदण्डिन्निति समुदायनिष्ठत्वात् तस्य चाप्रातिपदिकत्वात् अन्तवर्त्तिविभक्तिनिमित्तपदत्वस्य दण्डिन्वृत्तित्वसम्भवेऽपि उत्तरपदत्वे चेति प्रत्ययलक्षणनिषेधनासम्भवात्। मम तु प्रातिपदिकं दण्डिन्निति तदन्तं

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

पदं बहुदण्डिन्निति तदन्तत्वं च नकारस्येति नलोपसिद्धिरित्यन्तग्रहणमावश्यकमिति ।

तन्न, अन्तस्येत्यस्योभाभ्यां सम्बन्धकरणे गौरवात् व्यधिकरणषष्ठीद्वयापत्तेः, यजेरन्पचेरानावित्यत्र नलोपापत्तेश्च । नचागत्या तादृशक्लेशसहनमिति वाच्यम्, प्रातिपदिकस्य पदेऽन्वयेन तदन्तविधौ प्रातिपदिकान्तं यत्पदं तदन्तस्य नस्य लोप इत्यर्थेनेष्टसिद्धेः । तथा हि–प्रातिपदिकं दण्डिन्निति तदन्तं पदं बहुदन्निति तदन्तस्य नस्य लोप इति ।

वस्तुतस्तु प्रातिपदिकसंज्ञकं यत्पदं तदन्तस्य लोप इति मूलोक्तार्थेपि न दोषः, दण्डिन्नित्यस्य प्रातिपदिकत्वात् अन्तर्वर्त्तिविभक्त्यापदत्वाच्च उत्तरपदत्वेचेति निषेधस्तु न उत्तरपदत्वात् । तथाहि–वृत्तिविशिष्टत्वमुत्तरपदत्वं वै० स्वघटकत्व स्वाविशिष्टपदनिरूपिताव्यवहितपूर्वत्वाभाववत्त्वोभयसम्बन्धेन अत्र वै० स्वनिष्ठोद्देश्यतानिरूपितावयवत्वानवच्छिन्नविधेयताश्रयभिन्नत्व स्वनिष्ठोद्देश्यतानिरूपितावयवत्वावच्छिन्नाजादिप्रत्ययनिष्ठविधेयताश्रयभिन्नत्वोभयसम्बन्धेन पदं च शक्तं ग्राह्यमिति प्रकृते कपि समासरूपवृत्तिनिष्ठोद्देश्यतानिरूपितावयवत्वानवच्छिन्नविधेयताश्रयभिन्नत्वस्य, तादृशोद्देश्यतानिरूपितावयवत्वावच्छिन्नविधेयताश्रयभिन्नत्वस्य च सत्त्वेन स्वविशिष्टं पदं कविति तन्निरूपिताव्यवहितपूर्वत्वमेव बहुदण्डिनि नतु पूर्वत्वाभाववत्त्वमिति उत्तरपदत्वाभाव इति ध्येयम् ।

केचित्तु पदविशिष्टस्य नस्य लोप इतिसूत्रार्थः । वै० च स्वघटकत्व स्वघटकप्रातिपदिकघटकत्व स्वानिरूपितचरमावयवत्वैतत्त्रितयसम्बन्धेन, प्रातिपदिकघटकत्वञ्च व्यपदेशिवद्भावानतिदिष्टं ग्राह्यमिति बहुदण्डका यजेरन्पचेरानौ त्रः संख्याया इत्यादौ न दोषः । द्वितीयदलं रामानित्यत्र, तृतीयदलं नरानित्यत्र नलोपाभावायेति वदन्ति । एवं स्थिते नान्तं यत्प्रातिपदिकं तदन्तस्य पदस्य लोप इत्यर्थेन सिद्धेऽन्तग्रहणं सुत्यजमिति मनोरमानुयायिनः ।

नन्वस्मिन् सूत्रे प्रातिपदिकग्रहणं किमर्थम् । न च तदभावे अहन्नित्यत्र नलोपापत्तिरिति वाच्यम्, नलोपोऽतिङ इति न्यासेनादोषात् । एवंचार्थेऽस्मिन्सूत्रेऽन्तग्रहणमपि न कार्यमित्यपरं लाघवम् । तस्य अहन्-

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

त्यत्र नलोपाभावार्थताया मनोरमादावुक्तत्वात्। नच न ङिसंबुद्ध्योरित्यत्र सम्बुद्धिग्रहणेन प्रत्ययलक्षणेन प्रत्ययान्तत्वव्यवहारो न भवतीति मनोरमायां ज्ञापितम्, अन्यथा राजन्नित्यत्र प्रत्ययान्तत्वेनाप्रातिपदिकत्वाद् नलोपो न स्यान्ङ्यन्तस्य सम्बुद्ध्यन्तस्य च प्रातिपदिकस्य नस्य लोपो नेति तदर्थात्प्रकृते तिङन्तत्वाभावात् अहन्नित्यत्र दोषः स्यादेवेति वाच्यम्, सम्बुद्धिग्रहणस्य प्रत्ययान्तपर्युदासः प्रत्ययलक्षणेन न भवतीति एतावतेव चारितार्थ्यसम्भवेऽतिङ्निषेधे प्रत्ययलक्षणप्रवृत्तिकल्पने फलाभावात्। नचैवमपि सर्वस्मिन्नित्यादौ नलोपापत्तिरिति वाच्यम्, नकारोच्चारणसामर्थ्येन नलोपवारणसम्भवात्।

नच सर्वस्मिन्नित्यस्यानुकरणे मतुपि नलोपे सर्वस्मिमानितिरूपं तत्र नलोपस्यासिद्धत्वाद् ह्रस्वनुड्भ्यांमतुबिति स्वरो न भवति स्म्यादेशकरणे तु स्यादिति नकारोच्चारणस्य चारितार्थ्येन तेन नलोपस्य वारयितुमशक्यत्वम्। न च नकारोच्चारणपक्षेऽपि स्वरविधौ व्यञ्जनमविद्यमानवदिति नकारस्याविद्यमानवत्त्वेन स्वरः स्यादेवेति वाच्यम्, स्वरत्वव्याप्यधर्मघटितधर्मावच्छिन्नविषयतायाः प्रतिबन्धकं व्यञ्जनं न भवतीति तदर्थस्य नुड्ग्रहणसामर्थ्येन स्वीकारात्, अन्यथा अक्षण्वन्त इत्यादौ ह्रस्वान्तत्वादेव सिद्धे नुड्ग्रहणं व्यर्थं स्यादिति वाच्यम्, ह्रस्वनुड्भ्यामिति सूत्रे वसुमानित्यादौ मतुप उदात्तत्वाभावाय 'अन्तोदात्तादुत्तरपदात्--' इत्यतोऽन्तोदात्तादित्यनुवर्तते. ततश्च अनुदात्तौ सुप्पितौ इत्यनेन स्मिनोऽनुदात्तत्वेन मतुप उदात्तत्वाप्राप्त्याऽदोषात्।

नच इदंशब्दाद् 'ऊडिदंपदाद्यप्पुम्रैद्युभ्यः' इति विभक्तेरुदात्तत्वविधानादस्मिमानित्यत्र अन्तोदात्तत्वसत्त्वान्मतुपः 'ह्रस्वनुड्भ्याम्' इति उदात्तत्वापत्तिः नकारोच्चारणे तु नेति वाच्यम्, 'अभिव्यक्तपदार्था' इति न्यायेन अनुकरणेऽप्रसिद्धत्वात्, 'प्रकृतिवदनुकरणं भवति' इत्यस्यानित्यत्वेन इदंशब्दपराऽसर्वनामस्थानविभक्तित्वस्याभावाच्चोडिदमित्यस्याप्रवृत्तेः नलोपोऽतिङितिन्यासे अस्मीत्यस्यैव परिनिष्ठितत्वेन तस्यैवानुकरणसम्भवे नकारस्याप्रसक्त्या फलभेदस्यैवाभावाच्च। नचानुकार्ये नलोपस्य सत्वे प्रकृतिवदनुकरणमित्यसिद्धत्वं शङ्क्यम् साधोरनुकरणमिति पक्षे नलोपे सति परिनिष्ठितस्य अस्मीत्यस्यैवानुकार्य-

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

तथा तत्र नलोपाप्रसक्त्या प्रकृतिवदित्यनेनातिदेशासंभवात् असाधोरनुकरणमिति स्वीकृत्य फलभेदोपपादने च अस्मीत्यादेशेऽप्युदासोननकारं मेलयित्वाऽनुकरणसम्भवे फलभेदासम्भव इति ध्येयम् ।

नचैवं रामानित्यत्र नलोपापत्तिरिति वाच्यम्, लोप एव विधातव्ये नकारविधानसामर्थ्येन लोपवारणात् । न च लोपविधाने मात्रागौरवमिति वाच्यम्, नलोपः प्रातिपदिकान्तस्येत्येतदपेक्षया 'नलोपोऽतिङः' इति न्यासे लाघवाधिक्यात् ।

नच यदि नकारं विधाय लोपो विधीयते तदा यान् आन्-इत्यनयोर्नलोपे या आ इति रूपं जायते सवर्णदीर्घे नलोपस्यासिद्धत्वात्, सकारस्यैव लोपविधाने च दीर्घापत्तिरिति वाच्यम्, नलोपः सुप्स्वरेति नियमेन दीर्घे नलोपासिद्धत्वाभावेन नादेशं कृत्वा लोपेऽपि दीर्घस्येष्टत्वाभ्युपगमात् । तस्माच्छसो नुम्पुंसीति न्यस्य रामानित्यत्र नलोपवारणसम्भवाच्च । नच पूर्वसवर्णदीर्घात्परस्य शसोऽभावेन नुमोऽप्रवृत्त्या सूत्रवैयर्थ्यं, मम तु शसइत्यवयवषष्ठ्यन्तत्वमङ्गीकृत्य पूर्वसवर्णदीर्घात्परस्य शसःसकारस्य नत्वमित्यर्थान्न दोषः, तव तु अन्त्यादचः परतया भाव्यस्य नुमः सकारमुद्दिश्य विधातुमशक्यत्वमिति वाच्यम्, पूर्वसवर्णदीर्घेऽपि अचः परस्मिन्निति स्थानिवत्त्वेन शसः परत्वस्य उपपादयितुं शक्यतयाऽदोषात् ।

यदि तु शसः पार्थक्यस्य स्थानिवत्त्वेन करणेऽपि पूर्वसवर्णदीर्घात्परत्वं नोपपादितमित्युच्यते तदा तस्मादित्यप्यकृत्वा अकमनुवर्त्य अकःपरस्य शसो नुम् विधानेन दोषपरिहार इति बोध्यम् । विस्तरस्तु भूवादयो धातवः, तस्माच्छसो नः पुंसीत्यनयोर्द्रष्टव्यः ।

## दीर्घाज्जसि च ९२

अत्र दीर्घाज्जि चेतिन्यस्य दीर्घात् जकारादौ प्रत्यये इचि च न पूर्वसवर्णदीर्घ इत्यर्थं कृत्वा अनुबन्धविनिर्मुक्तस्यैव लक्ष्ये उपस्थित्या जकारादिप्रत्ययाभावमाशङ्क्य सामर्थ्यादौपदेशिकजकारादित्वमाश्रित्येष्टसिद्धिरिति केचित् ।

तन्न, किंचिन्मात्रालाघवसत्त्वेन सूत्रसामर्थ्याश्रयणरूपस्य गौरवस्यात्यन्तमनुचितत्वात् ।

CC-0. Vasishtha Tripathi Collection. Digitized by eGangotri

## स्वादिष्वसर्वनामस्थाने ५३

ननु शसादिषु इत्येव सूत्रमस्तु कप्प्रत्ययावधिषु परतः पूर्वं पदसंज्ञं स्यादिति सूत्रार्थः। यचि भमित्यत्रास्यैवानुवृत्त्या यकारादिष्वजादिषु च शसादिषु पूर्वं भं भवतीति सूत्रार्थः। एवञ्च ज्ञाने इत्यादौ भत्वाभावेन यस्येति चेति लोपाप्राप्त्या औङः श्यामिति वार्तिकमपि न कार्यमिति महल्लाघवम्। कतरदित्यत्र कतरशब्दस्य भत्वाभावेऽपि अद्डो डित्करणसामर्थ्यादेव टिलोपसिद्धिः अह्नी इत्यत्र विभाषाङिश्योरिति सूत्रस्थशीग्रहणेन भत्वाभावेऽप्यल्लोपसिद्धिः। नच सुपथी, सुयूनी, सुपदी इत्यादौ भत्वाभावेन भस्य टेरिति टिलोपः, श्वयुवमघोनामिति संप्रसारणम्, पादः पदिति पदादेशश्च न स्युरिति वाच्यम्, विभाषा ङिश्योरिति सूत्रस्थशीग्रहणबलेन सामान्यतः शीपरतो भसंज्ञाप्रयुक्तं कार्यं भवतीति कल्पनयाऽदोषादिति चेद्—

न, अहन्शब्दाच्छसि तस्य श्यादेशे भत्वे अल्लोपोऽन इति अल्लोपापत्तौ अह्नानीत्यस्यासिद्ध्यापत्तेरित्यलम्।

## जसि च ५४

ननु जसि च, जुसि च. इति सूत्रद्वयं मास्तु तयोः स्थाने ञिति चेत्येकं सूत्रमस्तु ह्रस्वान्तस्याङ्गस्य गुणः स्याञ्जिति परे इति तदर्थः। तेन हरयः अजागरुः अजुहवुरित्यादिसिद्धिः। नच ह्रस्वग्रहणानुवृत्तौ अबिभयुरित्यत्र गुणानापत्तिरिति वाच्यम्, एवं तर्हि ञिति चेति सूत्रे ह्रस्वग्रहणमननुवर्त्य इक्परिभाषोपस्थित्या इगन्तस्य गुणः स्याञ्जितीत्यर्थेनेष्टसिद्धेः। न च ऊर्णुयुः जागृयुरित्यादौ यदागमपरिभाषया त्रिशिष्टे जित्त्वाद् गुणापत्तिरिति वाच्यम्, अचीत्यनुवर्त्य अजादौ ञिति गुणः स्यादित्यर्थेनादोषात्। न चैवमपि पप्यः वातप्रम्यः इत्यादौ गुणापत्तिरिति वाच्यम्, दीर्घाज्जसि चेति सूत्रे जस्ग्रहणसामर्थ्येन दीर्घान्ते जसि गुणो नेति कल्पनेनादोषात्। नच गौरीशब्दाद् हूहूशब्दाच्च क्यजन्तात्क्विपि अल्लोपयलोपयोर्जसि अल्लोपस्य स्थानिवत्त्वाप्राप्त्या प्राप्तस्य प्रथमयोरितिदीर्घस्य बाधनार्थं तच्चरितार्थं दीर्घे च न स्थानिवत्त्वप्राप्तिः पूर्वपरविधित्वादिति वाच्यम्, गौर्यः हूह इत्यत्र परनेकाचः, ओः सुपीत्याभ्यां


CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

प्रथमयोरित्यस्य बाधेनादोषात् । नच गौर्यः द्वह्वः इत्यत्र एरनेकाच इति बाधित्वाऽन्तरङ्गत्वादिकोयणचीति यण् प्राप्तस्तं परत्वाद्बाधित्वा प्रथमयोरितिदीर्घस्तं बाधित्वा एरनेकाच इति यण् इति चक्रकमिति वाच्यम्, वार्णादाङ्गमितिपरिभाषया इको यणचीति यणं बाधित्वा एरनेकाच इति यण एव सत्वेन चक्रकाभावात् । नचैवमपि मतिचुश्चुरित्यत्र गुणापत्तिः, चुश्चुपश्चकारपरित्राणाय जकारादी चुश्चुपूचणपावित्युक्तत्वादिति वाच्यम्, अन्तःस्थयकारस्यैव तत्र प्रश्लिष्यमाणत्वेनाकरसम्मततयाऽदोषात् । नच यथान्यासे फलाभावाज्जातीयरो जकारस्य नेत्त्वमिदानीं पट्वजातीय इत्यत्र गुणरूपफलस्य सत्त्वेन जकारस्येत्त्वापत्तिरिति वाच्यम्, लोपो व्योरिति लोपेन तत्र यकारप्रश्लेषेणादोषात् । न च स्वं रूपमितिसूत्रबलाज्जिच्छब्दस्य ग्रहणापत्तौ हरिजिदित्यत्र गुणापत्तिः, हरय इत्यत्र तदनापत्तिश्चेति वाच्यम्, भूवादय इत्यादिनिर्देशेन जिदितिशब्दस्वरूपस्य ग्रहीतुमशक्यत्वात् । नच सिद्धान्ते अजुहवुरित्यत्र क्ङितिचेतिगुणनिषेधो न जुसि चेतिसूत्रारम्भादिदानीं हरय इत्यत्र जिति चेत्यस्य चारितार्थ्येन सामर्थ्यस्य वक्तुमशक्यतया क्ङितिचेति गुणनिषेधापत्तिरिति वाच्यम्. भेर्जुसित्यत्र जकारोच्चारणसामर्थ्येन क्ङितिचेत्यस्याप्रवृत्तिकल्पनेनादोषादितिचेद्—

न; भूधातोर्यङ्लुकि अबोभवुरित्यत्र श्तिपाशपेति निषेधाज्जितिचेति गुणानापत्तेः ।

वस्तुतस्तु गुणोयङ्लुकोरित्यत्रत्यलुग्ग्रहणेन श्तिपाशपेत्यस्यानित्यत्वात् भाष्यानुक्तत्वेनाप्रामाणिकत्वाच्च नोक्तदोषस्तथापि ज्ञानगौरवादेव त्याज्योऽयं न्यास इति ध्येयम् ।

## शेषोध्यसखि ५४

नन्वस्मिन्सूत्रे यू इत्यस्यानुवृत्तिः किमर्था । नच तदभावे अदन्तरामादिशब्दे घित्वापत्त्या टाविभक्तेर्नादेशापत्तिरिति वाच्यम्, निरवकाशेन इनादेशेन बाधात् नवा हरिहरावित्यत्र पूर्वनिपातानियमप्रसङ्गः लक्षणहेत्वोरिति निर्देशेन पूर्वनिपातप्रकरणस्यानित्यतया तस्यादोषत्वात् । नच दीर्घान्ते घित्वापत्तिः तस्याग्रहणानुवृत्त्याऽदोषादिति चेद्—

CC-0. Panini Kanya Maha Vidyalaya Collection. Digitized by eGangotri

नः मातृशब्दे घित्वापत्तौ मात्रे इत्यादौ घेर्ङितीति गुणापत्तेः। नच ऋतोङीति सूत्रस्थङिग्रहणेन ऋकारान्ते घेर्ङितीति गुणो नेतिकल्पनाददोष इति वाच्यम्, मात्रे इति कौमुदीग्रन्थस्य मातृशब्दायेत्यर्थवर्णनद्वारा परिच्छेत्तृवाचिमातृशब्दे टाविभक्तेर्निर्देशरूपदोषे तात्पर्यात्। नचैवं किमनेन द्राविडप्राणायामेन पित्रा इत्युक्तावेव लाघवादिति वाच्यम्, यू किमिति प्रश्नस्य घिनदीसंज्ञोभयसूत्रविषयतया उत्तरस्यापि तदुभयसाधारणत्वात्। एवञ्च जननीवाचिमातृशब्दे नदीसूत्रस्थयूग्रहणस्य फलं मात्रे इत्यत्राडनापत्तिरिति तत्त्वम्।

शेषो घ्यसखि, पतिः समास एव इत्यनयोः स्थाने शेषोघ्यसखिपती इत्येव सूत्रमस्तु नदीसंज्ञकभिन्नौ यौ ह्रस्वेकारोकारान्तौ सखिपतिभिन्नौ तौ घिसंज्ञौ भवत इति सूत्रार्थः। सुसखिभूपतिशब्दयोः सखिपतिरूपत्वाभावेन घित्वसिद्धेः। नचैवं गवां पत्येत्यादौ गवां पतीतिसमुदायस्य पतिरूपत्वाभावेन घित्वापत्तिरिति वाच्यम्, असखिपती इति पर्युदासबलेन पतिभिन्नस्य प्रातिपदिकस्यैव ग्रहणेनादोषादिति चेद्–

न, बहुच्पूर्वकसखिशब्दे बहुसखिना इति रूपं भवति समुदायस्य सखिरूपत्वाभावात् तथैव बहुच्पूर्वकपतिशब्दे बहुपतिनेत्यापत्तेः समुदायस्य पतिरूपत्वाभावात्। यथान्यासे तु न दोषः समासत्वाभावात्। नचैवं सखिपतीसमास एवेति सूत्रमस्तु तथा च बहुच्पूर्वकपतिशब्दे न घित्वं समासत्वाभावादिति बहुपतिना इत्यस्य नापत्तिरिति वाच्यम्, यथान्यासे इष्टस्य बहुसखिनेत्यस्यानापत्तेः समासत्वाभावात्। इदं सर्वं दूषणं मनोरमाकृदनुरोधेन।

शेखरकृन्मते तु शेषोघ्यसखीत्यत्र असखीत्यस्य सख्यवयवभिन्नपरतया सख्यवयवभिन्नौ यौ ह्रस्वेकारोकारौ तदन्तं नदीसंज्ञकवर्जं घिसंज्ञमिति सूत्रार्थाद्बहुसखिनेति नैवेष्यते अपि तु बहुसख्येति तत्र सख्यवयवभिन्नेकारासत्त्वात्। एवञ्च शेषोघ्यसखिपती इति न्यासेऽपि बहुपत्येत्येव भविष्यतीति चेत्तर्हि निरुक्तार्थस्वीकारे सुसखिनेति नैव भवति अपि तु सुसख्या तद्वद्भूपत्येत्यस्यापत्तिः। पतिसखी समास एवेति न्यासकरणे तु भूपतिनेतिवत्सुसखिनेत्यस्यापत्तिर्दूषणमिति बोध्यम्।

ननु पतिर्वा समासे इति सूत्रमस्तु इति चेन्न, बहुपत्येत्यस्याप्यसिद्ध्यापत्तेः।

CC-0. Vasishtha Tripathi Collection. Digitized by eGangotri

ननु पूर्वसूत्रेणैव समासे पतिशब्दस्य घित्वसिद्ध्या पतिः समास इति सूत्रं नियमार्थं पतिशब्दः समास एव घिसंज्ञ इति सूत्रे एवकारग्रहणं व्यर्थमिति चेन्न ।

समासे घिसंज्ञा चेत्पतिशब्दस्यैवेति विपरीतनियमापत्तौ महाकविनेत्यादेरसिद्ध्यापत्त्या इष्टनियमलाभायैवकारस्यावश्यकत्वात् । नचासम्बुद्धौ धात्वादेरित्यादिनिर्देशान्न विपरीतनियम इति वाच्यम् , निर्देशाश्रयणे प्रतिपत्तिगौरवादित्यलम् ।

## घेर्ङिति ५६

ननु घेर्ङि इत्येव सूत्रमस्तु यस्मिन्विधिरिति परिभाषया तदादिविधौ घिसंज्ञकस्य गुणः स्यान्ङकारादौ सुपि परे इति तदर्थः । हरये इत्यादौ ङकारादित्वं भूतपूर्वगत्या सांप्रतिकाभावात् । न च प्रवाहवा इत्यस्यासिद्धिः आङ्याजयारामुपसंख्यानमिति वार्तिकविहितस्याङादेशस्य ङादित्वाभावादिति वाच्यम् , तेन ङादेशस्य विधानेनादोषात् । नच आण्नद्या इत्यत्रापीतः सूत्रान्ङीत्यस्यानुवृत्तौ नद्यन्तात्परस्य ङकारादेराडित्यर्थापत्तौ बहुश्रेयस्यै इत्यादौ भूतपूर्वगत्या ङादित्वसत्त्वादाट्सिद्धावपि मत्यामित्यत्राट् न स्यात् आमः भूतपूर्वगत्याऽपि ङादित्वाभावात् । न च मास्तु आट् को दोष इति वाच्यम् , ह्रस्वनद्यापो नुडिति नुडापत्तेः, सिद्धान्ते तु परत्वादाटा नुड बाध्यते इत्यदोषात् । नच स्थानिवत्त्वान्ङिवृत्तिङादित्वमादेशे सुलभमिति वाच्यम् , अनल्विधाविति स्थानिवत्त्वनिषेधात् । मम तु ङित्त्वानयनेऽनल्विधावित्यस्य नल्यपीतिसूत्रारम्भेण अनुबन्धत्वव्याप्यो योऽल्मात्रवृत्तिधर्मस्तद्घटितधर्मातिदेशे न प्रवृत्तिरिति कल्पनयाऽदोष इति वाच्यम् , ङेर्ङामादेशविधानेनादोषादिति चेत्सुवच एवायं न्यास इति बहवः ।

केचित्तु ह्रस्वात्तादौ तद्धिते, एकहलादौ पूरयितव्येऽन्यतरस्यामित्यादौ आदिग्रहणेन यस्मिन्विधिरिति परिभाषाऽनित्या । ततश्च ङकारान्ते सुपीत्यर्थापत्तौ सूत्रोदाहरणस्यैवोच्छेदापत्त्या नायं न्यासो युक्त इति वदन्ति ।

तन्न; अनित्यत्वेऽपि औत्सर्गिकात्तत्प्रवृत्त्येष्टसिद्धेः इष्टस्थलेऽप्यप्रवृत्तौ

CC-0. Gurukul Kangri Collection. Digitized by eGangotri

परिभाषाया एव निर्विषयत्वापातात्। किञ्च ङकारान्तसुपोऽभावादेव तादृशार्थासम्भवः किन्तु सुपोऽवयवे ङकारे इत्येवार्थस्तथाच सकलेष्टसिद्धिरित्यलम्।

यत्तु ङेर्ङाम्करणे इत्संज्ञाऽऽटोः प्राप्तौ परत्वान्नित्यत्वाच्चाटि प्रत्ययादिङकाराभावादित्वं न स्यादिति।

तन्न; अनुबन्धविनिर्मुक्तस्यैव लक्ष्ये उपस्थित्याऽऽटः पूर्वमेवेत्संज्ञालोपयोः सत्त्वेनादोषादित्यलम्।

ननु घेरित्येव सूत्रमस्तु घिसंज्ञकस्य सुपि गुण इत्यर्थात्सकलेष्टसिद्धिः। नच हरिभ्यामित्यादौ गुणापत्तिरिति वाच्यम्, जसिचेत्यस्य घिसंज्ञकस्याङितिगुणश्चेत्तर्हि जस्येवेति नियमार्थतयाऽदोषात्। किञ्च ङेङसिङसङिप्रत्ययेषु च ङकारोच्चारणं मास्तु अनुनासिकान्तभिन्नगुणाद्येकवचनसुवितरसुपि चेत् घेः सुपि गुणस्तर्हि जस्येवेतिनियमस्य करणान्न क्वापि दोष इति महल्लाघवमिति चेन्न।

पतय इत्याद्यर्थं जसिचेत्यस्य चारितार्थ्येन नियामकत्वाभावात्। नच पतिः समासे जसि च इति न्यासेन पतिशब्दः समासे जसि च घिसंज्ञ इत्यर्थान्न क्वापि दोष इति वाच्यम्, एवं करणे लाघवाभावात्। ङेङस्यादिङकारखण्डनकल्पे लाघवेऽपि तत्पदीयानुनासिकान्तेतिनियमे प्रवाहवेत्यस्यासिद्धेश्चेत्यलम्।

ननु घेर्ङितीति सूत्रे सुपीत्यस्य सम्बन्धो मास्तु घिसंज्ञकस्य ङिति गुण इत्यर्थात्सकलेष्टसिद्धिरिति चेन्न।

पट्वीत्यत्र गुणापत्तेः। न च टापः प्रागेव तद्धिता इति सूत्रमस्तु तथा च यस्येति चेतिसूत्रे ईतीति मास्तु औङः श्यामितिवार्तिकमपि मास्तु प्राचां ष्फ इति सूत्रे तद्धितग्रहणञ्च मास्तु इत्येवं लाघवसत्त्वेऽपि टापः प्राक् तद्धिताधिकाराकरणेन स्त्रीप्रत्यये गुणो नेति ज्ञापनेन पट्वी इत्यत्र न दोषः।

यदि पट्वी इत्यत्र ओर्गुण इति गुण इष्टः स्यात्तर्हि तथैव कुर्यादिति वाच्यम्, तद्धिताधिकारस्य टापः प्राक्करणे ङकारादेरित्वानापत्तेः लशक्वतद्धित इत्यत्र अतद्धित इति पर्युदासात्। नच चुटुङः इति न्यासेनादोष इति वाच्यम्, एवमपि सुनी तद्धितमित्यादौ नस्तद्धित

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

इति टिलोपापत्तिरूपदोषस्य जागरूकत्वात् । किञ्च प्राचां ष्फ इत्यत्र तद्धितग्रहणाकरणरूपलाघवप्रदर्शनमप्यसंगतम् । तथाहि-सूत्रे तद्धितग्रहणं न प्रातिपदिकत्वसंपादनद्वाराङीषर्थं षित्करणसामर्थ्यादेव प्रातिपदिकत्वाभावेऽपि ङीषसिद्धेः । नापि यस्येतिचेत्यकारलोपार्थं सवर्णदीर्घेण गार्ग्यायणीत्यादेः सिद्धेः, किन्तु क्वचिदन्यतोपि ष्फ इति ज्ञापनद्वारा आसुरायणीत्याद्यर्थम्, आसुरेरुपसंख्यानमितिवार्तिकं च नापूर्वमिति तद्धितग्रहणस्यावश्यकत्वात् । नच डापो डित्करणसामर्थ्यात् स्त्रीप्रत्यये नस्तद्धित इत्यस्य न प्रवृत्तिरिति शुनी इत्यादौ न दोषः फङं विधाय ङित्करणसामर्थ्यात्क्वचिदन्यतोपि फङिति ज्ञापनाच्च आसुरायणीत्यस्य सिद्धया तद्धितग्रहणवैयर्थ्यमपीति वाच्यम्, गोकक्षशब्दाद्गर्गादित्वाद्यञि ततः क्रौड्यादिभ्यश्चेति ष्यङि चापि प्रकृतसूत्रेण ष्फप्रत्ययचिकीर्षायां भस्याढे तद्धित इति पुंवत्त्वे गौकक्ष्यशब्दाद्यञि गौकक्ष्यायणीति सिद्ध्यति, तद्धितग्रहणाभावे तु पुंवत्त्वाभावेन यञन्तत्वाभावात् ष्फप्रत्ययानापत्तेः । नच प्राचां ष्फ इति सूत्रे सर्वत्र ग्रहणमपकृष्य चापो बाधान्नायं दोषः । किञ्च प्रकृतसूत्रे तद्धितग्रहणाभावेऽपि तद्धिताधिकारादेव ष्फप्रत्ययस्य तद्धितत्वसिद्धिरिति भस्याढ इत्यस्य प्रवृत्तिः सुवचेति वाच्यम्, तथा सति कुरूरित्यत्र ओर्गुण इति गुणापत्तेः ।

वस्तुतस्तु तद्धिताधिकारस्य टापः प्रागकरणेन स्त्रीप्रत्यये गुणो नेति कल्पनेनादोषः । नच टापः प्राक् तथा करणे रमाशब्दे यस्येतिचेत्यकारलोपेऽनुदात्तान्तस्य रमाशब्दस्य श्रवणापत्तिः, इष्यते तु एकादेश उदात्तेनोदात्त इति उदात्त इति वाच्यम्, अनुदात्तनिवृत्तिस्वरेणोदात्तत्वसिद्धेः । यस्येति चेति सूत्रे ईकारग्रहणमाश्रित्य ईकारातिरिक्ते स्त्रीप्रत्यये यस्येतिचेत्यस्य न प्रवृत्तिरिति ज्ञापनेनादोषाच्चेत्यलम् ।

केचित्तु टीपं विधाय पट्वीत्यत्र गुणं वारयन्ति । न च नामधातौ पट्वयते इत्याद्यर्थं ङित्करणमिति वाच्यम्, ब्राह्मणमाणववाडवाद्यन् इति सूत्रे केदाराद्यञ्चेत्यतो यञोऽनुवृत्त्यैव सिद्धे यन्करणेन क्वचिदन्यतोपि यन् तेन पृष्ठादुपसंख्यानमिति सिद्धम् । तेन पृष्ठ्यमित्यस्य सिद्धिरिति भाष्ये उक्तं तेन किं ज्ञाप्यते यदेतादृशङिदादिप्रयुक्तमात्मनेपदं नामधातौ न भवतीति, अन्यथा नामधातौ यञि उभयपदं यनि परस्मैपदमेवेति फल-

Sanskrit Tripathi Collection. Digitized by eGangotri

भेदेन ज्ञापनासंगतिः स्यादित्यदोषादिति तदाशयः इति दिक् ।

न च सुपोऽनुवृत्त्यभावे रुत इत्यत्र तसो ङित्वेन गुणापत्तिः, क्ङिति चेति निषेधस्तु न इग्लक्षणस्यैव तेन निषेधादिति वाच्यम्, तदन्तसंज्ञापक्षे प्रकृतेऽपि इक्परिभाषोपस्थित्या क्ङिति चेति निषेधात् । दध्यानयेत्यत्राङो ङित्वाद् गुणापत्तिरित्यपि न अङ्गाधिकारेण प्रत्ययस्यैव ङितो ग्रहणात् इति दिक् ।

ङसिङसोश्च ५७

नन्वत्र ङित इत्येव सूत्रमस्तु एङो ङितोऽति परे पूर्वरूपमिति तदर्थ इति चेद्—

न, ऋत उदित्यत्रापीदानीं ङित एवानुवृत्या जाग्रतीत्यादौ गुणापत्तेः, झेः सार्वधातुकमपिदिति ङित्त्वेन तदादेशस्य अतीत्यस्यापि ङित्त्वात् । आ समन्तादः वासुदेवो यस्मिन्नगरे तद् आ ततो बहुचि नपुंसकह्रस्वे बह्व तत आचारक्विपि लङि शपि आङ्गकार्यसंभावनायां वार्णपरिभाषया पूर्वं यणोऽप्रवृत्तौ लघूपधगुणे बह्वो अ अदित्यत्र परादिवद्भावेन अकारस्य ङित्वादनेनापि पररूपकरणापत्तेश्च प्रतिपदोक्तपरिभाषया दोषद्वयवारणं तु न युक्तम् साक्षादुच्चरितत्वस्य, तत्तच्छब्दानुवादेन विहितत्वस्य वा प्रतिपदोक्तत्वस्य कुत्राप्यभावादित्यलम् ।

अच्च घेः ५८

नन्वत्र घेर्डौ इत्येव सूत्रमस्तु घेः परस्य ङेर्डादेश इति तदर्थः । डित्वाट्टिलोपे हरावित्यस्य सिद्धेः ।

यत्तु हरिशब्दादाचक्षाणण्यन्तात् क्विपि टिलोपणिलोपयोर्ङौ सिद्धान्ते रेफस्याकारादेशे ङेरौकारादेशे वृद्धौ हाविति घेर्डाविति डावादेशपक्षे प्रथमटिलोपस्य स्थानिवत्त्वेन द्वितीयटिलोपाभावे हराविति न्यासे दोष इति—

तन्न, रेफान्तस्य हर् इत्यस्य घित्वाभावेन उभयथाप्यादेशाप्रवृत्त्या हरीतिरूपस्यैव तत्रेष्टत्वात् । नच विंशतावित्यस्यासिद्धिः डावादेशकरणे तिविंशतेर्डितीति तिशब्दलोपे वृद्धौ विंशावित्यापत्तेरिति वाच्यम, अच्च घेरिति सूत्रे डित्वमाश्रित्याकारप्रत्याख्यानपरभाष्येण विंशतिशब्दस्य डावनभिधानकल्पनेनादोषादिति केचन्यासः सुत्रन एव ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

केचित्तु—टेर्ङिति, तिर्विंशतेस्तद्धिते, न, इति सूत्रन्यासेन विंशतावित्यत्र ङीषभावाद् घेर्ङौ इति न्यासः सुवच एव। अत एव औकारं ङितमाश्रित्य अदितिभाष्ये प्रत्याख्यातम्, अन्यथा विंशतावित्यत्र फलभेदः स्यादिति वदन्ति।

## अनङ् सौ ५९

ननु अनङ्सावित्यस्य स्थाने "सोर्ङा" इत्येव सूत्रमस्तु सखिशब्दात्परस्य सोर्ङादेशो भवतीति तदर्थः। तथा च सखिशब्दात्परस्य सोर्ङादेशे जाते ङित्त्वसामर्थ्यादभस्यापि टेर्लोपे सखेत्यस्य सिद्धिः। नचानेन सोर्ङाविधाने तस्योत्तरत्रानुवृत्तौ ऋदुशनस्पुरुदंसोऽनेहसां चेत्यनेनापि उशनस्शब्दात्सोर्ङाविधाने टिलोपे नान्तत्वे "सर्वनामस्थाने चासंबुद्धौ" इति दीर्घापत्तिः। पुरुदंसस्शब्दे टिलोपे सान्तसंयोगसत्वेन "सान्तमहतः संयोगस्य" इति दीर्घापत्तिश्चेति वाच्यम्, संज्ञापूर्वकविधेरनित्यत्वात् "अङ्गवृत्ते पुनर्वृत्तावविधिः" इति परिभाषणाद्वा दीर्घाप्रवृत्तेः। नच सखिशब्दाण्णिचि टिलोपे एकदेशविकृतन्यायेन, आनुमानिकस्थान्यादेशभावेन वा सखिशब्दत्वादनङि डादेशे च वैषम्यमिति वाच्यम्, खकारस्यानङि "अतोगुणे" इति पररूपे नान्तलक्षणादीर्घे नलोपे सा इति डादेशे टिलोपे सा इति वैषम्याभावात् णिलोपस्य टिलोपस्य वा स्थानिवत्त्वेन तदप्राप्तेश्चेति चेद्—

न, सखिशब्दाचारक्विबन्तात्कर्तरि क्विपि तुकि तत्र डादेशे 'सखा' इति रूपम् अनङि 'सख्या' इति रूपमिति फलभेदादिति दिक्।

यत्तु गौणमुख्यन्यायान्नात्रानङादिरिति तन्न। अप्रसिद्धत्वगौणलाक्षणिकत्वरूपगौणत्वस्यैव परिभाषायां ग्रहणेन, अस्य प्रातिपदिककार्यत्वेन च उक्तन्यायाप्रवृत्तेः।

यदि तु नामीत्यत्रामीतिन्यासं प्रक्रम्य षट्चतुर्भ्यश्चेतिसूत्रे त्रेरित्यनुवर्त्य तिसृणामित्यत्र नुट्साधनपरभाष्येण इकारान्तेभ्यः आचारक्विबन्तप्रकृतिककर्तृक्विपोऽनभिधानम्, अन्यथा त्रितामित्यत्रफलभेदः स्यादिति सखिंच्छब्दस्यानभिधानमित्युच्यते तदा "सोर्ङा" इत्येव सिद्धे अनङ्विधानं क्वचिदन्यतोपि विधानार्थं तेन उशनसः सम्बुद्धावनङ्सिद्धिरिति प्राचोक्तमपि सम्यगेवेत्यलम्।

CC-0. Vasishtha Tripathi Collection. Digitized by eGangotri

### अलोऽन्त्यात्पूर्व उपधा ६०

ननु "अलुपोत्तम उपधा" इत्येव सूत्रमस्तु अन्त्यसमीपोल् उपधासंज्ञ इति तदर्थः। नच स्वघटकत्व स्वघटकोत्तरत्व स्वघटकपूर्वत्वाभाववत्वैतत्त्रितयसम्बन्धेन, स्वविशिष्टत्वरूपस्वान्त्यत्वस्य दम्भेत्येतद्घटक "म्भ्" इत्यत्रापि सत्त्वेन पोरदुपधादिति यदापत्तिः। मम तु अन्त्यादलः पूर्व उपधा इत्यर्थान्न दोष इति वाच्यम्, "अत उपधाया" इत्यत्र उपधाग्रहणसामर्थ्येन अन्त्यपदेन वर्णस्यैव प्रकृतन्यासेऽपि ग्रहणमित्यदोषात्, अन्यथा अनेकवर्णव्यवहितस्यापि अत उपधासंज्ञायां तद्व्यावर्त्यप्रसिद्ध्या उपधाग्रहणवैयर्थ्यं स्यादिति चेद्—

न; ज्ञापकस्वीकारे गौरवेण न्यासस्य हेयत्वात्॥

ननु यथाश्रुते अन्त्यादलः पूर्व उपधा इति सुत्रार्थात् शिष्ट इत्यत्र सकारात्पूर्वस्य 'शा' इत्यस्योपधासंज्ञायां "शास इदङ्हलोः" इति इत्त्वापत्तिः। नच अलः प्रथमान्तत्वमङ्गीकृत्य अन्त्यात् पूर्वोऽल् उपधासंज्ञ इत्यर्थान्न दोष वाच्यम्, अल इति बहुवचननिर्देशस्य प्रयोजनाभावेन गौरवात् एवमप्यन्त्यपदेन आस् इति समुदायं गृहीत्वा शकारस्योपधासंज्ञायां शिष्ट इत्यत्र शस्यैवेत्वापत्तेश्चेति चेद्—

न, शा इत्यस्योपधासंज्ञायामपि अलोन्त्यपरिभाषया निस्तारात्। नच "नानर्थकेऽलोन्त्यविधिरनभ्यासविकारे" इति तन्निषेध इति वाच्यम्, तस्याः फला भावेनानाश्रयणात्। नचास्या अनाश्रयणे "अव्यक्तानुकरणस्यात इतौ" इति अलोऽन्त्यपरिभाषासहकारेण तकारस्यैव पररूपं विदध्यात् तथा च पटेतीति रूपापत्तिरिति वाच्यम्, आम्रेडितस्य अतः पररूपं न भवति अन्त्यस्य तु वा भवति इत्यर्थकेन "नाम्रेडितस्यान्त्यस्य तु वा" इत्यनेन अतः पररूपं निषिध्य तकारस्य वैकल्पिकपररूपविधानसामर्थ्येन प्रकृतेऽलोन्त्यपरिभाषाऽप्रवृत्तिकल्पनेनादोषात्। अन्यथा वाम्रेडितस्येत्येव वदेत्।

नच "श्वसोरेद्धावभ्यासलोपश्च" इति संपूर्णाभ्यासस्य लोपो यथास्यादित्येतदर्थं नानर्थक इति परिभाषा कर्तव्या अन्यथा ऽलोन्त्यपरिभाषया ऽन्त्यस्यैव लोपः स्यात्। नच कृतायामपि तस्यां प्रकृते न निर्वाहः, अनभ्यासविकारे इत्युक्तेरिति वाच्यम्, लोपस्यापि वर्णविकारत्वे

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

हीति भाष्ये लोपात्पृथग्विकारपदोपादानेन लोपस्य विकारत्वानभ्युपगमादिति वाच्यम्,

"लोपो यि" इत्यतो लोप इत्यनुवर्तमाने पुनर्लोपग्रहणेन सर्वादेशत्वसिद्धेः।

न च नानर्थक इत्यस्याभावे 'हलि लोप' इत्यन्त्यस्य लोपापत्तिरिति वाच्यम्, "अनाप्यक" इत्यत्र "अ" इति नपुंसकं नान्तं प्रश्लिष्य तस्यैव अनुवृत्याषष्ठ्यन्तत्वेन विपरिणामात् अन एव "हलिलोपः" इति लोपविधानादन्त्यलोपेऽपि तत्यभावात्। न च "अत्र लोपोऽभ्यासस्य" इति सर्वस्याभ्यासस्य लोप एव नार्थक इत्यस्य फलमिति वाच्यम्, अत्र ग्रहणसामर्थ्येन योऽभ्यासत्वेन निर्ज्ञातस्तस्य सर्वस्य लोपो यथास्यादित्यर्थेनादोषात्। न चात्र ग्रहणं सनः परामर्शार्थम्, अन्यथा ददावित्यत्राप्यभ्यासलोपापत्तिरिति वाच्यम्, अन्तरेणाप्यत्र ग्रहणं सनोऽनुवृत्तिसंभवात्। नच प्रकृतीनां मीमादीनां ग्रहणाय अत्रग्रहणमिति वाच्यम्, अन्तरेणाप्यत्र ग्रहणं प्रकृतीनामनुवृत्तिसंभवादिति दिक्।

यदि तु अनेकक्लिष्टकल्पनाभिःनानर्थक इत्यस्य प्रत्याख्यानं नोचितमिति अलोन्त्यस्येत्यस्य निषेधेन शिष्ट इत्यत्र सम्पूर्णस्येत्वापत्तिरित्युच्यते तदा अवध्यवधिमतोः साजात्यात् अन्त्यादलः पूर्वो वर्ण एव ग्रहीष्यते न वर्णसमुदाय इत्यदोष इति बोध्यम्।

## हल्ङ्याब्भ्योदीर्घात्सुतिस्यपृक्तं हल् ६१

ननु ङ्यापः सोरित्येव सूत्रमस्तु ईकाररूपो यो ङी आकाररूपो य आप् तदन्तात्परो यः सुस्स लुप्यते इति तदर्थः। हलन्तात्परेषां सुतिसीनां संयोगान्तलोपेनैव सिद्धः।

न च सखेत्यत्र सोः संयोगान्तलोपे तस्यासिद्धत्वान्नलोपो न स्यादिति वाच्यम्, "अनङ् सौ" इत्यत्र "सोर्डो" इतिन्यस्य सखेत्यस्य सिद्धेः। अतएव कौमुद्यां प्रथमहल् किं राजेत्येवोक्तं नतु प्रथमोपस्थितं सखेति।

नच राजेत्यत्र नलोपानापत्तिः संयोगान्तलोपस्यासिद्धत्वादिति वाच्यम्, "न ङिसम्बुद्ध्योः" रिति सूत्रे सम्बुद्धिग्रहणेन नलोपे संयोगान्तलोपस्य सिद्धत्वज्ञापनाद्, अन्यथा राजन्नित्यत्र संयोगान्तलोपस्या-

CC-0. Vasishtha Tripathi Collection. Digitized by eGangotri

सिद्धत्वेन नलोपाप्राप्त्या तद्वैयर्थ्यं स्पष्टमेव। न च हे ब्रह्मन्नित्यत्र "स्वमोर्नपुंसकात्" इति सोर्लुकि नलोपाभावाय सम्बुद्धिग्रहणमावश्यकमिति न नलोपे संयोगान्तलोपस्य सिद्धत्वज्ञापकमिति वाच्यम्, नङिसम्बुद्धियोरित्यत्र ङिसम्बुद्ध्योरित्यस्य सप्तम्यन्तत्वेन नस्य लोपो न स्यान्ङौ सम्बुद्धौ चेत्यर्थात् लुका लुप्ते प्रत्ययलक्षणाभावेन "सम्बुद्धौ नपुंसकानां नलोपो वा वाच्य" इत्यस्यावश्यकत्वेन सम्बुद्धिग्रहणस्य तदर्थमनावश्यकत्वात्। नच भाष्ये वा नपुंसकानामित्येव पठितमिति तत्रानुवर्तनाय तदिति वाच्यम्, वार्तिके एव पठितव्ये इह करणस्य "इह किञ्चित्त्रपो" इति न्यायेन ज्ञापकत्वसंभवात्। न च ङिसम्बुद्ध्योरित्यस्य षष्ठ्यन्तत्वमाश्रित्य ङ्यन्तस्य सम्बुद्ध्यन्तस्य चेत्यर्थे नलुमतेत्यस्याप्रवृत्त्या वा नपुंसकानामिति न वक्तव्यम् तथा च सम्बुद्धिग्रहणमावश्यकमिति वाच्यम्, नलोपविकल्पार्थं वार्तिकस्यावश्यकत्वात्।

न चैवं नलोपे संयोगान्तलोपस्य सिद्धत्वकल्पने अनड्वान गोमान् इत्यादौ नलोपापत्तिरिति वाच्यम्, ज्ञापकस्य सजातीयापेक्षत्वेन यत्र नकारविभक्त्योरानन्तर्यं तत्रैव नलोपे संयोगान्तलोपस्य सिद्धत्वज्ञापनेनादोषात्।

नच अभिनोऽत्र इत्यादौ दश्चेति दस्य रुत्वे तस्य अतोरोरित्युत्वे कर्तव्ये संयोगान्तलोपस्यासिद्धत्वादुत्वं न स्यादिति वाच्यम्, हरिशब्दान्मतुपि "छन्दसीर" इति वत्वे नुमि संयोगान्तलोपे मतुवसोरिति रुत्वे "हशि च" इत्युत्वे कर्तव्ये हरिवो मेदिनं त्वेत्यादौ संयोगान्तलोपस्यासिद्धत्वाभावाय "संयोगान्तलोपो रोरुत्वे सिद्धो वाच्य" इति वार्तिकस्यावश्यकत्वेन तेनैव अभिनोऽत्रेत्यादावपि संयोगान्तलोपस्य सिद्धत्वबोधनेनादोषात्। न चोत्वे संयोगान्तलोपस्यासिद्धत्वाभावबोधनेऽपि अभिनोऽत्रेत्यादौ पूर्वरूपे संयोगान्तलोपासिद्धत्वं स्यादेवेति वाच्यम्, "संयोगान्तलोपो रोरुत्वे" इति वार्तिके "नमुने" इत्यत्रेव विषयसप्तमीमङ्गीकृत्य उत्वे कर्तव्ये कृते च संयोगान्तलोपस्य सिद्धत्वज्ञापनेनादोषात्।

नचैवमपि अविभभवान् इत्यादौ तकारस्य संयोगान्तलोपो न स्यात्

CC-0. Vasishtha Tripathi Collection. Digitized by eGangotri

"रात्सस्य" इति नियमादिति प्रथमहल्ग्रहणं तिस्योर्ग्रहणं चावश्यकमिति वाच्यम्, "रात्सस्य" इत्यत्र समाहारद्वन्द्वेन तकारस्यापि प्रश्लेषेणादोषात् । नचैवं कीर्तयतेः क्विपि कीर्त् इत्यत्र तकारलोपापत्तिः णिलोपादेः स्थानिवत्त्वं तु न कौलुप्तमित्यनेन, पूर्वत्रासिद्धीये न स्थानिवदित्यनेन, वा तन्निषेधादिति वाच्यम्, रात्सस्येति सूत्रे तकारं प्रश्लिष्य प्रकृतदोषमाशङ्क्य "यथालक्षणमप्रयुक्ते" इति भाष्योक्त्या कीर्त् इत्यादीनामनभिधानेनादोषात् । नचाववर्त् इत्यादौ तकारस्य संयोगान्तलोपापत्तिरिति वाच्यम्, यङ्लुकश्छान्दसत्वात् 'यथालक्षणमप्रयुक्तं' इति भाष्योक्त्याऽनभिधानात् सकारसाहचर्येण प्रकृत्यनवयवकतकारस्य अर्थवतस्तकारस्य वा लोपविधानात् । एतेन यथालक्षणमित्यस्य "यस्य विशिष्टः प्रयोगो न स्मर्यते नापि प्रयोगनिषेधस्मृतिस्तद्यथालक्षणमनुगन्तव्यम्" इति व्याख्यापक्षे कीर्दित्यादौ का गतिरित्यपास्तम् ।

नच उखास्रस् स् इति स्थिते दत्वस्यासिद्धत्वेन पूर्वं संयोगादिलोपे सोरुत्वविसर्गयोरुखास्रदित्यस्यासिद्धिरिति वाच्यम्, "वस्वादिषु दत्वं सिद्धं वाच्यम्" इति वार्तिकेन दत्वस्यासिद्धत्वाभावेनादोषात् । नच पूर्वं सोर्लोपाभावेऽपदान्तत्वाद् दत्वं न स्यादिति वाच्यम्, स्वादिष्वसर्वनामस्थाने इत्यत्र 'स्वादिषु' इति योगं विभज्य स्वादिषु पूर्वं पदं भवति मध्ये चेत्सुवन्तं तदपि पदं भवति ततः "असर्वनामस्थाने यचि" यजादौ सर्वनामस्थाने पूर्वं पदं न भवति मध्ये चेत्सुवन्तं तदपि पदं न भवति ततो "भम्" सर्वनामस्थानभिन्ने यजादौ पूर्वं भं भवति मध्ये चेत्सुवन्तं तदपि भं भवति इति उत्तरपदत्वे इत्यस्य प्रत्याख्यानाय भाष्योक्तया रीत्या सावपि पदत्वसत्वेनादोषात् । न च सौ पदत्वाश्रयणे राजेत्यादौ प्रथमं नलोपे संयोगान्तलोपो न स्यादिति वाच्यम्, 'इतोत्सर्वनामस्थाने' इत्यत्वे नान्तलक्षण उपधादीर्घे प्रथमं नलोपे संयोगान्तलोपाप्रवृत्त्या सोरुत्वविसर्गयोः पन्था इत्यस्य सिद्ध्या पथीमथीत्यात्वविधानाज्ज्ञापकात् नलोपात्प्रागेव संयोगान्तलोप इत्यर्थस्य कल्पनेनादोषात् । न च पथिमथीत्यात्वं हे पन्था इत्यादौ नान्तलक्षणोपधादीर्घस्याप्राप्त्या आकारश्रवणार्थमिति वाच्यम्, नङिसम्बुद्ध्योरित्यत्र ङिसम्बुद्ध्योरित्यस्य षष्ठ्यन्ततामाश्रित्य ङ्यन्तस्य सम्बुद्ध्यन्तस्य च प्रातिपदिकस्य नस्य लोप

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

इत्यर्थेन यदि राजन्नित्यादौ पूर्वं नलोपः स्यात्तर्हि सम्बुद्ध्यन्तस्य प्रातिपदिकस्यासंभवात्सम्बुद्धिग्रहणं व्यर्थं स्यादिति तत्सामर्थ्येन संयोगान्तलोपात्प्राङ्नलोपो नेति कल्पनेनादोषात्। युक्तं च ङिसम्बुद्ध्योरित्यस्य षष्ठ्यन्तत्वं सप्तम्यन्तत्वे परमेव्योमन्नित्याद्यर्थं नलुमतेत्यादेर्ङिग्रहणेनानित्यत्वकल्पने गौरवात्।

नचैवमपि राजैधते चक्र्यत्र राजच्छत्रमित्यादौ संयोगान्तलोपस्यासिद्धत्वेन वृद्धियणतुगादयो न स्युः। किञ्च पद्व्यथेत्यादाविव लक्ष्यगतपरत्वमाश्रित्य धीमानित्यत्र तकारस्य संयोगान्तलोपे कर्तव्ये सुस्थानिकसंयोगान्तलोपस्यासिद्धत्वेन तकारलोपानापत्तिरिति वाच्यम्, संयोगान्तलोपो रोरुत्वे इत्यत्र संयोगान्तलोपः सन्धाविति करणेन, नङिसम्बुद्ध्योरित्यत्रत्यसम्बुद्धिग्रहणेन विभक्तिसंयोगान्तलोपस्य नासिद्धत्वमिति सामान्यतो ज्ञापनेन वा क्वाप्यदोषात्, सावपि पदं भवतीति पक्षे धीमानित्यत्र पूर्वं तकारस्य संयोगान्तलोपे पश्चात्सोः संयोगान्तलोपेऽदोषाच्च।

नचैवं विद्वानित्यत्र 'सान्तमहतः संयोगस्य' इति दीर्घान्नित्यत्वात्परत्वाच्च दत्वे तस्य संयोगान्तलोपे विद्वन्नित्यापद्येत दीर्घविधिस्तु विद्वांसावित्यादौ चरितार्थः। किञ्च सुपीः पिपठीरित्यादौ पदान्ते संयोगादिलोपस्य संयोगान्तलोपापवादत्वेन संयोगादिलोपे रुत्वे रेफान्तधातोरसत्त्वात् 'र्वोरुपधाया–' इति दीर्घानापत्तिः, शक्धातोः क्विपि सौ संयोगादिलोपापत्तिश्च। किञ्च उखास्रदित्यादौ अत्वसन्तेतिदीर्घाभावाय वस्वादिषु दत्वं सिद्धमिति वार्तिकमारभ्यते तदेव नास्ति अधातोरित्युक्त्या दीर्घाप्राप्तेरिति उखास्रदित्यत्र संयोगादिलोपापत्तिः तदर्थमपूर्ववार्तिककल्पने च गौरवमिति वाच्यम्, 'तिप्यनस्तेः' 'सिपि धातो रुर्वा' इति सूत्राभ्यां धातुसम्बन्धिपदान्तसस्य दत्वं रुत्वं च विधीयते यदि अचकाद् अचका इत्यादौ संयोगादिलोपः स्यात्तदा दत्वरुत्वे कस्य स्यातामिति व्यर्थं सूत्रे "संयोगादिलोपात् प्राक् विभक्तिसंयोगान्तलोप" इत्यर्थं कल्पयत इत्यदोषात्। नचैवं भूयादित्यत्रापि संयोगादिलोपात्प्राक् विभक्तिसंयोगान्तलोपापत्त्या तकारस्य श्रवणानापत्तिरिति वाच्यम्, ज्ञापक-

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

साजात्याद्धात्ववयवसंयोगादिलोपात्पूर्वं विभक्तेः संयोगान्तलोप इत्यर्थस्य ज्ञापनेनादोषात् ।

नचाविभाराज्यमित्यत्र संयोगान्तलोपस्यासिद्धत्वाद्दीर्घो न स्यादिति वाच्यम्, लीढः अजर्घा इत्यादिभाष्योदाहरणे 'ढ्लोप-' इति दीर्घे कर्तव्ये ढत्वरुत्वयोरसिद्धत्वाद्दीर्घाप्राप्त्या तादृशोदाहरणपरभाष्यप्रामाण्येन 'पूर्वत्रासिद्धम्' इति सूत्रस्थपूर्वपदेन ढ्लोपसूत्रस्याग्रहणेन दोषाभावात् । अत एव चतूरातीत्यत्र सुचः संयोगान्तलोपस्य नासिद्धत्वम् । एवञ्च ङ्याप: सोरितिन्यासे न किमपि बाधकम् ।

न च सुरां सुनोतीति सुरासुत् सुरासुतमाचष्टे सुरासयति सुरासयतीति सुराः इत्यत्र सुञः सकारस्य लोपापत्तिः । यथान्यासे तु परस्परसाहचर्यान्न दोष इति वाच्यम्, इदानीमपि ङ्याप्साहचर्येण प्रत्ययरूपस्यैव ग्रहणेनादोषादित्यलम् ।

## अचो ञ्णिति ६२

ननु 'अत उपधाया' इत्यत्रैव ञ्णितीति पाठेन सिद्धे अचो ञ्णितीति सूत्र किमर्थम् । न च सखायावित्यत्र वृद्ध्यर्थं तदिति वाच्यम्, सख्युरसम्बुद्धावित्यत्र ऐ सख्युरसम्बुद्धावितिन्यासेन सिद्धेः । नच गौरित्यत्र वृद्ध्यर्थं तदिति वाच्यम्, गोतोणिदित्यस्य स्थाने गोत औदितिन्यासेन सिद्धेः ।

नच णलुत्तमो वा इत्यत्रानुवृत्त्यर्थं णिद्ग्रहणमावश्यकम्, अन्यथा औत एवानुवृत्तौ जगादेत्यादेरसिद्ध्यापत्तिः । नच गौरित्यर्थं गोतो णिदित्यत्र गोतो वृद्धिरिति न्यस्य ततो वृद्धिपदानुवर्तनेन निर्वाहः । एवञ्च ऐसख्युरसम्बुद्धावितिन्यासश्च न कार्यःवृद्धिपदानुवृत्यैव सिद्धेरिति वाच्यम्, तथा सति जगादेत्यादावलोन्त्यपरिभाषयाऽन्त्यस्यैव वृद्ध्यापत्तेः । अत उपधाया इत्यनन्तरं णलुत्तमोवेत्यस्य पाठं कृत्वोपधापदसम्बन्धेन दोषवारणे तु चकावित्यस्यासिद्धिरिति वाच्यम्, णलुत्तमो णिद्वेति न्यासेन जगादेत्यादावत उपधाया इत्येव वृद्धिसिद्धेः ।

नच कुम्भकार इत्यादौ वृद्ध्यर्थमचोञ्णितीति सूत्रमिति वाच्यम्, पूर्वं सार्वधातुकार्धधातुकयोरिति गुणेऽत उपधाया इति वृद्ध्यव तत्सिद्धेः । न च जाग्रोऽविचिण्णल्ङित्सु इति सूत्रे णलि गुणनिषेधार्थं

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

कृतपर्युदासेन 'गुणोत्तरा वृद्धिर्नेष्यते' इति कल्प्यते, अन्यथा णलि गुणेऽपि वृद्ध्या जजागारेतिरूपसिद्ध्या णलि गुणनिषेधो व्यर्थः स्यात्, एवञ्च कुम्भकार इत्यस्यासिद्धिरिति वाच्यम्, ज्ञापकस्य विशेषापेक्षत्वेन जागृशब्दे एव गुणोत्तरा वृद्धिर्नेष्यते इत्यस्याः स्वीकारेण कुम्भकार इत्यस्य सिद्धौ बाधकाभावात्।

नच रजयतीत्यत्र अत उपधाया इति वृद्धिर्माभूदित्यर्थमदुपधाद्विहिते ञ्णितीत्यर्थस्यावश्यकतया कुम्भकारः इत्यस्य न सिद्धिः। नच अत उपधाया इत्यस्य तादृशार्थकरणे राग इत्यत्र वृद्ध्यनापत्तिः, घञि च भावकरणयोरित्यत्र घञीति विषयसप्तम्यङ्गीकारेण पूर्वं नलोपे ततो घञि अदुपधाद्विहितघञः सत्त्वेनादोषादिति वाच्यम्,

रजयतीत्यत्र वृद्धावपि 'मितां ह्रस्व' इति ह्रस्वत्वेन रजयतीत्यस्य सिद्ध्या 'अत उपधाया' इत्यस्य तादृशेऽर्थे मानाभावेन कुम्भकार इत्यस्य सिद्धौ बाधकाभावात्। एवं भावयतीत्यस्यापि सिद्धिर्बोध्या।

नच जनीजॄष्क्नसुरञ्जोऽमन्ताश्चेत्यत्र क्नसुसाहचर्येण दैवादिकस्यैव रञ्जेर्ग्रहणेन रजयतीत्यत्र मित्त्वासंभव इति वाच्यम्, सहचरितपरिभाषया अनित्यत्वात् तत्रोभयोर्ग्रहणस्य सर्वसंमतत्वाच्च।

नच शीङ्धातोः 'शीङो धुक्लक्वलञ्वालनः' इति उणादिसूत्रेण वलञि शैवल इत्यस्य सिद्ध्यर्थमचोञ्णितीति सूत्रमिति वाच्यम्, तत्र वलञः स्थाने डैवलो विधानेनादोषात्। नच शैवलशब्दान्नामधातौ उभयपदार्थं ञित्करणमावश्यकमिति वाच्यम्, डैवलञ् विधानेनादोषात् उणादीनामव्युत्पन्नत्वाच्च। न चाचोञ्णितीति सूत्राभावे जाग्रोऽविचिण्णिति णलि गुणनिषेधेन अत उपधाया इत्यस्याप्यप्रवृत्त्या यणि जजाग्रेति रूपापत्तिरिति वाच्यम्, सूत्रे णल्ग्रहणमकृत्वा गुणेऽत उपधाया इति वृद्ध्या रूपसिद्धेः। नच तत्र णल्ग्रहणाभावे उत्तमे णलि णलुत्तमो-वेति वैकल्पिकणित्त्वे जजागार जजागरेत्यनिष्टरूपापत्तिः, इष्यते तु जजागार जजाग्रेति वाच्यम्, णलुत्तमोऽपिद्धति न्यासेन पित्त्वपक्षे वृद्ध्या जजागारेत्यस्य अपित्पक्षेऽसंयोगाल्लिट्किदिति कित्त्वे जजाग्रेत्यस्य सिद्धेरिति चेन्न।

कित्त्वेऽपि जाग्रोऽविचिण्णिति गुणानुवादार्थं णलि पर्युदासस्यावश्यक-

CC-0. Prof. Satya Vrat Shastri Collection. Digitized by eGangotri

तया जजागारेत्यर्थमचोञ्णितीत्यस्यावश्यकत्वात् णलुत्तमो ऽपिद्वेति-न्यासे ततार तत्रेति अनिष्टरूपद्वयापत्तेश्च । जाग्रोऽविचिण्णिति सूत्रे णल्ग्रहणाकरणेन गुणेपि 'गुणोत्तरा वृद्धिर्नेष्यत' इति न्यायेन वृद्ध्यप्राप्त्या जजागारेत्यस्ये सिद्ध्यसंभवाच्च अत एव जागरक इत्यादौ न वृद्धिरिति बोध्यम् ।

यत्तु चकावित्येतदर्थमचोञ्णितीति सूत्रमावश्यकमिति ।

तन्न, औ णल इत्यत्र 'आदौ णल' इति न्यस्य अवर्णात्परस्य णल औकार इत्यर्थेन चकावित्यस्य सिद्धेः । न चोत्तमे णलि चकौ चक इति रूपद्वयासिद्धिरिति वाच्यम् , 'आदौ णिण्णल' इति न्यासेन णित्वाभावे ममाप्यौकाराप्रवृत्तेरदोषात् । नच पाधातोरुत्तमे णलि पपौ पपेतिरूपद्वयापत्तिः सिद्धान्ते तु पपावित्येकमेवेति वाच्यम् , कास्प्रत्ययादिति सूत्रस्थभाष्यप्रामाण्येनैकाज्भ्य आचारक्विपोऽनभिधानेन चकावित्यस्यासाधुतया तदर्थमात औ णल इत्यत्र न्यासान्तरप्रवृत्तेरनावश्यकत्वेनादोषात् ।

केचित्तु नृशब्दाद्भूशब्दाच्च णौप्रकृत्यैकाजिति टिलोपाभावे नारयति भावयतीत्यादौ वृद्ध्यर्थं, जजागारेत्यर्थं च सूत्रमावश्यकम् । न हि तत्र गुणस्य प्राप्तिः आद्ययोर्धातुविहितप्रत्ययत्वस्य णिच्यभावेनार्धधातुकभावात् अन्त्ये अणलीति निषेधादिति वदन्ति ।

## यूस्त्र्याख्यौ नदी । ६३

नन्वत्र यू इति पदे इश्च उश्च यू इति ह्रस्वयोर्द्वन्द्वः ईत ईश्च ऊश्च यू इति दीर्घयोर्द्वन्द्वः । नाद्यः मत्यादिशब्दे नदीत्वापत्त्या सम्बुद्धौ पर्जन्यवल्लक्षणप्रवृत्त्या ह्रस्वे हे मते इत्यादेरसिद्ध्यापत्ते । न च ह्रस्वोत्तरं गुणेन तत्सिद्धिरिति वाच्यम् , ह्रस्वविधिसामर्थ्येन तदुत्तरं गुणावृत्तेः । अत एव हे गौरीत्यादौ न गुणः । न च शेषोध्यसखीतिघित्वनेन नदीत्वबाधान्न मतिशब्दे दोष इति वाच्यम्, शेषग्रहणेन नदीसंज्ञाऽविषयस्य पुन्नपुन्सकेकारोकारान्तस्यैव घित्वप्राप्त्या मतिशब्दे तदप्रवृत्तेः । न च शेषग्रहणस्य स्पष्टार्थतायाः कौमुद्यामुक्तत्वेन तस्याकर्तव्यत्वलाभेन नदीसंज्ञाविषयेऽपि परत्वाद् घित्वप्रवृत्तिरिति वाच्यम्, तर्हि ङिति ह्रस्वश्च

CC-0. Vasishtha Tripathi Collection. Digitized by eGangotri

इति नदीत्वपक्षेऽपि घित्वे गुणापत्तेः। न द्वितीयः दीर्घान्तयूशब्दादौ विभक्तौ दीर्घाज्जसि चेति पूर्वसवर्णदीर्घनिषेधेन यू इति रूपस्यासिद्धेरिति चेन्न।

दीर्घान्तयूशब्दमङ्गीकृत्य दीर्घाज्जसि चेति पूर्वसवर्णदीर्घनिषेधमाशङ्क्य वाच्छन्दसीति दीर्घस्य भाष्यकृतोक्तत्वेन दीर्घयोर्द्वन्द्वे दोषाभावात्।

नच यदि दीर्घयोर्निर्देशस्तदा ङिति ह्रस्वश्चेत्यत्र अनुवृत्ताभ्यां यूभ्यां ह्रस्वस्य विशेषयितुमशक्यतया ह्रस्वमात्रस्य विकल्पेन नदीत्वे मात्रे इत्यादावाडापत्तिः ह्रस्वपक्षे तु न दोषः। नच ह्रस्वपक्षे ङिति ह्रस्वश्चेति सूत्रे ह्रस्वग्रहणवैयर्थ्यम् पूर्वसूत्राद्ध्रस्वेकारोकारबोधकयूशब्दानुवृत्तावपि ग्रहणकशास्त्रबलेन दीर्घयोरपि ग्रहणेन तयोर्वैकल्पिकनदीत्ववारणाय ह्रस्वस्यैव वैकल्पिकं नदीत्वं न तु दीर्घस्येति नियमार्थं ह्रस्वग्रहणस्यावश्यकत्वादिति वाच्यम्, दीर्घनिर्देशेऽपि स्वरितत्वबलादनुवृत्तौ ईकारोकारौ यौ ह्रस्वौ इति विशेषणेन इत्वोत्वजात्यवच्छिन्ने लक्षणया इत्वोत्वावच्छिन्नौ यौ ह्रस्वावित्यर्थे पर्यवसानेन मात्रे इत्यत्र दोषाभावात्। यथा 'राधो हिंसायाम्' इत्यत्र धकारस्यैत्ववारणायानुवृत्तस्य अत एकहल्मध्ये इत्यतः अत इत्यस्य राधधातावतोऽसम्भवेन अत्वावच्छिन्नपरत्वं तथा प्रकृतेपीत्यदोषात्। नच राधोहिंसायामित्यत्र अत इत्यस्य नानुवृत्तिः एकहल्मध्ये इत्युक्त्यैव धकारस्यैत्वाप्राप्तिरिति वाच्यम्, 'फणां च सप्तानाम्' इत्यत्र अत इत्यनुवृत्तेः भ्राजभ्लाशधात्वोरन्त्यस्यैत्ववारणायावश्यकतया तत्र अतोऽत्वावच्छिन्नपरत्वाश्रयणस्यावश्यकत्वात्। न हि तत्र एकहल्मध्ये इत्यनेन निर्वाहः तयोरेकहल्मध्यस्थत्वस्याभावात्।

केचित्तु ह्रस्वयोरपि द्वन्द्वे न कश्चिद्दोषः। नच ङिति ह्रस्वश्चेति नदीत्वपक्षेऽपि घित्वापत्तौ मात्रे इत्यत्र गुणापत्तिरिति वाच्यम्, आकडारीयत्वेन निरवकाशया नदीसंज्ञया घिसंज्ञाबाधेनादोषात्। एवञ्च दीर्घान्ते यू स्त्र्याख्यौ इत्यस्य चारितार्थ्येन मत्यादिशब्दे घित्वस्यैव प्रवृत्त्या हे मते इत्यादौ दोषाभावादिति वदन्ति।

नच कार्यकालपक्षे फलाभावेन घित्वस्याप्रवृत्त्या हे मते इत्यादौ नदीत्वापत्तेर्ह्रस्वयोर्द्वन्द्वपक्षे तादवस्थ्यात्, इदानीं शेषग्रहणस्य नदी-

Jagaddhar Tripathi Collection. Digitized by eGangotri

संज्ञाबाधाभावार्थकत्वस्यापि वक्तुं शक्यत्वेन स्पष्टार्थतया वक्तुमशक्यत्वाच्च । अत एव भाष्यकृता दीर्घयोर्द्वन्द्व एवाश्रित इत्यलम् ।

ननु यू स्त्र्याख्यौ नदीति सूत्रे यूग्रहणं किमर्थम् । नच खट्वादिशब्दे नदीत्वापत्तिः ततश्च सम्बुद्धौ ह्रस्वत्वे आकाररूपापोऽभावेनैत्वानापत्तिरिति वाच्यम्, नदीमात्रमुद्दिश्य विहितस्य ह्रस्वत्वस्य आवन्तमुद्दिश्य विहितेनैत्वेन बाधेनादोषात् । नच ङिद्वचनेषु आडापत्तिर्दोष इति वाच्यम्, विशेषविहितेन याडाप इति याटाऽऽटो बाधेनादोषात् । नच खट्वाबन्धुरित्यत्र नदीबन्धुरिति पूर्वपदान्तोदात्तत्वापत्तिर्दोषः, इष्यते तु खट्वाशब्दस्य नित्स्वरेणाद्युदात्ततया पूर्वपदप्रकृतिस्वरत्वम्, किञ्च बहुखट्व इत्यत्र नद्यृतश्चेति नित्यकबापत्तिः, इष्यते तु शेषाद्विभाषेति वैकल्पिकः कबिति वाच्यम्, ह्रस्वनद्यापो नुडिति सूत्रे आवन्तस्य न नदीसंज्ञेत्यर्थज्ञापनेनादोषात् इति चेन्न ।

मातृशब्दे नदीत्वापत्त्या मात्रे इत्यादावाडापत्तेः । नच जननीवाचिनो मातृशब्दस्य स्त्रीत्वे सत्त्वेपि परिच्छेत्तृवाचिनः पुंस्त्वे सत्त्वेन लिङ्गान्तरानभिधायकत्वरूपनित्यस्त्रीत्वाभावान्न नदीत्वापत्तिरिति वाच्यम्, प्रवृत्तिनिमित्तैक्ये लिङ्गान्तरानभिधायकत्वरूपनित्यस्त्रीत्वस्य क्विबन्तकुमार्यादिशब्दे नदीत्वार्थं स्वीकर्तव्यतया प्रकृते नित्यस्त्रीत्वसत्त्वेन नदीत्वापत्तितादवस्थ्यात् । नच नद्यृतश्चेति सूत्रे ऋद्ग्रहणसामर्थ्येन ऋकारान्तस्य न नदीत्वमिति वाच्यम्, बहुकर्तृक इत्यादौ नदीत्वाविषये कबर्थं तस्य चारितार्थ्येन ज्ञापकत्वायोगात् । नच 'मातुरुत्संख्यासंभद्रपूर्वाया' इत्यादिनिर्देशान्न ऋदन्तस्य नदीत्वमिति वाच्यम्, द्योनावादीनां नदीत्वापत्तेस्तावतापि तादवस्थ्यात्, 'गोग्रहणे द्योरुपसंख्यानम्' नावो द्विगोरित्यादिनिर्देशाद्वारणे तु उपानदादिशब्दे नदीत्वापत्तिर्दोष इत्यवेहि ।

यत्तु मातुः स्वसुश्छण् नाव इत्यादीनां सौत्रत्वेनानुकरणतया शब्दस्वरूपपरतया स्त्रीलिङ्गत्वे मानाभावेन नदीत्वाप्राप्त्या निर्देशदानमसंगतमिति,

तन्न, संख्यासंभद्रपूर्वाया इति स्त्रीलिङ्गनिर्देशस्यैव तस्य स्त्रीत्वे मानत्वात् प्रकृतिवदनुकरणमिति न्यायेन स्त्रीत्वातिदेशसम्भवाच्चेत्यलम् ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

केचित्तु सत्यपि यूग्रहणे यू इति दीर्घयोर्द्वन्द्वो ह्रस्वयोर्वा। नाद्यः दीर्घाज्जसि चेति पूर्वसवर्णदीर्घनिषेधेन यू इति निर्देशासङ्गतेः, ङिति ह्रस्वश्चेत्यत्र विशेष्यविशेषणभावानुपपत्तेश्च पूर्वोक्तलक्षणया निर्वाहापेक्षया यू इत्यस्य सम्बधाभावकल्पनाया एवौचित्याच्च। एवं च मातृशब्दे नदीत्वापत्तेर्यूग्रहणसत्त्वेऽपि तादवस्थ्यात्। न द्वितीयः शकटिशब्दे नदीत्वापत्तेरित्याशङ्क्य ह्रस्वयोरेव द्वन्द्व आस्थेयस्तथा च नाद्यपक्षोक्तदोषानुषङ्गः। नच शकटिशब्दे नदीत्वापत्तिरिति वाच्यम्, शकटिशब्दे हे शकटे हे शकटि इति रूपद्वयार्थं शकटिशब्दे वैकल्पिकनदीसंज्ञाया विधानस्यावश्यकत्वेन ह्रस्वयोर्द्वन्द्व इति पक्षेऽपि तत एव निर्वाहादिति वदन्ति।

तन्न; बह्वादिगणे शकटिशब्दस्य पाठेन रूपद्वयसिद्धौ दीर्घयोर्द्वन्द्व इति पक्षे शकटिशब्दे वैकल्पिकनदीसंज्ञाविधानस्यानावश्यकत्वात् ह्रस्वयोर्द्वन्द्व इति पक्षे तदावश्यकत्वात् शकटिबन्धुरित्यत्र नदीबन्धुनीति पूर्वपदान्तोदात्तत्वापत्तेश्च, इष्यते तु पूर्वपदप्रकृतिस्वरेण शकटिशब्दघटकानां त्रयाणामपि पर्यायेणोदात्तत्वं शकटिशकट्योरक्षरमक्षरं पर्यायेणेति त्रयाणामुदात्तत्वात् बहुशकटिरित्यत्र नित्यकबापत्तेश्च। अतो दीर्घयोरेव द्वन्द्व इत्यास्थेयम्। ततश्च यू इत्यस्य ङितिह्रस्वश्चेत्यत्र सम्बन्धायोग्यतया मातृशब्दे नदीत्वापत्त्या निर्देशस्यावश्याश्रयणीयतया यूग्रहणस्याकर्तव्यत्वमेव लघीयः मातृष्वसृधोनावादिशब्दे नदीत्ववारणं तु पूर्वोक्तनिर्देशेरेव उपानदादिशब्देऽपि नदीत्ववारणं वाचोव्याहतार्थायामिति निर्देशादेवेति परे।

वस्तुतस्तु यूग्रहणस्यावश्यकत्वमेव निर्देशैः सूत्राक्षरखण्डनस्यानुचितत्वादित्यलम्।

ननु 'यू नदी' इत्येव सूत्रमस्तु। नच स्त्र्याख्यावित्यस्याभावे यू इत्यत्र दीर्घयोर्द्वन्द्वेन ह्रस्वान्तानां नदीत्वाप्राप्तावपि ग्रामण्यादीनां नदीत्वापत्तिरिति वाच्यम्, 'ङेराम्नद्याम्नीभ्य' इति सूत्रे नद्याः पृथक् नीग्रहणकरणेन आप्साहचर्येण च नित्यस्त्रीलिङ्गानामेव नदीसंज्ञेत्यर्थबोधनेनादोषादिति चेन्न।

नियां ग्रहणे स्त्रियां आख्यायामित्यत्र नयङुवङ्स्थानावस्त्री इति नदी-

CC-0. Vasishtha Tripathi Collection. Digitized by eGangotri

त्वनिषेधादत्रामादेशार्थं नीग्रहणस्य चारितार्थ्येन नित्यस्त्रीलिङ्गानामेव नदीत्वमित्यर्थज्ञापने मानाभावात् । ङेराम् सूत्रे स्त्रीलिङ्गानामेव नदीपदेन ग्रहणमित्यर्थज्ञापनेऽपि 'आण्नद्या' इत्यादौ आपोऽभावेन सहचरितिपरिभाषाया अप्रवृत्त्या, पुंशब्देभ्य आडापतेर्दुर्वारत्वाच्च तस्माद्दीर्घान्तपुंशब्दानां नदीत्ववारणाय स्त्र्याख्याग्रहणमिति बोध्यम् ।

ननु स्त्रियमाचक्षाते इति विग्रहे कर्मण्यणि 'चक्षिङः ख्याञ्' इति ख्याञादेशे आतोयुगिति युकि स्त्र्याख्यायाविति रूपेण भवितव्यम् । नच 'आतश्चोपसर्गे' इति के ततः स्त्रीशब्देन षष्ठीतत्पुरुषे रूपसिद्धिरिति वाच्यम्, अनकारान्तत्वेन चक्षिङः कप्रत्ययाप्राप्तेः । नच आर्धधातुके इति विषयसप्तम्यङ्गीकारेण पूर्वं ख्याञादेशे ततः के तत्सिद्धिरिति वाच्यम्, एवमप्यकर्मकेषु कप्रत्ययस्य चारितार्थ्येन इह परत्वादण एव प्रसङ्गात् । नच विच्प्रत्ययेन सिद्धिरिति वाच्यम्, 'अवे यजः', 'विजुपे छन्दसि' इत्युक्त्या यजेरेव विचो विधानेनेहाप्राप्तेः । नच 'अन्येभ्योऽपि दृश्यते' इत्यनेन विचस्यादिति वाच्यम्, तत्रापि छन्दसीत्यनुवृत्तेरिति चेन्न ।

'छन्दोवत्सूत्राणि भवन्ति' इति विच्सिद्धेः, 'आतोऽनुपसर्गे कः' इति कप्रत्ययेनेष्टसिद्धेश्च । नचाणा बाधः स्त्रिया आख्या स्त्र्याख्येति स्त्रीत्यस्य सम्बन्धित्वेन विवक्षणात्तदप्राप्तेरित्यलम् ।

आख्याग्रहणं स्त्रियमेवाचक्षात इति अवधारणगर्भसमासबोधनद्वारा नित्यस्त्रीलिङ्गस्य नदीत्वमित्यर्थबोधनायेति बोध्यम् ।

## आटश्च ६४

अत्र वार्तिककृतः लुङ्लङ्लृङ्क्ष्वडुदात्त इति सूत्रेण अजादीनां धातूनाम् अडेवास्तु आडजादीनामिति सूत्रं मास्तु । एवञ्च ऐधतेत्यादौ पररूपबाधनार्थम् ऐन्ददित्यादौ वृद्ध्यर्थं च अटश्चेत्येव सूत्रमस्तु । नच तथा सति अस्वपोऽहसन् इत्यत्र अड्गार्ग्यगालवयोरिति विहितस्याटः परस्य सिपस्सकारस्य अतो रोरित्युत्वेऽचपरत्वाद् वृद्ध्यापत्तिरिति वाच्यम्, 'उपसर्गादृति धातौ' इत्यतः धातोरित्यनुवर्त्य धात्ववयवेऽचि वृद्धिरित्यर्थेनादोषात् । न चैवमपि अस्वपोऽस्तीत्यादौ पूर्वान्तवद्भावेन ओकारेऽटूत्वात् धात्ववयवाच्परत्वाच्च वृद्ध्यापत्तिरिति वाच्यम्, 'आद्

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

गुण' इत्यत आदित्यनुवर्त्य अकाररूपादटोऽचि परे वृद्धिरित्यर्थेनादोषात्। एतेन अटूधातोर्ल्युटि अटनमित्यादौ वृद्ध्यापत्तिरित्यपास्तम्।

नचैवमाण्नद्या इति सूत्रेणापि अडेव विधीयतामिति वाच्यम्, बहुश्रेयस्यै इत्यत्र वृद्धिरेचीति वृद्धिं प्रबाध्यातोगुण इति पररूपापत्तेः। अटो विधानसामर्थ्यं तु न बहुश्रेयस्यामित्यत्र नुड्बाधनेन चारितार्थ्यात्। नच अटश्चेति वृद्ध्यासिद्धिरिति वाच्यम्, अस्वपोऽहसन् इत्यत्र वृद्धिवारणाय धातावित्यपकर्षस्यानुपदमुक्तत्वेन तस्य प्रकृते प्राप्त्यभावात्। तदुक्तं शेखरकृता अत्राट् तु वक्तुमशंक्य इत्यादिना। न च अटश्चेत्यस्य प्रत्याख्याने अजादीनामपि अटो विधानेन आतीदित्यत्र पररूपमाशङ्क्य 'अतो गुणे' इत्यनन्तरम् 'अटो न' इति न्यस्य पररूपनिषेधेन 'अकः सवर्णे'–इति दीर्घं आतीदित्यस्य सिद्धिरित्युक्तं शेखरे। तथा च 'आण्नद्या' इत्यनेनापि अटो विधाने न काप्यनुपपत्तिरिति वाच्यम्, अटश्चेत्यस्याभावे ऐन्ददित्यस्यासिद्धत्वापत्तेः। तत्सत्त्वे चकारेण पुनर्वृद्धिविधानेन 'अटोन' 'उस्योमाङ्क्ष्वाटः प्रतिषेध' इत्यनयोरभावादटा बहुश्रेयस्यै इत्यस्य सिद्धिरित्याशयात्।

केचित्तु 'अण्नद्या' इति न्यासेऽपि न कश्चिद्दोषः। अड्विधानसामर्थ्येनैव पररूपबाधात् न चाड्विधानं बहुश्रेयस्यामित्यत्र नुड्बाधनार्थमिति वाच्यम्, ह्रस्वनद्यापोनुडित्यनन्तरं 'ङेर्न' इति न्यस्य आमित्यनुवर्त्य ङेरामो नुड्नेत्यर्थात् नुटोऽप्रवृत्त्याऽड्विधानेन पररूपबाधने वृद्धिरेचीति वृद्धिसिद्धेरिति वदन्ति।

तन्न, 'ङेर्न' इति न्यासकरणे बहुगौरवेण अटो नुड्बाधनाय चारितार्थ्येन पररूपापत्तौ 'अण्नद्या' इत्यस्य वक्तुमशक्यत्वात्।

केचित्तु अस्वपोऽहसन्नित्यत्र पदद्वयसम्बन्धिवर्णद्वयापेक्षत्वरूपबहिरङ्गत्वेन असिद्धतयाऽटश्चेति वृद्धेरप्राप्त्या धातावित्यपकर्षे मानाभावः। नच नाजानन्तर्य इति अन्तरङ्गपरिभाषानिषेध इति वाच्यम्, तस्यानित्यत्वादसत्त्वाच्चादोषात् ततश्च 'अण्नद्या' इति करणेऽपि अटश्चेति वृद्ध्या बहुश्रेयस्यै इत्यादेः सिद्धिरिति आडजादीनामिति सूत्रं न कर्तव्यम्, अड्नद्या अटश्चेत्येवास्तु इति वदन्ति। नच आडजादीनामित्यस्याभावे आस्ताम् आसन्नित्यस्यासिद्धिरिति वाच्यम्, अन्तरङ्गत्वा-

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

त्प्रागडागमे सति वृद्धौ कृतायां श्नसोरित्यस्याप्रवृत्त्याऽदोषात् । नच वार्णादाङ्गमितिपरिभाषया वृद्धेः प्रागल्लोप इति वाच्यम्, समानाश्रयत्वाभावात् वार्णादाङ्गमित्यस्यानित्यत्वाच्चादोषात् । नच आनट् आवः इत्याद्यर्थमाड्विधानमिति वाच्यम्, छन्दस्यपि दृश्यते इत्यत्रैवाड्करणेनादोषादित्यलम् ।

## अम्बार्थनद्योर्ह्रस्वः ६८

अम्बार्थानां नद्यन्तानां च ह्रस्वः स्यात्सम्बुद्धौ इति सूत्रार्थः । अम्ब, गौरि इत्याद्युदाहरणानि । ननु गौरि इत्यादौ ह्रस्वे कृते ह्रस्वस्य गुण इति गुणः कुतो नेति चेन्न । अम्बार्थनद्योर्गुण इत्येव वक्तव्ये ह्रस्वविधिसामर्थ्याद् गुणो नेति कल्पनात् । नच पदलाघवाभावः पदलाघवाभावेऽपि मात्रालाघवसत्त्वात् इतोऽनुवृत्त्यैव सिद्धे 'ह्रस्वस्य गुण' इत्यत्र गुणग्रहणाकरणेन पदलाघवस्यापि सत्त्वाच्च इति प्राञ्चः ।

नन्विदमयुक्तम् । 'अम्बार्थनद्योर्गुण' इत्युक्तौ अदेङ्निष्ठविधेयतासमर्पकगुणपदश्रुत्या इक्परिभाषोपस्थित्या इगन्ताम्बार्थनद्योर्गुणः सम्बुद्धावित्यर्थापत्तौ अम्बार्थकमातृशब्दे गुणसिद्धावपि अम्बादिशब्दे गुणानापत्त्या हे अम्ब इत्यादीनामसिद्ध्यापत्तिः 'डलकवतीनां प्रतिषेधो वक्तव्यः' इति वार्तिकारम्भेण इक्परिभाषानुपस्थितिकल्पने तु 'अनः क्लीवं जले शोके मातृस्यन्दनयोरपि' इति कोशावगतमातृपर्यायानःशब्दस्य सम्बुद्धौ गुणापत्त्या मात्राद्वयन्यूनकालिकत्वरूपप्रमाणकृतान्तर्येण सकारस्याकारादेशापत्तिः अतः 'अम्बार्थनद्योर्गुण' इत्यस्य वक्तुमशक्यतया ह्रस्वग्रहणसामर्थ्याभावेन हे गौरीत्यादौ गुणापत्तिर्दुर्वारा 'अम्बार्थनद्योर्ह्रस्व' इति यथाश्रुतसूत्रसत्त्वे अचश्चेति अच्परिभाषोपस्थित्या अनः इत्यत्र नातिव्याप्तिर्नवाऽम्बेत्यत्राव्याप्तिः । किन्तु 'ह्रस्वस्य गुणः' 'अम्बार्थनद्योर्ह्रस्वः' इत्यनयोः स्थाने 'ह्रस्वनद्योर्गुणः' 'अम्बार्थानां ह्रस्व' इत्येव वक्तव्ये नद्यन्तानां ह्रस्वविधानसामर्थ्येन न गुण इत्येव शेखरोक्ता कल्पना युक्ता इति चेद्—

न, अनःशब्दस्य क्लीवतया स्वमोर्लुकि नलुमतेतिनिषेधे प्रत्ययलक्षणाभावेन सम्बुद्धिपरत्वाभावाद् गुणाप्राप्त्या इक्परिभाषानुपस्थितिकल्पे दोषाभावेन 'अम्बार्थनद्योर्गुण' इत्येव वक्तव्ये ह्रस्वकरणसामर्थ्येन

CC-0. Vasishtha Tripathi Collection. Digitized by eGangotri

गुणो नेति प्राचीनोक्तस्य सौष्ठवात् प्रत्युत 'ह्रस्वनद्योर्गुणः' 'जसिच' 'अम्बार्थानां ह्रस्व' इति शेखरोक्तकल्प एव जसिचेत्यत्र ह्रस्वपदस्येव नदीपदस्याप्यनुवृत्त्या गौर्य इत्यादावपि गुणापत्तेश्च।

अत्र नवीनाः प्राचीनन्यासे अनःशब्दे नपुंसके सोर्लुक्यपि नलुमतेतिनिषेधस्यानित्यतया हे वारे हे वारीत्यत्रेव मात्रिकगुणापत्त्या 'ह्रस्वनद्योर्गुण' इति शेखरोक्तन्यासस्यैवौचित्यात्। न च तस्मिन्पक्षे 'जसिच' इत्यत्र नदीपदस्याप्यनुवृत्त्यापत्तौ गौर्य इत्यादौ गुणापत्तिरिति वाच्यम्, 'क्वचिदेकदेशोऽप्यनुवर्त्तते' इति परिभाषया एकदेशस्यैवानुवृत्तिस्वीकारेण गौर्य इत्यादौ दोषाभावादिति।

अत्र प्राचीनानुयायिनः 'अम्बार्थनद्योर्गुण' इति प्राचीनन्यासे पदलाघवसत्त्वेन नदीसाहचर्येण 'अम्बार्थानां स्त्रीलिङ्गानामेव ग्रहणम्' इत्याश्रित्य अनःशब्दे दोषाभावेन च प्राचीनोक्तेरेव रमणीयत्वं शेखरोक्तन्यासे तु एकदेशानुवृत्तिक्लेशसहनम् अस्मादेवापरितोषात् भाष्ये 'एवं तर्हि योगविभागः करिष्यते 'अम्बार्थनद्योर्ह्रस्वः' ततो 'ह्रस्वस्य' ह्रस्वस्य ह्रस्वो भवति संबुद्धौ किमर्थमिदं गुणं वक्ष्यति तद्बाधनार्थम् ततो 'गुणः' गुणश्च भवति ह्रस्वस्य इत्युक्तमिति वदन्ति।

अत्र नवीनानुयायिनः प्राचीनोक्तन्यासे अतः इत्यत्र गुणवारणाय सहचरितपरिभाषाश्रयणे विनिगमनाविरहादिगन्तत्वेनैव साहचर्यग्रहणापत्तौ मातृशब्दे गुणं विधाय चरितार्थस्य अम्बार्थनद्योरितिशास्त्रस्य अम्बादिशब्देऽप्रवृत्त्यापत्तिः शेखरोक्तकल्पीयन्यासे च संख्याव्ययादेरित्यत्रैकदेशे स्वरितत्वप्रतिज्ञया-'दामहायनान्ताच्च' इत्यत्र संख्यादेरित्येकदेशानुवृत्तिवत् जसि चेत्यत्र एकदेशानुवृत्त्या सकलेष्टसिद्धिः यदप्युक्तमित एवापरितोषात्। 'एवं तर्हि योगविभागः करिष्यत' इत्यादि भाष्यमिति तदपि न, उपायस्योपायान्तरादूषकत्वेन समाधानान्तरानुसरणे दोषाभावात्। अत एव भाष्ये योगविभागमभिधाय अथवा ह्रस्वस्य गुणः इत्यत्र अम्बार्थनद्योरित्यनुवर्तते इत्युक्तरीत्येति वदन्ति।

अत्र प्राचीनानुयायिनः यदुक्तं विनिगमनाविरहादिगन्तत्वेन साहचर्याश्रयणापत्तौ अम्बादिशब्दे गुणापत्तिरिति तन्न, 'इलकवतीनां प्रति-

Vasishtha Tripathi Collection. Digitized by eGangotri

षेधो वक्तव्य' इति वार्तिकारम्भात् मातृनद्योरित्येव वक्तव्ये अम्बार्थग्रहणसामर्थ्यात् मातृशब्दे ऋतोङीतिसूत्रेण गुणस्य सिद्धत्वाच्च, इगन्तत्वेन साहचर्यस्याश्रयितुमशक्यत्वात् यदप्युक्तं नलुमतेत्यस्यानित्यत्वाद् गुणापत्तिरनःशब्दे इति तन्न, नलुमतेत्यस्यानित्यत्वेऽपि इष्टस्थलेऽप्यप्रवृत्त्यापत्तौ सूत्रस्यैव निर्विषयत्वापातात् यच्चोक्तं दामहायनान्ताच्चेत्यत्रेव एकदेशानुवृत्तिरिति तदपि न, नास्माभिरुच्यते शास्त्रे क्वचिदेकदेशानुवृत्तिर्न भवतीतिकिंतर्हि तावन्मात्रे स्वरितत्वकल्पनागौरवमिति । न च भाष्ये शेखरोक्तन्यासस्यैवोक्तत्वात्तस्यैव युक्तत्वमिति वाच्यम्, पदलाघवसत्वेऽपि भाष्यानुक्तत्वमात्रेण प्राचीनोक्तन्यासस्य दुष्टत्वकल्पनायोगादिति प्राहुः ।

## सर्वनाम्नः स्याड्ढ्रस्वश्च ६६

अत्र 'सर्वनाम्नोऽसुङ्' इत्येव सूत्रमस्तु ङिद्वचने परत आवन्तस्य सर्वनाम्नोऽसुङ् स्यादिति तदर्थः । तथा च अपरनिमित्तकत्वेन संज्ञानपेक्षत्वेन वाऽन्तरङ्गत्वाद्याटि ततोऽसुङि सर्वस्यै इत्यादेः, असुङः आपूस्थानिकत्वेन प्रत्ययत्वादमुष्यै इत्यादौ षत्वस्य, च सिद्धेः स्याड्ग्रहणं ह्रस्वग्रहणं च व्यर्थम् । न च 'अदस्शब्दान्ङेविभक्तौ त्यदाद्यत्वे टापि याटि ततोऽसुङि सान्तादशब्दत्वाद् 'अदसोऽसेर्दादुदोम' इति मुत्वानापत्त्या अमुष्यै इत्यादेरसिद्ध्यापत्तिरिति वाच्यम्, अः सेस्सकारस्य यत्र सः असिः तस्य असेरिति व्याख्यानस्य अदः, अदोऽत्र, अदस्यतीत्यत्र मुत्ववारणार्थं कृतस्य अदसोऽनोस्त्रेरिति वार्तिकस्य प्रत्याख्यानायावश्यकेन तेनैव मुत्वसिद्धेरिति चेन्न । व्याख्यानभेदेन अमुमुयङ् अदद्र्यङितिरूपद्वयवत्प्रकृतेऽपि अदस्यै अमुष्यै रूपद्वयापत्तेरेव दोषत्वात् । न च सहेतुकवाक्यस्यैव प्रमाणत्वेन, 'अदसोऽद्रेः पृथङ् मुत्वं केचिदिच्छन्ति लत्ववत् । केचिदन्त्यसदेशस्य नेत्येकेऽसेर्हि दृश्यते' इति कारिकायां प्रधानार्थकैके इत्युक्त्या च अदद्र्यङिति रूपस्यैव परमनवीनैः सिद्धान्तितत्वेन अः सेर्यत्रेति पक्षस्यैव मुख्यत्वमवगम्यते ततश्च अमुष्यै इत्यस्य सिद्धौ न किमपि बाधकमिति वाच्यम् , अपरनिमित्तकत्वरूपान्तरङ्गत्वस्य याटीव अपूर्वनिमित्तकत्वरूपान्तरङ्गत्वस्यासुङि सत्त्वात्, संज्ञाकृतबहिरङ्गत्वस्यनाश्रयणात्, नित्यत्वाच्च पूर्वमसुङि आवन्तत्वाभावेन या-

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

टोऽप्रवृत्त्या सर्वस्यै इत्यादेरसिद्ध्यापत्तेः। न च 'सर्वनाम्नोऽसुड्च' इति न्यस्य चेन याटोऽपि अनेनैव विधानात् सर्वस्यै इत्यादेः सिद्धिरिति वाच्यम्, 'विभाषा द्वितीयातृतीयाभ्याम्' इति विनिगमनाविरहादसुड इव याटोऽपि वैकल्पिकत्वापत्तौ द्वितीयायै इत्यस्यासिद्ध्यापत्तेः। न च असुड्समुच्चितयाटो वैकल्पिकत्वस्य तेन बोधनेऽपि याडाप इति विहितयाटो वैकल्पिकत्वस्याबोधनात्, 'तीयस्य ङित्सूपसंख्यानम्' इत्यारभ्य विभाषाद्वितीयेत्यस्य प्रत्याख्यानाच्च, द्वितीयायै इत्यस्य सिद्धौ बाधकाभाव इति वाच्यम्, असुडो याडपवादत्वेन तद्विषये याटो दुर्लभत्वात् न च सर्वनाम्नोऽसुड्, ङितोयाडिति विषयभेदात्कथं बाध्यबाधकभाव इति वाच्यम्, 'अचि र ऋत' इति रादेशस्य बाध्यसामान्यचिन्तया नुडपवादत्वमाशङ्क्य 'न तिसृचतसृ' इति दीर्घत्वनिषेधात् ज्ञापकाद्रादेशो न नुडपवाद इति भाष्येण विषयभेदेऽपि बाध्यबाधकभावावगमात्। न च सर्वनाम्नोऽस्याङिति न्यासान्न क्वापि दोष इति वाच्यम्, अस्यै इत्यादौ हलादिविभक्तिपरत्वाभावेन 'हलिलोप' इत्यस्याप्रवृत्त्या अस्यै इत्यादेरसिद्ध्यापत्तेः। न च 'अन् टौसोरकः' अपि लोप इति न्यासात् अस्यै इत्यस्य सिद्धिरिति वाच्यम्, ताशब्दे आद्युदात्तत्वबुद्धावदोषेऽपि अन्तोदात्तत्वबुद्ध्याऽन्तोदात्तेऽस्याआदेशे एकादेश उदात्तनोदात्त इति विभक्तेरुदात्ततापत्तेरित्यलम्।

यत्तु अस्यआदेशं विधायाकारोच्चारणसामर्थ्यान्न पररूपमिति केचित्तन्न, अकारस्योच्चारणार्थताया वक्तुमशक्यतया तेन पररूपवाधायोगात्।

वस्तुतस्तु 'आमि सर्वनाम्नः सुट्' 'याटो ह्रस्वश्च' इति सूत्रयितुमुचितम्। नच याट एव ह्रस्वापत्तिरिति वाच्यम्, याटो दीर्घोच्चारणसामर्थ्येन ह्रस्वत्ववारणात्। न च पररूपवारणाय दीर्घोच्चारणमिति वाच्यम्, अकारोच्चारणसामर्थ्येनैव तद्वारणादिति मनोरमाकृतः।

केचित्तु अश्वत्तीरेत्यनन्तरं 'सर्वनाम्नो याटः सुट्' इति न्यस्य ततः 'आमि'-ततः 'त्रेस्त्रय' इति एवं च मण्डूकप्लुतेरपि नाश्रयणमिति महल्लाघवम्। अथवा 'आमि सर्वनाम्नः सुट्' इत्यनन्तरं 'याटोऽच्च'

CC-0. Vasishtha Tripathi Collection. Digitized by eGangotri

इति न्यासोऽस्तु तथा च याटः सुट् सर्वनाम्नोऽकारोऽन्तादेशश्च स्यादिति वदन्ति ।

व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः ६७

नन्वस्मिन् सूत्रे भ्राजग्रहणं किमर्थम् फणादिना राजिना साहचर्येण फणादेर्विभ्राडिति एजृभ्राजृदीप्तावित्यत्र विभ्रागितिरूपद्वयस्येष्टत्वेन सूत्रे भ्राजिग्रहणस्याभावेऽपि भ्राशधातोश्शान्तत्वेन षत्वे विभ्राडिति भ्राजधातोः कुत्वेन विभ्रागिति रूपद्वयस्य सुसाधत्वादिति चेन्न ।

विभ्राज्शब्दाण्णिचि टिलोपे क्वौ विभ्र् तत्रैकदेशविकृतन्यायेन भ्राजिशब्दत्वेन षत्वे खरिचेति चर्त्वं जश्त्वचर्त्वयोः भकारस्य इष्टस्य विप्ट् इत्यस्यासिद्ध्यापत्तेः । नचोपसर्गसमानाकारमिति वीत्यस्य पृथक्करणेन प्रकृत्यैकाजिति प्रकृतिभावे टिलोपो नैव तत्र भवतीति वाच्यम्, एवमपि परमशब्देन भ्राजशब्दस्य समासे तत्र पृथक्करणाभावेन इष्टस्य परमप्ट् इत्यस्यासिद्ध्यापत्तेरित्यलम् ।

ङिति ह्रस्वश्च ६८

ननु 'ङिति ह्रस्वश्च' 'वामि' इत्यनयोः स्थाने 'वाचि ह्रस्वश्च' इत्येव सूत्रमस्तु इयङुवङ्स्थानौ स्त्रीशब्दभिन्नौ नित्यस्त्रीलिङ्गौ यौ ईदूतौ, ह्रस्वौ च याविवर्णोवर्णौ स्त्रियां वर्तमानौ, तौ नदीसंज्ञौ स्तोऽजादौ प्रत्यये इत्यर्थेन मत्यै मतये श्रीणाम् श्रियामित्यादिसिद्धेरिति चेन्न ।

सन्निपातपरिभाषाज्ञापनाय वामीति सूत्रस्यावश्यकत्वात् । तथा हि-श्रीणामित्यत्राजादित्वमुपजीव्य जायमाना नदीसंज्ञा अजादित्वविघातकनुटो निमित्तं न स्यात् वामीतिसूत्रसत्त्वे तु नुड्विशिष्टे यदागमन्यायादास्त्वेन सन्निपातविघाताभावः स्पष्ट एव । यदि परिभाषा न स्यात्तर्हि पूर्वोक्तन्यासेनैव सिद्धे वामीति सूत्रं किमिति कुर्यात । न च ममापि यदागमपरिभाषया नुटयपि अजादित्वसत्त्वान्न सन्निपातविघात इति स्वांशे चारितार्थ्याभाव इति वाच्यम्, आने मुगिति ज्ञापकेन वर्णग्रहणे यदागमपरिभाषाया अप्रवृत्त्या वर्णत्वव्याप्यधर्मघटितत्वेन अजादित्वादेर्यदागमपरिभाषया अतिदेशासंभवात् । किञ्च वाचि ह्रस्वश्चेतिन्यासे

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

मतिश्चोमा चेति द्वन्द्वेऽच्परत्वेन नदीत्वेन घित्वाभावे पूर्वनिपातानापत्तेश्च। न च मतिश्च चित्रङ्गु चेति द्वन्द्वे सिद्धान्तेऽपि ङित्परत्वेन नदीत्वाद्धित्वाभावे पूर्वनिपातो न स्यादतः प्रत्ययाक्षेपस्यावश्यकत्वान्ममापि प्रत्ययाक्षेपान्न दोष इति वाच्यम्, ङिति ह्रस्वश्चेत्यत्र नित्यस्त्रीत्वसंबन्धो, वामीति सूत्रे च अतिश्रियां ब्राह्मणानामतिश्रीणां ब्राह्मणानामित्येतत्सिद्ध्यर्थं तदसंबन्ध, इति भाष्यीयसिद्धान्तस्य 'वाचि ह्रस्वश्च' इति न्यासे उपपत्त्यभावेन तादृशन्यासस्य कर्तुमशक्यत्वादित्यलम्।

## अतोऽम् ६९

नन्वत्र 'मतः' इत्येव सूत्रमस्तु अदन्तात्क्लीबात्स्वमोर्मादेशः स्यादिति तदर्थः। नच यच्छब्दयोगः प्राथम्यमित्युद्देश्यस्य लक्षणम्' इत्यभियुक्तोक्त्या विधेयस्य पूर्वमप्रयोग एव युक्त इति वाच्यम्, 'अपृक्त एकाल्प्रत्यय' इत्यादौ विधेयस्य पूर्वं प्रयोगदर्शनेन तादृशाभियुक्तोक्तेः प्रायोवादाभिप्रायकत्वात्। अस्तु वा 'अतोम्' इत्येव यथाश्रुतं सूत्रं किन्तु 'म्' इत्येव च्छेदः करिष्यते इति तादृशेर्थे बाधकाभावात्। न च 'म्' इति च्छेदे 'अम्' इति च्छेदे वा न किञ्चिल्लाघवमिति वाच्यम्, अमिति च्छेदे एङ्ह्रस्वादिति सूत्रे हल्पदानुवर्त्तनं संबुद्धेर्हलि व्यधिकरणान्वयः संबुद्ध्याक्षिप्तस्याप्यङ्गस्य हल्यन्वयः 'म्' इति च्छेदे तु एङन्ताद्ध्रस्वान्ताच्चाङ्गात्संबुद्धिर्लुप्यत इत्यर्थेन न कुलेत्यादौ दोष इति लाघवसत्त्वात्। न च ज्ञानमित्यादौ सोर्मादेशे सुपिचेति दीर्घापत्तिरिति वाच्यम्, सन्निपातपरिभाषया दीर्घवारणेनादोषात्। न च 'कष्टाय क्रमणे' इत्यादिनिर्देशेन सुपिचेति दीर्घे सन्निपातपरिभाषा न प्रवर्तते इति वाच्यम्, तन्निर्देशेन 'ङेर्य' इति शास्त्रीयाभ्यनुज्ञावाक्ये मदुत्तरप्रवृत्तिमता मदीसन्निपातविघातकातिरिक्तेन यद्बोध्यते तदपि साध्वित्येवं रूपे मदीयसन्निपातविघातकपदार्थे सुपि च इत्येतद्व्यतिरिक्तत्वेन संकोचे निर्देशोपपत्त्या 'अतोम्' इति शास्त्रीयाभ्यनुज्ञावाक्ये तादृशसंकोचे मानाभावात्। अत एव 'सुपिचेति दीर्घो यद्यपि परस्तथापीह न प्रवर्तते सन्निपातपरिभाषाविरोधात्' इति कौमुदी ग्रन्थः संगच्छते, अन्यथा सामान्यतः 'सुपि च' इति दीर्घे सन्नि... परिभाषाऽप्रवृत्तिकल्पने तदसंगतिः स्पष्टैव। न च दीर्घान्ते... सकहस्वत्वेन 'अत' इति ... ...

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

मात्राकालिकत्वसमानाधिकरणात्वरूपस्यात्त्वस्य उच्चारणार्थतया न निमित्तत्वं किन्तु अत्वमात्रस्यैवेति तस्य दीर्घेऽपि सत्त्वेन सन्निपातविघाताभाव इति वाच्यम्, यथोः सन्निपातस्य विघातकं शास्त्रं तयोरुपादानमपेक्षितमिति तु नाग्रह इति शेखरोक्त्या यादृशशब्दसन्निपातेन सोरादेशस्तस्य विनाशेनादोषात् । अतएव दाक्षिरित्यादौ अङ्गसंज्ञाऽलोपस्य निमित्तं नेत्याशङ्क्य अनित्यत्वेन समाहितं भाष्ये । अश्च आश्च इति इति समाहारद्वन्द्वे अपरनिमित्तकत्वेनान्तरङ्गत्वात्प्रथमं ह्रस्वत्वे ततो दीर्घे लक्ष्ये लक्षणन्यायेन पुनर्दीर्घाभावे 'आ' इत्यस्मात्सोरमादेशवारणाय मात्राकालिकत्वस्यापि निमित्तकोटौ प्रवेशस्यावश्यकत्वाच्च । न च 'अत' इति तपरकरणं स्पष्टार्थमिति मनोरमाविरोध इति वाच्यम्, न हि युक्तिवलाद्वस्तुसिद्धौ कस्य चिद् ग्रन्थकृतो विपरीतलेखनं वस्तुबाधकमितितादृशग्रन्थस्य चिन्त्यत्वात् । न च द्वितीयैकवचने 'आदेः परस्य' इति परिभाषया अकारस्य मकारे मद्वयश्रवणापत्तिरिति वाच्यम्, संयोगान्तलोपेन रूपसिद्धेः । न च 'यणः प्रतिषेधो वाच्य' इति वार्तिकप्रत्याख्यानाय 'झलो झलि' इत्यतो झल्ग्रहणमपकृष्य संयोगान्तस्य झल एव लोपविधानेन न प्रकृते संयोगान्तलोपप्राप्तिरिति वाच्यम्, 'अमो मश्' इति सूत्रे मद्वयात्मकमादेशं विधाय शित्त्वप्रत्याख्यानपरभाष्येण 'संयोगान्तस्य लोप' इत्यत्र वाक्यभेदः प्रतीयते । तथा हि—संयोगान्तस्य लोपो भवतीति आद्यवाक्यस्य अर्थः । संयोगान्तस्य झलो लोपो भवतीति द्वितीयस्यार्थः । तत्र पूर्ववाक्येणैव सिद्धे उत्तरवाक्यं तस्य क्काचित्कत्वं बोधयति तेन कचिदझलोऽपि लोप इत्यदोषात् । अत एव गिरौ वेश्म यस्य स गिरिवेश्मा तं करोति गिरिवेश्मयतीति गिरिवेडित्यत्र न फलभेदः अन्यथा 'यणः प्रतिषेध' इति पक्षे संयोगान्तलोपस्य, झलीस्यपकर्षपक्षे तदभावस्य सत्त्वेन फलभेदेन प्रत्याख्यानासंगतिः स्यात् । न च द्वितीयैकवचने अतिजरसमिति रूपासिद्धिः मादेशे जातेऽजादिविभक्तिपरत्वाभावेन जरसादेशाप्राप्तेरिति वाच्यम्, अमि लुकोऽपवादमम्भावं बाधित्वा परत्वाज्जरसिति मूलेनैव दत्तोत्तरत्वात् । सौ जरसादेशानापत्तिरपि न दूषणम् अमादेशेऽपि तत्र सन्निपातपरिभाषया जरसादेशस्यानित्यत्वात् । न च द्वितीयैकवचने शेखरकृन्मते

Mahesh Nath Tripathi Collection. Digitized by eGangotri

पूर्वविप्रतिषेधेन विभक्त्यादेशानामेव सत्त्वेन अजादिविभक्तिपरत्वाभावेन जरसादेशानापत्तिरिति वाच्यम्, सन्निपातपरिभाषया तत्र जरसादेशस्यानिष्टत्वेन अतिजरमित्यस्यैव तत्रेष्टत्वादिति चेत् सुवच एवायं छेद इत्यलम्।

ननु 'डतरादीनां पञ्चानां दुक्' इत्येव न्यासोस्तु स्वमोः परतो दुकि ततः स्वमोर्लुकि रूपसिद्धेरिति चेन्न।

कतरशब्दाण्णिचि टिलोपे क्वौ णिलोपे कतर् इति स्थिते दुकि कतद् इति रूपापत्तेः इष्यते तु कतरदिति। प्रथमटिलोपस्य स्थानिवत्त्वेन पुनष्टिलोपाभावात् एवं तदनुकरणे स्त्रीत्वविवक्षायामुगितश्चेति ङीबापत्तेः। उक्तङीबन्तात्तरप्रत्यये उगितश्चेतिवैकल्पिकह्रस्वापत्तेश्चेति।

वस्तुतस्तु सर्वाद्यन्तर्गणकार्यत्वेन अद्ड्डो दुको वा उपसर्जनेऽप्रवृत्त्या, अतोमित्यतः अतः इत्यस्यानुवर्तनेन अदन्तानां डतरादीनां ग्रहणेन वा तादृशकतर्शब्देऽदोषात्। अत एव तदनुकरणे ङीबाद्यापत्तिरपि न प्रकृतिवदनुकरणमित्यस्यानित्यत्वेनोगित्त्वातिदेशासंभवाच्चेति अस्मिन्न्यासे दूषणं चिन्त्यमिति परे।

## टेः ७१

भस्येति किं पञ्चमः इति। ननु टेरिति सूत्रे भस्येत्यस्यानुवृत्तिस्वीकारे कतरत् भवान् इत्यादौ डित्त्वसामर्थ्यादभस्यापि टेर्लोप इति स्वीकारे क्लेश इति भस्येत्यस्यानुवृत्तिर्मास्तु डिति परे टेर्लोपो भवतु इत्येव सूत्रार्थोऽस्तु इति चेन्न। पञ्चानां संख्यानां पूरणः पञ्चम इत्यत्र पञ्चन्शब्दाड्डट्प्रत्यये तस्य नान्तादसंख्यादेर्मडिति मडागमे तद्विशिष्टस्य यदागमपरिभाषया प्रत्ययत्वेन हलादित्वेन च तस्मिन्परतः पदत्वेन च पदत्वे नलोप इष्यते इदानीं टेरिति टिलोपापत्तेः।

ननु तस्य पूरणे टट् इत्येव न्यासोऽस्तु तथा च डित्त्वाभावान्न टिलोपः। नच प्रथमटकारो व्यर्थः फलाभावादिति वाच्यम्, एवमपि लाघवादट एव वक्तुं शक्यत्वादिति चेन्न।

एकादश इत्यस्यासिद्धत्वापत्तेः। तथा हि—डटि डित्त्वाट्टिलोपेन एकादश इति सिध्यति अटि तु डित्त्वाभावेन टिलोपाप्राप्त्या तदसिद्धिः स्यादिति। नच नस्तद्धित इत्येव तत्र टिलोपो भविष्यतीति वाच्यम्,

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

विंशतेः पूरणः विंश इत्यस्यासिद्ध्यापत्तेः । तथा हि—डटि तिविंशतेर्डितीति टिलोपेन तत्सिद्धेरिदानीं डित्प्रत्ययपरत्वाभावेन तन्न स्यात् । नच तत्र तिविंशतेरटीत्येव सूत्रमस्तु इति वाच्यम्, आसन्नविंशा इत्यत्र बहुव्रीहौ संख्येये डजबहुगणादिति डचि टिलोपानापत्तेः न च 'बहुव्रीहौ संख्येये'–इत्यनेनाप्यडेव विधीयतामिति वाच्यम्, टेरित्यत्र अटीत्यस्य सम्बन्धे स्त्रीत्यस्यासिद्ध्यापत्तेरसम्बन्धे राज्ञ इत्यादावपि टिलोपापत्तेश्च । तथा हि–स्त्यायतेर्ड्रट् इति स्त्याधातोर्ड्रटि टिलोपे यकारस्य लोपोव्योरिति लोपे टित्वान्ङीपि स्त्रीति सिध्यति । न च ऋटं विधायाऽऽलोपेन तत्सिद्धिरिति वाच्यम्, एवमपि पञ्चमइत्यस्यासिद्धितादवस्थ्येन भस्येत्यस्य सम्बन्धावश्यकत्वादित्यलम् ।

इकोचि विभक्तौ ७२

नन्वस्मिन् सूत्रे अज्ग्रहणं किमर्थम् । नच तदभावे सौ नुमापत्तिः तस्य लुका लुप्तत्वेन प्रत्ययलक्षणाभावेन विभक्तिपरत्वाभावेन नुमोऽप्राप्तेः । नच भ्यामादौ नुमापत्तिः सत्यपि नुमि नलोपेन सिद्धेः । नच पञ्चत्रपुभ्य इत्यादौ नुमि नलोपेऽपि तस्य स्वरविधावसिद्धत्वेन इगन्तोत्तरपदत्वाभावाद् 'इगन्तकालकपालभगालशरावेषु द्विगौ' इति स्वरो न स्यादिति वाच्यम्, समुदायविभक्तौ नुम् नावयवस्येगन्तताविघातक इति इगन्तोत्तरपदद्विगुत्वप्रयुक्तपूर्वपदप्रकृतिस्वरे बाधकाभावात् अन्तरङ्गत्वान्नुमः पूर्वमेव स्वरप्रवृत्तेश्च । नच अतिराभ्यामित्यादौ नुमि निर्दिश्यमानस्य नुमा व्यवधानादात्वं न स्यादिति वाच्यम्, नुमं बाधित्वा परत्वादात्वस्यैव प्रवृत्याऽदोषात् । नच 'वृद्ध्यौत्वतृज्वद्भावगुणेभ्यो नुम् पूर्वविप्रतिषेधेन' इति वार्तिकात्पूर्वं नुमेव स्यादिति वाच्यम् । तस्मिन्वार्तिके औत्वस्य पृथगुपादानेन वृद्धिशब्देन विहितवृद्धेरेव तत्र ग्रहणेनादोषात् । एवं प्रियतिसृभ्यामित्यत्रापि नुमः परत्वात्तिस्रादेशेऽदोषो बोध्यः ।

न च शुचीनामित्यत्र 'नुमचिरतृज्वद्भावेभ्यो नुट् पूर्वविप्रतिषेधेन' इति वार्तिकात्पूर्वं नुटयपि ततो नुमि अजन्ताङ्गत्वाभावाद् दीर्घो न स्यात् । न च 'नोपधाया' इत्येव तत्र दीर्घोऽस्तु इति वाच्यम्, इन्हन्निति नियमेन दीर्घाप्राप्तेरिति वाच्यम्, सकृद्गतिन्यायेन तत्र नुड्डुत्तरं नुमोऽप्राप्त्याऽदोषात् ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

न च बहुभिः कुलैरित्यत्र नुमि षट्त्वात् झल्युपोत्तममितिस्वरः स्यादिति वाच्यम्, नुमोऽभावेऽपि बहुशब्दस्यान्तोदात्ततया स्वरे विशेषाभावात्। न च अज्ग्रहणम् 'अस्थिदधिसक्थ्यक्ष्णामनङुदात्त' इत्यत्रोत्तरार्थमिति वाच्यम्, तत्रैव कर्तुं युक्ततया इह करणस्यानुचितत्वादिति चेन्न।

अज्ग्रहणस्य न लुमतेति निषेधानित्यत्वज्ञापनायावश्यकत्वात् तेन हे वारे हे वारीति सिद्धम्। तथा हि अज्ग्रहणाभावे नलुमतेतिनिषेधानित्यत्वेऽपि नुमि ह्रस्वान्तत्वाभावेन गुणो न स्यात् तत्सत्त्वे तु ह्रस्वान्तत्वसत्त्वाद् नलुमतेति निषेधानित्यत्वेन नुमोभावपक्षे प्रत्ययलक्षणेन गुणः स्यात् इति अज्ग्रहणं स्वांशे चरितार्थमिति बोध्यम्।

तदुक्तं भाष्ये—इकोऽचिव्यञ्जने माभूदस्तु लोपः स्वरः, कथम्। स्वरो वै श्रूयमाणेऽपि लुप्ते किन्न भविष्यति। १। रायात्वं तिसृभावश्च व्यवधानान्नुमा अपि। नुड्वाच्यं उत्तरार्थं तु इह किञ्चित्रपो इति। २। इत्यलम्।

## सावनडुहः ७३

ननु 'वसुस्रंसुध्वंस्वनडुहां दः इत्यस्य स्थाने वसुस्रंसुध्वंस्वनडुहां डुरित्येव न्यासोऽस्तु तथा चोगित्वसामर्थ्यादसिद्धत्वं बाधित्वा उगिदचामिति नुमि अनड्वानित्यादेः सिद्धौ 'सावनडुह' इतीदं सूत्रं किमर्थम्। न च तथा सति स्त्रीत्वे वर्तमानादनडुह् शब्दात्तरप्प्रत्यये पदत्वेन हकारस्य डुः तत उगितश्चेति ङीपि अनडुदीतरेत्यत्र उगितश्चेति ह्रस्वविकल्पापत्तिरिति वाच्यम्, ऐपुमतीतरेत्यत्र ह्रस्वविकल्पवारणाय विहितविशेषणाश्रयणेनादोषात् गौरादिङीषा ङीपो बाधाच्चेति चेन्न।

स्वनड्वान् स्त्रीत्यत्र उपसर्जनत्वेन गौरादिङीषोऽप्राप्त्या उगितश्चेति ङीबापत्तेः। न च पदत्वमुपजीव्य प्रवृत्तं डुत्वं पदत्वविघातकङीपोऽनिमित्तमिति ङीप् न स्यादिति वाच्यम्; ङीपः साक्षात्पदत्वविघातकत्वाभावात्। न च यथा आधये इत्यादौ परम्परया गुणनिमित्तसुब्विघातिकाया अव्ययसंज्ञायाः सन्निपातपरिभाषया गुणोऽनिमित्तं तथेहापि परम्परया डुत्वनिमित्तपदत्वविघातकस्य ङीपः सन्निपातपरिभाषया डुत्वमनिमित्तमिति वाच्यम्, परम्परया सन्निपातविघातकस्य सन्निपातविघातक-

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

शास्त्रीयोद्देश्यतावच्छेदकसंज्ञाविधायके शास्त्रातिरिक्तशास्त्रस्याऽनिषेधात्। तथाहि—आधये इत्यादौ परम्परया गुणनिमित्तविघातकशास्त्रम् 'अव्ययादाप्सुप' इति तदीयोद्देश्यतावच्छेदिका संज्ञा अव्ययसंज्ञा तद्विधायकं शास्त्रं 'कृन्मेजन्त' इति तस्यानिमित्तं कामं गुणो भवतु परन्तु प्रकृते दुत्वनिमित्तपदत्वविघातकं शास्त्रं यचिभमिति तदीयोद्देश्यतावच्छेदिका न काचित्संज्ञेति न तद्विघातकं शास्त्रमुणिश्चेति। किन्तु तदतिरिक्तं जातमिति सन्निपातपरिभाषया तदवारणात्। अतएव ऊखतुरित्यादौ सवर्णदीर्घादीनां प्रवृत्तिः, अन्यथा द्विरुक्तधातुपूर्वभागनिमित्तिका अभ्याससंज्ञा, लोपे सति दीर्घे स्वनिमित्तपूर्वापरीभावविघातिकेति सापि लोपदीर्घादीनामनिमित्तं स्यादित्यलम्।

## षट्चतुर्भ्यश्च ७४

षट्संज्ञकेभ्यश्चतुरश्च परस्यामो नुडागम इति सूत्रार्थः। नन्वस्मिन्सूत्रे चतुर्ग्रहणं किमर्थम् ष्णान्ताषडित्यत्र ष्णरान्ता षडिति न्यस्य रेफान्तसंख्याया अपि षट्त्वविधानेन चतुर्णामित्यत्र नुट्सिद्धेः। न च तथा सति चत्वार इत्यादौ षड्भ्यो लुगिति जश्शसोर्लुगापत्तिरिति वाच्यम्, अषड्भ्यो लुगिति न्यस्य रेफान्तभिन्नषट्संज्ञकेभ्यो जश्शसोर्लुगित्यर्थेनादोषात्। न च चतुर्णामित्यत्र नुडर्थं षट्संज्ञां विधाय जसि अतिप्रसङ्गमाशङ्क्योपायान्तरेण परिहरणमनुचितं 'प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्' इति न्यायादिति वाच्यम्, षट्चतुर्भ्यश्चेति सूत्रे षट्त्रिचतुर्भ्यो हलादिरितिसूत्रे च द्विश्चतुर्ग्रहणाकरणेन महालाघवेन तादृशगौरवस्याकिञ्चित्करत्वात्। न च षट्त्रिचतुर्भ्यो हलादिरिति सूत्रे चतुर्ग्रहणाकरणे चतेरुरन्निति निष्पन्नचतुश्शब्दे नित्त्वात्परत्वादाद्युदात्तत्वं स्यान्नतु विभक्त्युदात्तत्वं पञ्चभ्य इत्यादौ षट्त्वनिमित्तकविभक्त्युदात्तत्वस्य चारितार्थ्यात् चतुर्ग्रहणसत्त्वे तु प्रतिपदोक्तत्वान्न दोष इति वाच्यम्, सुब्विभक्तेः प्रागेव नित्स्वरे ततो विभक्त्युत्पत्तौ सत्यां षट्स्वर इति तयोः समकालिकप्राप्त्यभावेन विप्रतिषेधशास्त्राप्रवृत्त्या षट्स्वरे बाधकाभावेन सति शिष्टस्वरबलीयस्त्वेन चादौ घात् षट्त्वादेव सिद्धे स्वस्रादिगणे चतसृशब्दाकरणलाघवस्य सत्त्वाच्च। न च चतस्र इत्यादौ जसो लुगापत्तिरिति वाच्यम्, अपि र ऋत

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

इत्यस्य बाध्यसामान्यचिन्ताश्रयणेन स्वविषयप्राप्तसर्वापवादतया लुकोऽपि तेन बाधात्। अत एवामि नुटो रादेशेन बाधमाशङ्क्य न तिसृचतसृ इति ज्ञापकान्नेति समाहितं भाष्ये। सन्निपातपरिभाषया लुको वारणसंभवाच्च। किं च षट्कतिकतिपयचतुरां थुगिति सूत्रे षट्पदेन षट्संज्ञकानां ग्रहणमङ्गीकृत्य कतिचतुर्ग्रहणाकरणेन महालाघवम्। न च तत्र षट्संज्ञकग्रहणे पञ्चम इत्यादावपि थुगापत्तिरिति वाच्यम्, नान्तादसंख्यादेर्मडिति मटा तद्बाधौचित्यात्। नच डटो मट् प्रकृतेस्थुगिति विषयभेदात्कथं बाध्यबाधकभाव इति वाच्यम्, चतसृणामित्यत्र रादेशेन नुटो बाधमाशङ्क्य न तिसृचतसृ इति ज्ञापकेन समाधानपरभाष्यप्रामाण्येन विषयभेदेऽपि येननाप्राप्त इति न्यायप्रवृत्तिस्वीकारेणादोषात्। न चैवमेकादशेत्यादौ थुगापत्तिस्तत्र मटः प्राप्त्यभावादिति वाच्यम्, षट्कतिकतिपयचतुरां थुगित्यत्र अन्षट्कतिपयोस्थुगिति न्यस्य, नान्तादसंख्यादेर्मडितिसूत्रे 'नान्तान्मट्' 'असंख्यादेः' इति योगं विभज्य, वा नान्तादेकादशादिशब्दात्थुकोऽप्रवृत्तेः। न चानन्तरस्येति न्यायादनन्तरस्य मट एव तेन निषेध इति वाच्यम्, योगविभागसामर्थ्येन व्यवहितस्य थुकोपि तेन बाधात्। एवं च चतुश्शब्दस्य षट् संज्ञाविधाने षट्चतुर्भ्यश्चेति सूत्रे षट्त्रिचतुर्भ्यो हलादिरिति सूत्रे च चतुर्ग्रहणाकरणेन स्वस्रादिगणे चतसृग्रहणाकरणेन 'षट्कतिकतिपयचतुरांथुक्' इत्यत्र कतिचतुर्ग्रहणाकरणेन च महल्लाघवमिति चेन्न,

तथा सति प्रियचतुर्णामित्यत्र संख्याप्रकारकसंख्येयमुख्यविशेष्यकबोधजनकत्वरूपसंख्यावाचकत्वस्य चतुश्शब्देऽभावेन षट्त्वाभावान्नुडनापत्तेः चतुर्ग्रहणसत्त्वे तु चतुःशब्दात्परस्य आमः सत्त्वेन नुट्सिद्धेः। नच षट्चतुर्भ्यश्चेति सूत्रे बहुवचननिर्देशेन अर्थप्राधान्यविवक्षया गौणेऽनुटोऽनिष्टत्वमेवेति वाच्यम्, षट्चतुर्भ्यामिति करणे गौरवेण लाघवार्थं बहुवचननिर्देशस्यावश्यकत्वात्। एवं चतुःशब्दादाचारक्विबन्तात्कर्तरि क्विपि चतुर्णामित्यत्र नुडर्थं चतुर्ग्रहणावश्यकत्वं बोध्यम्। मनोरमाकृन्मते तु गौणे नुटोऽनिष्टत्वाच्चतुर्ग्रहणं चिन्त्यप्रयोजनम्। शास्त्राबोधिताजाव्यवहितहल्समुदायस्यासाधुत्वभिया स्मरन्तेति न कृतमिति वा बोध्यम्। गौणे नुट इष्टत्वानिष्टत्वविषये विवदमानयोर्नवीन-

CC-0. Vasishtha Tripathi Collection. Digitized by eGangotri

प्राचीनयोर्मतोपपादनं मद्रचिते नामीति सूत्रीयशेखरटिप्पणे द्रष्टव्यम् इत्यलमिहातिप्रपञ्चेन ।

## इदमो मः ७५

नन्वत्र 'मो मः' इत्येव सूत्रमस्तु 'त्यदादीनाम' इत्यतस्त्यदादीनामित्यस्यानुवर्तनेन त्यदादीनां मकारस्य मकार एव भवति साविर्त्यर्थेन अयमित्यादेस्त्यदाद्यत्वबाधेन सिद्धेः । किंशब्दे च न दोषः द्विशब्दानन्तरं तस्य पाठात् किमः कादेशस्य विशेषविहितत्वाच्च । न चेदानीं दश्चेत्यादौ त्यदादीनामित्यस्यैवानुवृत्त्या दश्च यः साविर्त्यनयोः पर्यायतापत्तिरिति वाच्यम् , विशेषविभक्तिनिमित्तकत्वेन विशेषविहितेन यादेशेन दश्चेत्यस्य बाधेन इयमित्यादौ मादेशाप्रवृत्तेरितिचेन्न ।

इदानीं यस्सौ, तदोः सः सावनन्त्ययोरित्यनयोः पर्यायापत्तितादवस्थ्यात् त्यदादित्वनिमित्तकत्वस्य सुनिमित्तकत्वस्य चोभयत्र साम्यात् ।

यदि च अदस औ सुलोपश्चेत्यत्र अदस इति योगं विभज्य. अदस एव दस्य सत्वं नान्यस्य इति भाष्योक्तनियमात्तदोरितिसूत्रेऽनन्त्ययोरित्यस्य प्रत्याख्यानाय कृतात् यदि वा दश्चेत्यतः प्राक् इदोय् पुंसीति पठित्वा दश्चेत्यत्रेदः संबन्धेन त्यदादेरिदो दकारस्य मः स्याद्विभक्तावित्यर्थेन यस्सावित्यत्रापि इदोऽनुवृत्त्या त्यदादेरिदो दकारस्य यकारः साविर्त्यर्थेन च विशेषविहितेन यादेशेन सादेशस्य बाधान्न यः सौ तदोरित्यनयोः पर्यायतापत्तिरित्युच्यते तदा 'मो म' इत्येव सुवचमिति वदन्ति ।

## इदोय् पुंसि ७६

ननु 'इदमो मः' 'इदोय पुंसि' 'यस्सौ' इत्येतेषां स्थाने 'इदमोयमः सौ' 'इयमः स्त्रियाम्' इत्येव सूत्रद्वयमस्तु आदेशेऽकारोच्चारणं मकारपरित्राणाय नपुंसके च नादेशप्रसक्तिः सोर्लुका लुप्तत्वेन प्रत्ययलक्षणाभावेन सुपरत्वाभावात् । यद्वा 'इदम इयमः सौ' 'इदम अयमः पुंसि' इति वा न्यासोऽस्तु, नच 'अनाप्यक' इत्यत्र इदम एवानुवृत्तौ अनेकाल्त्वेन सर्वस्यानादेशे तस्य हलन्तत्वेन अनेनेत्यस्यासिद्धिरिति वाच्यम्, अनाप्यक इत्यत्र लुप्तविभक्तिकस्य अनेत्यकारान्तस्य छेदेनादोषात् ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

चैवमपि आभ्यामित्यस्यासिद्धिः हलि लोप इत्यनेनान्त्यस्यैव लोपादिति वाच्यम्, हलि लोप इत्यस्य स्थाने हल्यश् इति न्यस्य सर्वस्य अशादेशविधानेनादोषादिति चेद्—

न, तथा सति तन्मध्यपतितन्यायेन साकच्कस्य इदम अयमादेशे अयकमित्यादेरसिद्ध्यापत्तेः एवं स्त्रीलिङ्गे इयकमित्यस्यासिद्धिरित्यलम्।

किमः कः ७७

ननु इम इत्येव सूत्रमस्तु त्यदादीनामित्यतः अ इत्यनुवर्त्य इमोऽकारः स्याद्विभक्तावित्यर्थेन कः इत्यादिसिद्धेः किमः क इति गुरुभूतन्यासः किमर्थः। न चालोऽन्त्यपरिभाषयाऽन्त्यादेशापत्तिः नानर्थक इति निषेधेन, त्यदाद्यत्वेन सिद्धे आरम्भसामर्थ्येन च तदप्रवृत्तेः। नच उणादिनिष्पन्नतिमृष्मिमृशब्दयोरत्वापत्तिरिति वाच्यम्, त्यदादीनामित्यनुवृत्त्या त्यदादीनामिमोऽकार इत्यर्थेनादोषात्। नच 'द्विपर्यन्तानामेवेष्टिः' इति भाष्यकारेष्ट्या किमो न त्यदादित्वं द्विशब्दानन्तरं पाठादिति वाच्यम्, द्विशब्दात्प्रागेव किंशब्दस्य पाठकरणात्। एवं च किसर्वनामबहुभ्योऽद्व्यादिभ्य' इति सूत्रे किंशब्दे द्व्यादिभ्य इति निषेधाप्राप्त्या सर्वनामत्वादेव सिद्धे किंग्रहणाकरणेन लाघवान्तरस्यापि सत्वात्, नच कुतिहोरित्यत्रानुवृत्त्यर्थं 'किमः क' इति सूत्रे किंग्रहणमिति वाच्यम्, उतिहोरिति न्यस्य इम एव उत्वविधानेनादोषात्। नच 'क्वाति' इत्यत्रानुवृत्त्यर्थं तदिति वाच्यम्, उतिहोरति इति न्यस्य त्यदादीनामिम उः स्यात्तकारादौ हकारादौ अति चेति तदर्थेन इम उकारे यणि क इत्यस्य सिद्ध्या दोषाभावात्। नच ओर्गुण इति गुणापत्तिरिति वाच्यम्, अङ्गवृत्तपरिभाषया तद्वारणात्। नच इदानीं त्यदाद्यन्तर्गणकार्यत्वात् संज्ञायामुपसर्जने वा कादेशो न स्यादिति वाच्यम्, सिद्धान्तेऽपि त्यदादीनामित्यनुवर्त्य अनुवृत्तिसामर्थ्याच्चेह द्विपर्यन्तानामेवेतीष्टिमनङ्गीकृत्य संज्ञायामुपसर्जने च कादेशस्यानिष्टत्वाभ्युपगमेनादोषादिति चेद्—

न, किम्शब्दादकचि तन्मध्यपतितन्यायेन विशिष्टस्य कादेशार्थं तथान्यासस्य कर्तुमशक्यत्वात्, कुतिहोरित्युत्तरार्थमपि किमो ग्रहणस्यावश्यकत्वाच्च। नच उतिहोरति इति न्यासेनेष्टसिद्धिरिति वाच्यम्, तथा सति अलोऽन्त्यपरिभाषया मकारस्यैव उत्वापत्तौ कुत इत्याद्यसि-

Tripathi Collection. Digitized by eGangotri

द्व्यापत्तेः। नच 'नानर्थकेऽलोन्त्यविधिरनभ्यासविकार' इति परिभाषया निस्तार इति वाच्यम्, तस्याः फलाभावेन भाष्येऽनङ्गीकारात् एतदर्थमेवाङ्गीकारे च गौरवादित्यलम्।

यत्तु निर्दिश्यमानत्वाभावादेव नाकज्विशिष्टस्य कादेश इति तन्न, किमकः इति गुरुभूतन्यासेन, किमः कः इत्यस्यावृत्त्या वा निर्दिश्यमानत्वाभावेप्यादेशबोधनादिति। वस्तुतस्तु निर्दिश्यमानमेव तदित्यन्यत्र विस्तरः।

## न संयोगाद्वमन्तात् ७८

अत्र न हलोवमादित्येव सूत्रमस्तु हलः परौ यौ वकारमकारौ ताभ्यां परस्यानोऽकारस्य लोपः स्यादिति तदर्थः। तथा च यज्वनः, ब्रह्मण इत्यादिसिद्धौ न संयोगाद्वमन्तादिति गुरुभूतं सूत्रं किमर्थमिति चेन्न।

राजन्शब्दे उपपदे मन्धातोर्विचि राजमन्शब्दाच्छसि राजमन इत्यत्र हलः परीभूतात् मकारात् परस्यानोऽभावेन निषेधाप्रवृत्त्याऽल्लोपापत्तेः। एवं राजानं वनतीति राजवान् तान् राजवन इत्यत्र अल्लोपापत्तिर्बोध्या। यथाश्रुतसूत्रसत्त्वे तु संज्ञायां नलोपस्यासिद्धत्वात् मान्तसंयोगात्परस्यानः सत्त्वेन लोपः सिद्ध्यति।

नच नलोपः सुप्स्वरेति सूत्रे संज्ञापदेन घिसंज्ञाया एव ग्रहणम् अत एव संज्ञाविधौ किमुदाहरणम् दण्डिदत्तौ दत्तदण्डिनौ अत्र नलोपे दण्डिशब्दस्य घित्वे पूर्वनिपातापत्तिः इष्यते त्वनियमः असिद्धत्वे तु घित्वाभावात्सिद्ध्यति। नच पूर्वनिपाते नलोपो नलोपे च घित्वेन पूर्वनिपात इत्ययुक्तम्। यस्य पूर्वपदत्वे घित्वं भावि तस्य पूर्वनिपात इत्यर्थेन दोषाभावात्। तादृशार्थाश्रयणफलं तु द्युलिहाविति इत्यादिभाष्योक्तं संगच्छते, अन्यथा संयोगादिसंज्ञाविधावेव निर्विवादमुदाहरणमुपन्यास्यद्भाष्यकार इति वाच्यम्,

पटुशब्दाण्णिजन्तान्मनिनि टिलोपणिलोपयोः पटमन इत्यत्र टिलोपस्य णिलोपस्य वा स्थानिवत्त्वेन मकारस्य हलः परत्वाभावेन निषेधानापत्त्या लोपापत्तेः। न संयोगाद्वमन्तादिति यथाश्रुतसूत्रसत्त्वे तु संयोगसंज्ञायाः पूर्वपरनिमित्तकत्वेन घिग्रहणेन पूर्वस्यैव विधौ स्थानि-

CC-0. Prof. Satya Vrat Shastri Collection. Digitized by eGangotri

वत्त्वाङ्गीकारेण स्थानिवत्त्वाप्राप्त्या निषेधप्रवृत्तौ अल्लोपाभावः इति।

केचित्तु संज्ञाशब्दानामधर्मात्रिकत्वेन वकारमकारयोः संयोगविशेषणात्तदन्तलाभेन अन्तग्रहणं स्पष्टार्थमिति शेखरोक्त्याऽन्तग्रहणस्याकर्तव्यत्वेन च लाघवाभाव एव प्रकृतन्यासे दूषणमिति वदन्ति।

### पथिमथ्यृभुक्षामात् ७९

नन्वत्र पथिमथ्यृभुक्षामदित्येव सूत्रमस्तु। तथा च अनेन नकारस्यात्वे इकारस्य इतोऽत्सर्वनामस्थान इत्यनेन अत्वे द्वयोरकारयोर्दीर्घेण पन्था इत्यादिसिद्धेः। नचातो गुण इति पररूपापत्तिरिति वाच्यम्, पथिमथ्यृभुक्षां लोपः भस्यटेः इतोऽत्सर्वनामस्थान इति न्यासेन नकारस्य श्रवणाभावे सिद्धे अकारविधानसामर्थ्येन पररूपबाधादिति चेन्न,

आन्तरतम्यादनुनासिकस्यानुनासिक आकारो माभूदित्यर्थमकारप्रश्लेषस्यावश्यकतया दीर्घोच्चारणेन लाघवाभावात्। नच प्रश्लेषेऽतो गुण इति पररूपेण लाघवमिति वाच्यम् तस्य समस्तत्वेनान्तर्वर्तिविभक्त्या पदत्वेन पदान्तत्वेन पररूपाप्राप्तेः।

मनोरमाकृतस्तु-क्यजन्तात्क्विपि पन्था इत्येतत्सिद्ध्यर्थमाद्विधानमित्याहुः। शेखरकृतस्तु-स्थान्यनुरूपेऽनुनासिके एवोच्चारणीये तदनुच्चारणात् शुद्धस्यैव विधानमिति भाष्योक्त्या पथीयतेः क्विपोऽनभिधानम्, अन्यथा तत्र ईकाररूपस्य शुद्धस्यापि स्थानिनः सद्भावादत्र शुद्धार्थं तदनुच्चारणस्यावश्यकत्वेन भाष्यासंगतिः स्यात् प्रश्लेषस्यानावश्यकतया लाघवमस्त्येव न वा मनोरमोक्तं फलं तदनभिधानात्।

ननु तर्हि अदित्येवास्तु नकारेकारयोरत्वे दीर्घेण सिद्धेरिति चेन्न, लोप एव विधातव्ये अकारविधानसामर्थ्येन पररूपबाधकल्पने ज्ञानगौरवेण स्पष्टार्थमाकारोच्चारणादित्याहुः।

### भस्य टेर्लोपः ८०

नन्वत्र भाड्डित् इत्येव सूत्रमस्तु भसंज्ञकात्पथ्यादेः परः प्रत्ययो ड्डिदिति तदर्थस्तथाच ड्डित्वाट्टिलोपेन सकलेष्टसिद्धेरिति चेन्न, सुपथिन्शब्दादिदमर्थेऽणि टिलोपे पुनष्टिलोपानापत्तेः। प्रथमटिलोपस्याभीयत्वेनासिद्धतया टिलोपाप्राप्तेः। सिद्धान्ते तु भत्वेन अत्ययस्याद्यपेऽ

CC-0. Vasishtha Tripathi Collection. Digitized by eGangotri

तस्याश्रितत्वया बोधेऽभानेन भस्य टेर्लोप इत्यस्य प्रकृतिमात्रनिमित्तकत्वेन नस्तद्धित इत्यस्य प्रत्ययनिमित्तकत्वेन समानाश्रयाभीयत्वाभावेन नासिद्धत्वमिति टिलोपेन तत्सिद्धिरिति बोध्यम्, नच यथाश्रुतसूत्रसत्त्वे नित्यत्वात्परत्वाच्च पूर्वं भस्य टेर्लोप इति टिलोपे नान्तत्वाभावेन नस्तद्धित इति टिलोपो नैव भविष्यति । तथा च सौपथमित्येव रूपमिष्यते न सौपमिति अत एव पाथेयमित्यादिप्रयोगाः संगच्छन्ते, अन्यथा नस्तद्धित इति टिलोपे जाते भस्य टेर्लोप इति पुनष्टिलोपे तदसिद्धिः स्पष्टैवेति वाच्यम्, एवमपि सुपथिन् शब्दाण्णिचि भस्य टेर्लोप इति टिलोपे सुपयति इत्यादीनामसिद्ध्यापत्तेः । डिद्वद्भावेन जातस्य प्रथमटिलोपस्य समानाश्रयाभीयत्वेनासिद्धत्वात् ।

नच उपसर्गसमानाकारं पूर्वपदं धातुसंज्ञाप्रयोजके प्रत्यये चिकीर्षिते पृथक्क्रियते इति वचनेन सोः पृथक्करणेन न पुनष्टिलोपः सिद्धान्तेऽपि प्रकृतिभावात् । नच परमशब्दसमवधाने पुनष्टिलोपानापत्तिर्दूषणं परमशब्दसमवधाने ऋक्पूरब्धूः पथामानक्षे इति अप्रत्ययस्य प्रसङ्गेनादोषादिति वाच्यम्,

एवमपि परमपथशब्दाण्णिचि टिलोपाभ्यां परमयतीति सिध्यतीदानीं तदनापत्तेः । सुपथिन् शब्दादिष्ठनि भस्य टेर्लोप इति टिलोपे पुनः इष्ठेमेयस्सु टेर्लोप इत्यर्थकेन टेरित्यनेन टिलोपे इष्ठस्य सुपिष्ठ इत्यस्येसिध्यापत्तेश्च उक्तन्यासे आभीयत्वेनासिद्धतया पुनष्टिलोपानापत्तेरित्यलम् ।

## श्वयुवमघोनामतद्धिते ८१

नन्वस्मिन्सूत्रेऽतद्धितग्रहणं किमर्थं । नच माघवनमित्यादौ संप्रसारणाभावार्थं तदिति वाच्यम्, अचतुरविचतुरेति सूत्रेण उपशुनमित्यत्र संप्रसारणनिपातनेन श्वयुवेतिसंप्रसारणं तद्धिते न प्रवर्तते इति कल्पनात् । नच तत्र टिलोपाभावार्थं निपातनं न संप्रसारणार्थमिति वाच्यम्, शुनः संप्रसारणं वा च दीर्घत्वमिति वार्तिकेन शुन्यमित्यत्र संप्रसारणकरणेन तथा कल्पनेनादोषादिति चेन्न, शुनः संप्रसारणं चेत्तद्धिते एवेति विपरीतनियमापत्तौ शुन इत्यादेरसिद्ध्यापत्तेरित्यलमसदावेशेन ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

## नोपधायाः ८२

नन्वस्मिन्सूत्रे उपधाग्रहणं किमर्थम्। अचश्चेत्यस्योपस्थित्याङ्गस्याचो दीर्घो नामीत्यर्थेन पञ्चानामित्यस्य सिद्धेः। नचोपधाग्रहणाभावे पकारोत्तराकारस्य दीर्घापत्तिरिति वाच्यम्, अन्त्यबाधेऽन्त्यसदेशस्येति परिभाषया सिद्धे उपधाग्रहणस्य वैयर्थ्यात्। नचैवमत उपधाया णौ चङ्युपधाया इत्यादावप्युपधाग्रहणवैयर्थ्येन उपधादीर्घे सा न प्रवर्तत इति ज्ञापनात्पञ्चानामित्यादौ पकारोत्तराकारस्य दीर्घवारणाय प्रकृते उपधाग्रहणं चरितार्थमिति वाच्यम्, ननन्द अचकाङ्क्षदित्यादौ वृद्धिह्रस्वयोर्वारणाय उपधाग्रहणस्य तयोश्चारितार्थ्येनादोषात्। न हि तत्र अन्त्यबाधपरिभाषया निस्तारः अन्त्यसदेशानन्त्यसदेशयोरेकस्मिन्लक्ष्ये प्राप्त्यभावादिति चेन्न, पक्तारावित्यादौ ऋतोङीति गुणं बाधित्वा अत्त्रिणीति दीर्घवारणायोपधाग्रहणस्य चारितार्थ्यात्, अनन्त्यविकार इत्यस्य भाष्ये प्रत्याख्यानाच्चेति दिक्।

ननु नामि परे उपधाया दीर्घो भवति इत्येवार्थोऽस्तु न ग्रहणं किमर्थम्। नच चतुर्णामित्यत्र रेफान्ते दीर्घवारणार्थमिति वाच्यम्, न तिसृचतसृ इत्यस्य स्थाने न तिसृचतुरोरिति न्यस्य दीर्घवारणसम्भवात्। नचैवमपि षण्णामित्यत्र दीर्घवारणाय तदिति वाच्यम्, न षट्स्चतुराभिति न्यस्य षान्तस्य तिसृशब्दस्य चतुःशब्दस्य च न दीर्घ इत्यर्थेनादोषाद्विति चेन्न,

तितऊनामित्यत्र तकारोत्तराकारस्य दीर्घापत्तेः, एवं न्यासेन चतुर्णामित्यादौ दोषवारणे लाघवाभावाच्चेति दिक्।

## अष्टाभ्य औश् ८३

नन्वत्र अष्टाभ्य उङ् इत्येव सूत्रमस्तु अष्टा अस् इति सकारस्य ङित्त्वादुङ्गुणे वृद्धिरेचीति वृद्धौ अष्टावित्यस्य सिद्धेः। नच पूर्वोपस्थितनिमित्तकत्वेनान्तरङ्गत्वात्पूर्वं दीर्घं ततो गुणे अष्टो इति रूपापत्तिरिति वाच्यम्, प्रकृतिप्रत्ययोभयसम्बन्धिवर्णापेक्षदीर्घापेक्षया प्रत्ययमात्रसम्बन्धिवर्णापेक्षगुणस्यान्तरङ्गत्वेन बहिरङ्गत्वासमानाधिकरणान्तरङ्गत्वस्यैव बलवत्त्वप्रयोजकतया प्रकृते नित्यत्वेन गुणस्यैव न्याय्यतया

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

अष्टावित्यस्य सिद्धेः प्रक्रियालाघवाय उशिति वक्तव्ये उङ्विधानसामर्थ्येनान्तरङ्गपरिभाषाया अप्रवृत्तेश्चेति चेन्न,

शसि गुणे कृते अष्टा ओ इति स्थिते भत्वे आतो धातोरिति सूत्रे धातुग्रहणमावृत्तिनिवृत्त्यर्थमिति भट्टनये आलोपे अष्टो इति रूपापत्त्या उङो विधातुमशक्यत्वात् । एतेन अष्टाभ्य ओशिति न्यासोऽपि परास्त इति दिक् ।

## कृदतिङ् ८४

नन्वस्मिन्सूत्रेऽतिङ्ग्रहणं किमर्थमितिचेन्न,

अतिङ्ग्रहणाभावे तिङोऽपि कृत्संज्ञायां रुरुदिवेत्यादौ नेड्वशि कृतीड्निषेधापत्तेः । नच क्रादिनियमेन नेड्वशिकृतीत्यस्य बाधाद् रूपसिद्धिर्निर्बाधैवेति वाच्यम्, मध्येऽपवादन्यायेन एकाच उपदेशे, श्र्युकः कितीत्यनयोरेवक्रादिनियमेन बाधेन नेड्वशीत्यस्य बाधायोगाद् ।

वस्तुतस्तु प्रथमोपस्थितत्वेन बभूविवेत्यत्रैव दूषणसम्भवे रुरुदिवेत्यत्र दूषणदानानौचित्येन अरुदिवेत्येव पाठः शेखरे । तथा च 'रुदादिभ्यः सार्वधातुके' इति सूत्रेण प्राप्तस्येटो निषेधाभावाय अतिङ्ग्रहणस्यावश्यकत्वम् । न चाकृत्सार्वधातुकयोरिति सूत्रे सार्वधातुकग्रहणेन तिङो न कृत्संज्ञेति ज्ञापनान्न दोषः । अन्यथा अकृदिति पर्युदासेनैव चिनुयादित्यादौ दीर्घाभावे सिद्धे सार्वधातुकग्रहणं व्यर्थं स्यादिति वाच्यम्, ज्ञापकेन वारणापेक्षया ऽतिङ्ग्रहणकरणस्यैवौचित्यात् । अतिङ्ग्रहणादेव पचति चिकीर्षतीत्यादौ न तुगादिः । अन्यथा कृत्त्वेन तुग्दुर्वारः स्यादिति बोध्यम् ।

## वेरपृक्तस्य ८५

ननु वेरपृक्तस्येति सूत्रेऽपृक्तग्रहणं किमर्थम् । नचापृक्तग्रहणाभावे वान्तस्य प्रत्ययस्य लोप इत्यर्थे क्विब्जादौ इत्संज्ञालोपाभ्यां वान्तप्रत्ययस्यैव सत्त्वेनेष्टसिद्धावपि पीवन् शब्दाण्णिचि टिलोपे पीवयति तस्मात्क्विपि पीव् इत्यत्र वान्तप्रत्ययसत्त्वेन लोपापत्तिरिति वाच्यम्, सिद्धान्तेऽपि तत्र लोपस्येष्टत्वात् । एवं हल्ङ्यादिसूत्रेऽपि अपृक्तग्रहणं न कार्यम् । नच विसर्जनीयादौ विधौ लोपापत्तिरपृक्तग्रहणाभावे इति

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

वाच्यम्, सुतिसीतिपदैस्तदाद्युपस्थित्या हलन्ततद्वादेः परस्य सुतिसि-प्रत्ययस्य लोप इत्यर्थेन लोपप्राप्तेः। एवं च अपृक्त एकाल्प्रत्यय इति सूत्रमपि मास्तु। नच 'अस्तिसिचोऽपृक्त' इत्यत्र अपृक्तज्ञानार्थं तदिति वाच्यम्, हल्रूपस्य प्रत्ययस्येडागम इत्यर्थेन, 'अस्तिसिचः पिति' इति त्रिन्यस्य हल्रूपस्य पित इडित्यर्थेन वाऽदोषादिति चेत्तर्हि वेरपृक्तस्य, हल्ङ्याब्भ्यः, अस्तिसिचोऽपृक्ते, इत्येषु अपृक्तग्रहणम्, अपृक्त एका-ल्प्रत्यय इति सूत्रं च व्यर्थमेवेति केचित्।

कश्चित्तु क्विप्, विच्, क्विन्, ण्विन् इत्येतान् वकाररहितानेव विधा-य वेरपृक्तस्येति संपूर्णं सूत्रं तिरस्कृत्य कण्डूयतेः क्वचन्तात्क्विप्यल्लो-पयलोपयोः कण्डूरित्यादौ वलपरत्वाभावेन यलोपो न स्यादित्याशङ्क्य लोपोव्योः क्विनिच्क्विण्विड्वल्षु इति न्यासेन परिजहार।

तन्न, एतादृशन्यासेन यलोपादिसाधने गौरवादिति दिक्।

## तदो सः सावनन्त्ययोः ८७

नन्वस्मिन्सूत्रेऽनन्त्ययोर्ग्रहणं व्यर्थं तच्छब्दादावन्त्यस्य सत्त्वे विसर्गे च सः इत्यादेः सिद्धेरिति चेन्न।

त्यदाद्यत्वं बाधित्वा परत्वात्सत्वे ततो हल्ङ्यादिलोपे रुत्वे विसर्गे हे स इत्यनिष्टरूपापत्तेः, स्त्रियां सेति रूपासिद्धेश्च। नच नित्यत्वात्स-त्वं बाधित्वा त्यदाद्यत्वमेव स्यात् तथा च नोक्तदोष इति वाच्यम्, शब्दान्तरप्राप्त्या त्यदाद्यत्वस्याप्यनित्यत्वात्। नच पूर्वं सत्वेऽपि पुनः प्रसङ्गविज्ञानन्यायात्त्यदाद्यत्वेन सिद्धिरिति वाच्यम्, अनन्त्ययोर्ग्रहण-सामर्थ्येन सकृद्गतिन्यायस्याश्रयणेन सत्वानन्तरं त्यदाद्यत्वाप्राप्त्या उक्तदोषतादवस्थ्यात्।

वस्तुतस्तु अदस औ सुलोपश्चेत्यत्र अदस इति योगं विभज्य अदस एव दस्य सत्वं नान्यस्येति नियमेन तदादिशब्दे दकारस्य सत्वा-प्राप्त्याऽनन्त्ययोर्ग्रहणं व्यर्थमेव। नन्वेवं योगविभागाश्रयणेन अनन्त्य-योर्ग्रहणप्रत्याख्याने द्वीयतेः क्विपि द्व इति रूपापत्तिः। यथाश्रुतसूत्रसत्त्वे तु स्व इतीष्यते इति वाच्यम्, एतादृशद्वीशब्दस्य अन्यपदार्थनिष्ठविशे-ष्यतानिरूपितप्रकारताप्रयोजकत्वरूपोपसर्जनत्वबत्त्वात्त्यदादिबहिर्भूतत्वे-नात्वसत्वयोरनिष्टत्वेन द्वीरित्यस्यैव न्याय्यत्वादिति बोध्यम्।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

ननु सः सावनन्त्ययोरित्येव सूत्रमस्तु तदोर्ग्रहणं व्यर्थम् । नच यः इत्यादौ यकारस्य सत्ववारणाय तदोर्ग्रहणमिति वाच्यम्, एवमपि तोरि-त्येव वक्तव्ये तदोर्ग्रहणस्य वैयर्थ्यादिति चेन्न, तथा सति अनेषेत्यादौ नस्यापि सत्वापत्तेः । नच नुटो वहिरङ्गासिद्धत्वम्, वहिर्भूतसुनिमि-त्तकत्वेन सत्वस्यैव वहिरङ्गत्वात् । नच तस्य नुगचीति न्यसय नञ एव नुग्विधानान्न दोष इति वाच्यम्, अनेष इत्यादौ पदान्तनस्य सत्वेन नलोपापत्तेः । नच नुग्विधानसामर्थ्याद्बहिरङ्गतयाऽसिद्धत्वाच्च न नलोप इति वाच्यम्, एवमपि अनेष इत्यादौ ङमुडापत्तेर्दुर्वारत्वात् । नच सन्नि-पातपरिभाषया ङमुडभाव इति वाच्यम्, यदागमपरिभाषयाऽशास्त्रीय-स्यापि अजाद्युत्तरपदानन्तर्यरूपसन्निपातस्यातिदेशेन सन्निपातविघाता-भावात् । नच ङमो ह्रस्वादचीत्यत्र परमदण्डिनावित्यत्र ङमुडभावाय पदे इत्यनुवृत्तेरावश्यकतया एतच्छन्दे उत्तरपदत्वे चेति निषेधेन पद-त्वाभावान्ङमुड् न स्यात् । अत एव तिङन्त इत्यादौ न ङमुट् अत एव च शेखरकृतापि इको यणचीत्यादौ ङमुटमाशङ्क्य सौत्रत्वेन समाधायं तिङन्तादिपदे शङ्कासमाधाने न कृते । एवं च सन्नन्त इत्यादयः प्रयोगा अपप्रयोगा एवेति वाच्यम्, नुग्न्यासपक्षे उत्तरपदस्य कार्यित्वाभावेन उत्तरपदत्वे चेत्यस्याप्रवृत्या दोषतादवस्थ्यादित्यलम् ।

## समः समि ८८

नन्वत्र 'समो मिङ्' इत्येव सूत्रमस्तु ङिच्चेत्यन्तादेशेन यणि सम्य-ङित्यादेः सिद्धेरिति चेन्न,

समोऽव्ययत्वेनाकचि सकम् तस्य तन्मध्यपतितन्यायेन समो ग्रह-णेन ग्रहणे सम्यादेशे सम्यङ् मिङादेशपक्षे सकम्यङिति फलभेदा-दिति केचित,

वस्तुतस्तु सर्वनामसाहचर्येणाव्ययादपि वाचकत्वरूपप्राधान्ये एव अकचः प्रवृत्तिर्न तु द्योतकस्थले । प्रकृते तु द्योतकत्वादकचः प्राप्त्य-भावेन नायं फलभेदः किन्तु शेखरोक्तं प्रतिपत्तिगौरवमनेकशास्त्रानुसं-धानरूपं प्रकृतन्यासे दूषणमित्यवधेयम् । नच शेखरकृता नलोपो नञ इत्यत्र नञोऽश इति न्यासे नञोऽकचि सिद्धान्ते इष्टस्य अकवाहण इत्यस्यासिद्धिरिति यथाश्रुतसूत्रस्य तत्पुरुषे स्थापनेन सर्वनामसाहच-

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

र्येण द्योतकेभ्योऽकजभावो नेष्ट इति समूशब्देऽकचि फलभेदः स्यादेवेति वाच्यम्, उपसर्गस्यायताविति सूत्रस्थभाष्येणोपसर्गेभ्योऽकचोऽनभिधानेनादोषात्। तथा हि अयतावित्युपसर्गस्य, रेफस्य वा विशेषणम्। आद्ये 'परेः प्रतिषेधो वक्तव्यः'। अन्त्ये प्रतेररपूर्वविधिरित्युक्तम्। यद्यकजुपसर्गे स्यात् तदा परिवदकच्यपि निषेधस्यावश्यकतया तदनुक्त्या न्यूनत्वापत्तिभिया तदनभिधानस्यैव शरणीकर्तव्यत्वादिति बोध्यम्।

परे तु सत्यप्यकचि साकच्कापहारकादेशविषये तन्मध्यपतितन्यायाप्रवृत्तेः परिभाषेन्दुशेखरटीकायामुक्तत्वाऽत्र तदप्रवृत्त्या निर्दिश्यमानत्वाभावेन सिद्धान्तेऽपि सम्यादेशस्यानिष्टत्वान्न फलभेदः। नच सिद्धान्तेऽप्रवृत्तावपि इदानीं तस्य साकच्कानपहारकत्वेन तन्मध्यपतितन्यायप्रवृत्तौ निर्दिश्यमानत्वेनादेशे फलभेदः स्यादिति वाच्यम्, अकचि कृते धित्वं न प्राप्नोतीति भाष्येणानेकाल्सूत्रेऽकच्घटितस्य सर्वपदेनाग्रहणेन 'उत्सर्गसमानदेशा अपवादा' इति न्यायेन ङिच्चेत्यत्रापि अकजघटितनिर्दिश्यमानान्त्यस्य ग्रहणमिति न कश्चिद्दोष इति शेखरोक्तं ङकारस्येत्संज्ञालोपयोः अनेकाल्शित्सर्वस्य तद्बाधकं ङिच्चेत्यनयोरनुसंधानरूपं प्रतिपत्तिगौरवमेव दूषणं साधु मन्यन्ते।

कश्चित्तु भाष्ये अकज्विशिष्टस्य समुदायादेशफलत्वेनानुक्ततया उत्तरपदनिमित्तकादेशात्परमेवाकचः प्रवृत्त्यङ्गीकारेण, उत्तरपदार्थे प्रकर्षवत्तया प्रयुक्ते सम्मि कुत्सादिविवक्षाया असंभवेनाकचोऽप्रवृत्त्या च फलभेदाभावाच्छेखरोक्तं ज्ञानगौरवमेव दूषणमित्याह। एतेन सम इगिति न्यासोऽपि प्रत्युक्तो ज्ञानगौरवादित्यलम्।

## तिरसस्तिर्यलोपे ८९

अलोपे इत्यत्र अस्य अलोपो लोपाभावो यस्मिन्निति शकन्ध्वादित्वात्पररूपेण अलोप इति सिद्धम्। तथा च यत्राञ्चतेरकारस्य लोपाभावस्तत्रैव तिर्यादेशः न तु तिरश्चेत्यादाविति शेखरः।

नन्वत्राकारप्रश्लेषे तस्य शकन्ध्वादिपाठे च मानाभावेन अस्य लोपो यस्मिन्नित्यलोपस्तस्मिन्नञ्चतावित्यर्थेन तिरश्चेत्यादावेव तिर्यादेशः स्यादिति चेन्न,

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

एवं सति अलोपग्रहणाकरणलाघवेन चावित्यनन्तरं पाठेनैव सिद्धे अलोपग्रहणस्यैव प्रश्लेषे शकन्ध्वादिपाठे च मानत्वात् । नचैवमपि न लोपो यस्मिन्नित्यलोपस्तस्मिन् लोपाभाववत्यञ्चतावित्यर्थेन तिर्यङित्यादिसिद्धेः पुनः प्रश्लेषादिकरणमनुचितमिति वाच्यम्, तथा सति गत्यर्थे नलोपसत्त्वेन पूजार्थे एव स्यादिति 'तिरसस्तिरिः पूजायाम्' इति 'तिरसस्तिर्यगतौ' इति वा न्यसनीये अलोपे इति पठनेन तादृशविलक्षणार्थलाभादिति दिक् ।

नन्वत्र 'तिरसस्तिर्यै' इत्येव न्यासोऽस्तु विष्वग्देवयोरित्यतोऽञ्चतावित्यनुवर्त्य तदादिविधावकारादावञ्चतौ तिर्यादेश इत्यर्थेन सकलेष्टसिद्धेरिति चेन्न, असधातोः क्विपि अः तस्मिन्नुपपदेऽञ्चतेः क्विनि उपपदसमासे रुत्वोत्वगुणपूर्वरूपेषु कृतेषु ओङ् तस्य तिरश्शब्देन समासे तिर्यङिति भवति इदानीमकराद्यञ्चतिपरत्वाभावेन तदसिद्ध्यापत्तेः । नचैवं तिरसस्तियचोत्येव न्यस्यताम् तथा चाजादावञ्चतावित्यर्थान्न दोष इति वाच्यम्, अञ्चतेः क्विपा निष्पन्नस्य अक् इत्यस्य नञा समासे नुटि विनापि प्रत्ययमिति नञो लोपे नक् तस्मिन्परतस्तिरसस्तिर्यादेशानापत्तेः । नच यदागमपरिभाषया तत्राजादित्वलाभ इति वाच्यम्, आने मुगिति ज्ञापकेन वर्णग्रहणे तदप्रवृत्तेः, पूर्वं रीत्या निष्पन्नाकृशब्दस्य पदद्वित्वे तिरश्शब्देन समासे शसि उत्तरखण्डेऽकारलोपेऽपि अजादित्वस्य सत्वेन तिर्यादेशे तिर्यकूच इति रूपापत्तेश्च । सिद्धान्ते तु विशिष्टस्य लुप्ताकारत्वात्पूर्वखण्डस्य उत्तरपदत्वाभावान्नादेश इत्यलम् ।

यत्तु प्रकृतन्यासे तिरायतीत्यत्र तिर्यादेशानापत्तिः राद्धान्ते तु टिलोपस्य अकारपर्याप्तस्थानिताकत्वाभावेन अलोप इति निषेधाप्राप्त्या तिर्यादेश इति तन्न,

अञ्चेष्टिलोपेनापहारेऽपि वहिरङ्गत्वेनासिद्धतया तिर्यादेशसिद्धेरिति दिक् ।

## नाञ्चेः पूजायाम् ६०

ननु अञ्चेर्गतौ इत्येव सूत्रमस्तु अञ्चेर्गतावेव नलोप इत्यर्थेन सिद्धे नाञ्चेः पूजायामिति गुरुभूतं सूत्रं किमर्थमिति चेन्न, अञ्याकुलं गच्छतीत्यर्थके अञ्चित गच्छतीत्यत्र नलोपाभावः । यथाश्रुतसूत्रसत्त्वे तु

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

प्रकृते पूजार्थस्य गम्यमानतया नलोपाभावः सिध्यतीति भाष्यकैयटयोः स्पष्टमित्यलम्।

ननु अचि पूजायाम् अञ्चुगताविति धातुद्वयमङ्गीकृत्येष्टसिद्धौ नाञ्चे पूजायामिति सूत्रं किमर्थम्, एवं च पूजायामुदितो वेत्यस्याप्राप्तौ यस्य विभाषेति निषेधाप्राप्त्या इड्विधायकमञ्चेः पूजायामित्यपि व्यर्थमिति महल्लाघवमिति चेद् ?

न, तथा सति पूर्वोक्ते अञ्चितं गच्छतीत्यत्र नकारेटोः श्रवणानापत्तेः, गत्यर्थकत्वेन अनिदितामिति नलोपस्य, यस्य विभाषेति इड्निषेधस्य च दुर्वारत्वादित्यलम्।

## अदस औ सुलोपश्च ९१

ननु अदसः सोर्डौ इत्येव सूत्रमस्तु तथा च अदस् स् इति स्थिते सोर्डावादेशे डित्वसामर्थ्यादभत्वेऽपि नित्यत्वाट्टिलोपे तदोः सः सावनन्त्ययोरिति दकारस्य सत्वे असावित्यस्य सिद्धेः। नच अद् औ इत्यवस्थायामनन्त्यदकाराभावात्सत्वाप्राप्तिरिति वाच्यम्, तदोरिति सूत्रेऽनन्त्ययोरित्यस्य प्रत्याख्यानेन, सूत्रे दकारोच्चारणेनान्त्यस्यापि दस्य सत्वमिति कल्पनेन, वा इष्टसिद्धेः। नचैवमपि टिलोपे जाते नित्यत्वात्सत्वं बाधित्वा त्यदाद्यत्वे असावित्यस्यासिद्धिरिति वाच्यम्, शब्दान्तरप्राप्त्या त्यदाद्यत्वस्यानित्यत्वेन परत्वादपवादत्वाद्वा त्यदाद्यत्वं बाधित्वा सत्वे दोषाभावादिति चेन्न, असकावित्यत्र टिलोपे दकारस्य सत्वे ककारस्य त्यदाद्यत्वे असावित्यापत्तेरिति दिक्।

नन्वदस इत्यस्य पञ्चम्यन्तत्वमङ्गीकृत्य सोरेवौकारं विधाय असावित्यादेः सिद्ध्या सुलोपग्रहणं किमर्थमिति चेन्न।

तथासति असकौ स्त्रीत्यत्र त्यदाद्यत्वे टापि प्रत्ययस्थादितीत्वप्रसङ्गात्। नच आपीत्यत्र आकचरप्रश्लेषेण आकाररूपे आपीत्त्वमित्यर्थान्नित्यत्वादेकादेशे आरूपापोऽभावान्नेत्वमिति वाच्यम्, एवमपि प्रकृतिमात्रापेक्षयाऽन्तरङ्गत्वेनैकादेशापेक्षया पूर्वमेवेत्वप्रवृत्त्या दोषतादवस्थ्यात्। अत एव कारिके इत्यादावित्वसिद्धिरित्यलम्। केचित्तु अदसःसोर्णिवितिन्यस्य णित्वाद्वृद्धौ अदन्तत्वाभावाद् टापोऽप्राप्त्या असकौ स्त्रीत्यादावित्वाप्राप्त्या सुवचमेवामु न्यासं वदन्ति।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

## न मु ने ९२

ननु 'न ने' इत्येव सूत्रमस्तु तथाच नाभावे कर्तव्ये कृते च त्रिपाद्या असिद्धत्वं नेति तदर्थः। तथा च अमुना इत्यादिसिद्धौ बाधकाभावान्मुग्रहणं व्यर्थमिति चेन्न ।

मनस इः मन इः तेन मन इना इत्यत्र नाभावे कर्तव्ये लोपः शाकल्यस्येति सूत्रविहितयलोपादीनामसिद्धत्वाभावेन 'आद्गुण' इति गुणापत्त्या इष्टरूपासिद्धेः एवमुञोऽनुकरणेन उशब्देन किंशब्दस्य समासे टाविभक्तौ प्रकृतिवदनुकरणमिति उत्त्वातिदेशे मञ उञो वो वेत्यस्यासिद्धत्वाभावे वत्वापत्तौ इष्टस्य किमुना इत्यस्यासिद्ध्यापत्तेः, किम्वा इत्यापत्तेश्च। एवं पयोरुरुणेत्यत्र रोरीत्यस्यासिद्धत्वाभावे हशिचेत्युत्वं बाधित्वा परत्वाद्रोरीति लोपे पयारुरुणा इत्यापत्तेरित्यलम्

नन्वेवमपि नाभावे कर्तव्ये कृते च उत्वमसिद्धं नेत्यर्थकं 'नो ने' इत्येव सूत्रमस्तु इति चेन्न,

सम्बोधनविभक्त्यन्तस्य एचोऽप्रगृह्यस्येति सूत्रनिष्पन्नस्य छान्दसस्य पटा३उ इत्यस्यानुकरणे उत्वस्यासिद्धत्वाभावेन घित्वे नाभावापत्त्या 'पटा३उना' इत्यनिष्टरूपापत्तेः। न चानुकरणस्यानुकार्यभिन्नतया नायमुकारो त्रिपाद्यां विहित इति वाच्यम्, प्रकृतिवदनुकरणमित्यनेनाऽस्यापि त्रैपादिकत्वातिदेशेनादोषात्। एवं भद्रं करोषि पटा३उ अग्रिणेत्यत्र असिद्धकाण्डस्थोत्वस्यासिद्धत्वाभावे इको यणचीति यणापत्तेश्च। यदि च प्रत्यासत्त्या नाभावे कर्तव्ये नाभावप्रयोजककार्यस्यैव नासिद्धत्वमिति स्वीकृत्य नायं दोष इत्युच्यते तर्हि पूर्वोक्त एव दोषोऽनुसन्धेयः।

केचित्तु 'न मु टि' इति न्यस्य टाविभक्तौ मुत्वं नासिद्धमित्यर्थमङ्गीकृत्य अमुनेत्यस्य सिद्धिरिति वदन्ति तन्न, अदस्शब्दाट्टाविभक्तौ त्यदाद्यत्वपररूपयोः टापि अदा आ इति दशायां मुत्वस्यासिद्धत्वाभावे परत्वान्मुत्वेऽनिष्टरूपापत्तेः। सिद्धान्ते तु अदा आ इति दशायां मुत्वस्यासिद्धत्वादाङि चाप इत्येत्वेऽयादेशे मुत्वे अमुयेत्यस्य सिद्धिरिति दिक्।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

## उत्तरपदत्वे चापदादिविधौ प्रत्ययलक्षणप्रतिषेधः ९३

उत्तरस्य पदत्वमिति षष्ठीतत्पुरुष उत्तरशब्दश्च उत्तरपदपरः स च समासचरमावयवे रूढः। एवं च उत्तरस्य पदत्वे कर्तव्ये प्रत्ययलक्षणं नेति तदर्थः। तेन दधिसेचावित्यादावन्तर्वर्तिविभक्त्या पदत्वाभावात् चोः कुरिति कुत्वं न। अपदादिविधाविति न पर्युदासः किन्तु प्रसज्यप्रतिषेधः पदत्वस्य पदादिविधिभिन्नतयाऽव्यावर्तकतापत्तेः विधिरिति कर्मणि किः पदादेः कार्ये कर्तव्ये प्रत्ययलक्षणप्रतिषेधो नेति तदर्थः। तेन दधिसेचावित्यत्र सकारस्य षत्वे कर्तव्ये प्रत्ययलक्षणेन पदत्वात्सात्पदाद्योरिति षत्वनिषेधः सिध्यति।

अत्र पदादिविधिः प्रतिपदोक्तत्वात् सात्पदाद्योरित्यादिरेव गृह्यते तेन परमवुधावित्यादौ वस्तुतः भष्भावस्य पदादिविधित्वेऽपि पदादिशब्दमुच्चार्य विहितत्वाभावात् अपदादिविधाविति निषेधाप्रवृत्त्या प्रत्ययलक्षणनिषेधेन पदत्वाभावेन भष्भावो न।

अत्र भाष्ये एतद्वार्तिकफलानामन्यथासिद्धिं प्रदर्श्य वार्तिकं न कर्तव्यमित्युक्त्वा पुनर्नञ्द्वयघटितैतद्वचनारम्भः कृतः तत्रायं सन्देहः किं प्रत्याख्याने भाष्यतात्पर्यम् अथ वार्तिकारम्भ इति।

वार्तिकं नारम्भणीयमिति पूर्वः पक्षः। तथा हि–स्वादिष्वसर्वनामस्थाने इत्यत्र 'स्वादिषु' इत्येको योगः तत्र सुप्तिङन्तमित्यतः सुबित्यनुवर्त्य स्वादिषु यस्माद्विहितस्तदादि पूर्वं पदं भवति, मध्ये चेत्सुबन्तं तदपि पदं भवतीति। ततः 'असर्वनामस्थाने यचि' यजादौ सर्वनामस्थाने यस्माद्विहितस्तदादि पूर्वं पदं न भवति मध्ये चेत्सुबन्तं तदपि पदं नेति। ततो 'भम्' सर्वनामस्थानभिन्ने यजादौ यस्माद्विहितस्तदादि पूर्वं भं भवति मध्ये चेत्सुबन्त तदपि भं भवतीति वाक्यत्रयम्। तत्राद्यस्य फलम् राजभ्यामित्यत्र नलोपसिद्धिः, द्वितीयस्य परमवाचावित्यत्रान्तर्वर्तिविभक्त्या सुबन्तत्वनिमित्तकस्य औनिमित्तकस्य वा परमवागित्यस्य पदत्वस्य निषेधात् कुत्वाभावः, तृतीयस्य फलं परमवाचेत्यादौ स्वादिष्विति पदत्वं प्रबाध्य भत्वे कुत्वाभाव इति। नन्वेवं दधिसेचावित्यत्र षत्वापत्तिः सेगित्यस्य पदत्वाभावेन सात्पदाद्योरिति निषेधाभावादिति चेन्न, पदस्यादिः पदादिरिति समासद्वयपरस्य दर्शील पदमाश्रित्य षत्व-

CC-0. Vasishtha Tripathi Collection. Digitized by eGangotri

निषेधेनादोषात् । न चैवं सति हरिषु इत्यत्र षत्वनिषेधापत्तिरिति वाच्यम्, सादुग्रहणेन स्वादिषु इति या पदसंज्ञा तामाश्रित्य उक्तनिषेधो न प्रवर्तत इति कल्पनेनादोषात् एवं च वार्तिकफलानामन्यथासिद्धतया वार्तिकं नारम्भणीयम् ।

वार्तिकमारम्भणीयमिति द्वितीयः पक्षः उक्तरीत्या वार्तिकप्रत्याख्याने गौरवात् । तृतीयवाक्ये भिन्नावधिकया भसंज्ञयाऽवयवसुबन्तस्य पदत्वबाधाय असर्वनामस्थाने यचीत्यनेन अवयवसुबन्तस्य पदत्वनिषेधाय च सूत्रद्वये सुबित्यस्यानुवृत्तेः, वाक्यत्रयस्य चस्वीकारात् मण्डूकप्लुतिरूपदोषवारणाय प्रथमवाक्येऽपि निरर्थकसुबित्यनुवृत्तिस्वीकाराच्च । सुगवतीत्यत्र उत्तरभागस्य पदत्वेन एङः पदान्तादतीति पूर्वरूपापत्तेश्च । वार्तिकसत्त्वे तु उत्तरपदत्वे इति प्रत्ययलक्षणनिषेधात्पदत्वाभावेन पूर्वरूपाभाव इति ।

न च परमवाचावित्यत्र कुत्वाभावाय वार्तिकारम्भे बहुवाचावित्यत्र समासचरमावयवत्वाभावेन उत्तरपदत्वाभावात् निषधाप्रवृत्त्या कुत्वाभावाय बहुच्पूर्वस्य च इति वार्तिकमारम्भणीयमिति गौरवम् । न च प्रत्याख्यातृमतेऽपि वाक्यत्रयकल्पनगौरवमिति वाच्यम्, वार्तिकारम्भवादिमते एव स्वादिष्वसर्वनामस्थाने, यचि भम्, उत्तरपदत्वे चापदादिविधौ न, बहुच्पूर्वस्य न इति वाक्यपञ्चककल्पनेन मदपेक्षयाऽधिकगौरवात् । किञ्च माषकुम्भवापेनेत्यत्र कुम्भेत्यस्य उत्तरपदत्वे इति पदत्वनिषेधेन पदव्यवायेऽपीति निषेधाप्रवृत्त्या णत्वापत्तिः, सुगवतीत्यत्र पूर्वरूपापत्तिस्तु न 'न वै सन्ध्यक्षरमत्यमस्तीति' इको गुणवृद्धी इति सूत्रस्थभाष्येण, प्रत्ययोत्तरपदयोश्चेति सूत्रस्थभाष्येण च एजन्तेभ्य आचारक्विपोऽनभिधानादिति वाच्यम्,

प्रत्याख्यानपक्षेऽपि बहुसेचावित्यत्र षत्वनिषेधाय सात्पदाद्योरिति सूत्रे बहुच्पूर्वस्य चेति वार्तिकस्यावश्यवक्तव्यतया वाक्यत्रयस्य असमर्थसमासस्य अपूर्ववार्तिकस्य सुबित्यनुवृत्तेश्च सत्त्वेन महागौरवात् माषकुम्भवापनेत्यत्र च न दोषः । उत्तरपदस्य कार्यित्वे एव वार्तिकप्रवृत्तिस्वीकारात् । किं च महेन्द्रतीत्यत्र पदत्वनिषेधाभावादतो गुण इति पररूपानापत्तेः ।

CC0 Vasishtha Tripathi Collection. Digitized by eGangotri

नच वार्तिकारम्भेऽपि बहुच्पूर्वस्य नेति पदत्वनिषेधे बहुसेचावित्यत्र षत्ववारणाय सात्पदाद्योरिति सूत्रे बहुच्पूर्वस्येति वार्तिकमावश्यकमिति वार्तिकत्रयारम्भरूपगौरवमधिकम् माषकुम्भवापेनेत्यत्र णत्वापत्तिश्च वार्त्तिके कार्यित्वनिवेशे मानाभावात्; प्रत्याख्यातृमते महेन्द्रतीत्यत्र पररूपानापत्तिस्तु न उस्यपदान्तादित्यतोऽनुवृत्तस्य अपदान्तादित्यस्य अपदस्य अन्तादतोगुणे पररूपमिति अतोगुणे इति सूत्रार्थस्य स्वीकारेण इन्द्रेत्यस्य पदत्वेऽपि महेन्द्रेत्यस्यापदत्वेनादोषात् प्रत्युत वार्तिकारम्भे एव काश्यपेन प्रोक्तमित्यर्थे काश्यपकौशिकाभ्यामृषिभ्यां णिनिरिति णिनिः ततोऽधीयते इत्यर्थेण तस्य प्रोक्ताल्लुगिति लुकि अन्तर्वर्त्तिविभक्त्या पदत्वे काश्यपिन इत्यत्र नलोपापत्तिः। प्रत्याख्यातृमते नायं दोषः द्वितीयसूत्रेण पदत्वबाधादिति वाच्यम्,

उत्तरपदत्वे चापदादिविधावित्यनन्तरं बहुच्पूर्वस्येत्यस्य पाठेन अपदादिविधावित्यस्यानुवृत्त्या बहुसेचावित्यत्र षत्ववारणेन सात्पदाद्योरिति सूत्रे बहुच्पूर्वस्य चेति वार्तिकाकरणेन गौरवाभावात्।

नच वार्तिकारम्भे माषकुम्भवापेनेत्यत्र णत्वापत्तिः कार्यित्वनिवेशे मानाभावादिति वाच्यम्, वार्तिके लाघवादपदादिविधाविति पर्युदासः पदत्वे इत्यस्य पदत्वप्रयुक्ते कार्ये लक्षणा। तथा च समासचरमावयवस्य पदादिसंबन्धिकार्यभिन्नं यत्कार्यं पदसंज्ञाप्रयोज्यं तत्र कर्तव्ये प्रत्ययलक्षणं नेत्यर्थान्माषकुम्भवापेनेत्यत्र दोषाभावात्। यत्तु महेन्द्रतीत्यत्र इन्द्रेत्यस्य पदत्वेऽपि महेन्द्रेत्यस्य पदभिन्नत्वेन अतोगुणे इति पररूपसिद्धिरिति कथनं तत्तुच्छम्। आगच्छ देवदत्तात्र स्नाहीत्यादावपि आगच्छ देवदत्तेत्यस्य पदभिन्नत्वेन पररूपापत्तेः। काश्यपिन इत्यत्र नलोपापत्तिस्तु न छगलिनो ढिनुक् इति सूत्रे नकारोच्चारणेन तद्धितान्यवहितपूर्ववर्त्तिसुब्विभक्तिमाश्रित्य पदत्वाभावज्ञापनेनादोषादिति वाच्यम्,

प्रत्याख्यातृमते सात्पदाद्योरिति सूत्रस्थाने 'सातेः' इत्येको योगः क्रियते सातेः सस्य षत्वं नेति तदर्थः। ततो 'बहुच्पदाभ्याम्' इति द्वितीयो योगः आभ्यामुत्तरस्य सस्य षत्वं नेति तदर्थः। आदिग्रहणं न कार्यम्। एवं चादिपदमकृत्वा बहुच्पठने गौरवाभावात्। एवं च बहुच्पूर्वस्येत्येकमपि वार्तिकं प्रत्याख्यातुं नाश्रयणीयम्। त्वन्मते

Pratishtha Tripathi Collection. Digitized by eGangotri

बहुसेवौ दधिसेवावित्येतदर्थं बहुपूर्वस्य च उत्तरपदत्व इत्यनयोरारम्भेण गौरवम् माषकुम्भवापेनेत्यर्थम् उत्तरपदस्य कार्यित्वे एव निषेधस्वीकारे परमदण्डिनावित्यत्र ङमुडापत्तिश्च । नच त्वन्मते आगच्छ देवदत्तात्रेत्यादौ पररूपापत्तिरिति वाच्यम्, पदेऽन्तः पदान्तः न पदान्तः अपदान्तः इत्येवं विगृह्य पदपरकचरमावयवभिन्नाकाराद्गुणे परतः पररूपं भवतीत्यर्थाङ्गीकारेण आगच्छ देवदत्तात्रेत्यादौ पदपरकचरमावयवाकारस्यैव सत्त्वेन पररूपाभावात्, महेन्द्रतीत्यत्र च पदपरकचरमावयवभिन्नाकारत्वेन पररूपसिद्धिः । न चैवं प्रत्याख्यानरीत्या दैत्यारी इत्यत्र उत्तरखण्डस्य पदत्वाभावेन पररूपापत्तिरिति वाच्यम्, पदपदेन पदत्वयोग्यप्रातिपदिकग्रहणेनादोषात् । अत एव कृदन्तेन समासे शिरार्चं इति, विंशतेरासन्ना इति विग्रहे डचि तिशब्दलोपे तस्याभीयत्वेनासिद्धतया यस्येति चेति लोपाभावे पररूपे आसन्नविंशा इति च सिध्यति । अन्यथा प्रत्ययलक्षणनिमित्तकपदत्वमादाय पदान्तत्वेन अपदान्तत्वाभावात्पररूपं न स्यात् । यदपि छगलिनो ढिनुगिति सूत्रे नकारोच्चारणात्तद्धिताव्यवहितपूर्ववर्त्तिसुपमादाय पदत्वं नेति बोधनात् काश्यपिनावित्यत्र नलोपो नेति । तदपि न, नकारोच्चारणाभावे ढिनुगन्ताज्जसि जसिचेति गुणे छागलेयव इति रूपम् नकारोच्चारणे पदत्वान्नलोपे तस्यासिद्धत्वाद् गुणाप्राप्तौ यणि छागलेय्य इति रूपमिति फले विशेषसत्त्वेन नकारोच्चारणस्य चारितार्थ्याद्, ढिनुगन्तेन बहुव्रीहौ इनः स्त्रियामिति कबर्थत्वाच्च तस्य ज्ञापकत्वानुपपत्तेः । एवं च काश्यपिनावित्यत्र दोषो दुर्वार एवेति वार्तिकमारम्भणीयमेव ।

नच वार्तिकारम्भवादिमतेऽपूर्ववार्तिकद्वयकल्पनेऽपि प्रत्याख्यातृमते वाक्यसप्तककल्पनागौरवम् 'पदगौरवाद्योगविभागो गरीयान्' इति न्यायेन तस्यात्यन्तमनुचितत्वात् । नच कार्यित्वनिवेशे परमदण्डिनावित्यत्र ङमुडापत्तिरिति वाच्यम्, उञि च पदे इत्यतः पदे इत्यनुवर्त्य ह्रस्वात्परो यो ङम् तदन्तं यत्पदं तस्मात्परस्याजादेः पदस्य ङमुडित्यर्थेनादोषात् । नच काश्यपिनौ इत्यत्र नलोपापत्तिरिति वाच्यम्, 'छन्दोब्राह्मणानि च तद्विषयाणि' इति सूत्रस्थविषयग्रहणेन सुबुत्पत्तेः पूर्वमेव अध्येतृवेदितृप्रत्ययोत्पत्तेः शेखरे उक्ततयाऽदोषादिति वाच्यम्,

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

वार्तिकारम्भे पूर्वदण्डिप्रिय इत्यत्र नलोपानापत्तेः, परमदण्डिनावित्यत्र ङमुडापत्तेश्च पदे इत्यनुवर्त्य तद्वारणे तु सुगण्णीश इत्यत्र उत्तरपदस्यैव कार्यित्वेन प्रत्ययलक्षणनिषेधे पदत्वाभावेन ङमुडनापत्तिः। तस्मात् ह्रस्वात्परो यो ङम् तदन्तं यत्पदं तस्मात्परस्याचो ङमुडित्येव व्याख्यानमुचितम् परमदण्डिनावित्यत्र च न ङमुडापत्तिः। उत्तरपदत्वे चेति पदत्वनिषेधेन ङमुटोऽप्राप्तेः, काश्यपिनावित्यत्रोक्तरीत्या वारणेऽपि मघोरपत्यानि मघवः अत्रेरपत्यानि अत्रय इत्यत्र यञञोश्चेति यञो लुकि जसि चेति गुणे ऽन्तर्वर्तिविभक्त्या पदत्वादेङः पदान्तादतीति पूर्वरूपापत्तेः प्रत्याख्याने तु द्वितीयसूत्रेण पदत्वनिषेधाददोष इति।

न चोत्तरपदत्वे इत्यस्य प्रत्याख्यानपरभाष्येण फलैक्याय उत्तरपदत्वं मध्यमत्वानाक्रान्तं गृह्यत इति पूर्वदण्डिप्रिय इत्यत्र न दोषः। नापि कार्यित्वनिवेशे पदे इत्यनुवर्त्य परमदण्डिनावित्यत्र ङमुड्वारणे सुगण्णीश इत्यत्र ङमुडनापत्तिः। अपदादिविधाविति पर्युदासेन उत्तरपदत्वे इत्यस्याप्रवृत्त्या पदत्वे बाधकाभावेन ङमुडुत्पत्तेः। पदादित्वं च पदघटकवर्णध्वंसासमानाधिकरणोत्पत्तिकत्वं तद्विधिभिन्नो विधिरपि पदघटकवर्णसमानाधिकरणोत्पत्तिकवर्णोद्देश्यक एव गृह्यते तेन पदान्तकार्यं एव निषेधप्रवृत्त्याऽदोषात्। नच वार्तिकारम्भे मघव इत्यादौ पूर्वरूपापत्तिरिति वाच्यम्, उरःकेण उरःपेणेत्यादौ उत्तरपदस्य पदत्वाभावेन सोऽपदादाविति सत्वप्रसक्तिरूपदोषस्य त्वन्मतेऽपि सत्त्वेन व्याख्यानादिना दोषवारणस्योभयोरप्यावश्यकत्वादिति वाच्यम्,

वार्तिकमारभ्य मध्यमत्वानाक्रान्तस्य उत्तरपदस्य ग्रहणेन पूर्वदण्डिप्रिय इत्यत्र नलोपोपपादने पञ्चगवधन इत्यत्र गो इत्यस्य पदत्वे एङःपदान्तादतीति पूर्वरूपापत्तेः पदान्तकार्यं एव उत्तरपदत्वे इत्यस्य प्रवृत्तिस्वीकारे सुकारिणौ सुसर्पिषावित्यत्र णत्वषत्वयोरपदान्तकार्यत्वेन निषेधाप्रवृत्त्याऽन्तर्वर्त्तिविभक्त्या पदत्वेन णत्वषत्वयोरनापत्तिः। प्रत्याख्यातृमते उरःकेणेत्यादौ न दोषः आदिग्रहणसामर्थ्येन अपदस्यैवादिरित्यर्थेन प्रातिपदिकाद्योः कवर्गपवर्गयोः सत्वनिषेधात्। वार्तिकारम्भे तु मघवः अत्रय इत्यादि दोषो दुर्वार एवेति वार्तिकानारम्भस्यैव युक्तत्वात्।

नच मध्यमत्वानाक्रान्तेत्यत्र मध्यमपदेन उत्तरपदव्यवहितैकसुबन्त-

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

स्यैव ग्रहणेन पञ्चगवधन इत्यत्र न दोषः सुकारिणौ सुसर्पिषावित्यनयोः षत्वणत्वयोः पदान्तकार्यत्वाभावेऽपि तन्निषेधस्य पदान्तकार्यत्वेन उत्तरपदत्वे चेति प्रत्ययलक्षणनिषेधेन णत्वषत्वयोर्बाधकाभावः पदेऽन्तः पदान्त इति समासाङ्गीकारेण मघवः अत्रय इत्यादौ पूर्वरूपापत्तिरपि नेति वाच्यम् ,

उत्तरपदाव्यवहितपरकमध्यमपदत्वानाक्रान्तोत्तरपदस्यैव पदान्तप्रयोज्यकार्ये कर्तव्ये प्रत्ययलक्षणप्रतिषेधाङ्गीकारेण पञ्चगवधन इत्यत्र दोषवारणेऽपि सय इत्यादौ पूर्वरूपापत्तेर्दुर्वारत्वात् । अत्रय इत्याद्यर्थं पदेऽन्त इत्यर्थस्वीकारे गोशब्दानुकरणे गो अब्रवीदित्यत्र पूर्वरूपापत्तेश्च। नच सय इत्यत्र न दोषः, उत्तरपदस्य तद्घटितस्य वा पदत्वे कर्तव्ये लुमता लुप्ते प्रत्ययलक्षणं नेति शेखरोक्तदिशा निर्वाहादिति वाच्यम्, एवमपि मघव इत्यत्र दोषात् उत्तरपदाव्यवहितपरकमध्यमपदत्वानाक्रान्तस्य पदान्तप्रयोज्ये कार्ये प्रत्ययलक्षणप्रतिषेध इत्यर्थेन निर्वाहकरणे तु अनेकविशेषणघटितवार्तिकारम्भापेक्षया योगविभागप्रकार एव लघुः 'बहुच्पूर्वस्य च' इति वार्तिकेन बहुसेक् कुलमित्यत्र समुदायोत्पन्नसुपमाश्रित्य पदत्वे प्रत्ययलक्षणनिषेधेन कुत्वानापत्तिरिति प्रत्याख्यानपक्षस्यैव युक्तत्वादिति चेद् ,

अत्रोच्यते–वार्तिकारम्भ एव श्रेयानिति। नच गोऽब्रवीदित्यादौ पूर्वरूपापत्तिः। प्रत्यासत्त्या पदे परतः पदचरमावयवस्यैवेङः पूर्वरूपस्वीकारणादोषात्। न चैवं हरे अ इत्याहेत्यादौ अशब्दस्यैवानुकरणत्वेन पदत्वाभावात्पूर्वरूपानापत्तिः सिद्धान्ते तु पूर्वरूपमिष्यत एवेति वाच्यम् , पदपदे स्वातन्त्र्येण प्रयोगानर्हस्य ग्रहणेन मन्मतेऽपि पूर्वरूपसिद्धेः। न चैवं गो अब्रवीदित्यत्रापि पूर्वरूपापत्तिस्तत्रापि गोशब्दस्य स्वातन्त्र्येण प्रयोगार्हत्वादिति वाच्यम् , वार्तिके उत्तरपदत्वे इति वृत्त्युत्तरपदत्वपरम् वृत्तिशब्दस्य लोपात् , एवं च उत्तरपदस्य वृत्तिचरमावयवरूपस्य ग्रहणेन अत्रय इत्यादौ दोषाभावात्। पदेऽन्त इति समासास्वीकारेण गोऽब्रवीदित्यादौ दोषाभावात्। एवं च सय इत्यादावपि न दोषः। एवं च बहुसेचावित्यत्रोक्तरीत्यैव वारणसम्भवात् 'बहुच्पूर्वस्य च' इति वार्तिकमपि न कर्तव्यम् बहुसेक् कुलमित्यत्र च वृत्तिचरमावयवस्य सेच् इत्यस्य पद

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

त्वप्रयोज्ये कुत्वे कर्तव्ये तत्प्रकृतिकप्रत्ययलोपस्य वृत्तिप्रयोज्यलुक एव वा प्रत्ययलक्षणनिषेधेन समुदायोत्पन्नसुपमादाय प्रत्ययलक्षणे बाधकाभावेन कुत्वसिद्धेः। एतेन दण्डि कुलमिति व्यस्ते दोष इत्यपास्तम्।

वस्तुत उत्तरपदशब्दो वृत्तिचरमावयवे रूढ इति दधिसेचावित्यादौ चकारस्य वृत्तिचरमावयत्वेन तस्य कुत्वे प्रत्ययलक्षणनिषेधेऽपि सकारस्यातथात्वेन निषेधाप्रवृत्त्या षत्वनिषेधसिद्धावपदादिविधावित्यपि न कर्तव्यमित्यपरं लाघवम्, तदुक्तं शेखरे प्रत्याख्यानप्रकारस्तु गुरुभूत इत्यलम्।

## अनुपसर्जनात् ९४

इदं सूत्रं तदन्तविधिज्ञापनद्वारा कौम्भकारेयसिद्ध्यर्थमिति अनुपसर्जनादिति सूत्रे भाष्ये, सर्वादिसूत्रभाष्ये तु अनुपसर्जनादित्येष योगः प्रत्याख्यायते तदेवमभिसंभन्त्स्यामः। अनुपसर्जन अ अदिति अकाराकारौ शिष्यमाणौ अनुपसर्जनस्य द्रष्टव्यावित्युक्तम्। इदमत्राकूतम्-अनुपसर्जनादितिपरिभाषा तत्रानुपसर्जन इति लुप्तषष्ठीकम्। अश्च अच्चेति समाहारद्वन्द्वः अकारश्चान्यः प्रश्लिष्यते स च लुप्तपञ्चम्यन्तः। तथा च अकारात्परस्य स्थाने विधीयमानः अकारः अत्कारश्च अनुपसर्जनस्यैवेति नियमोऽनेन क्रियते तेन त्यदाद्यत्वमद्ड्डादेशश्च उपसर्जनस्य नेति 'संज्ञोपसर्जनीभूतानां प्रतिषेधो वक्तव्य' इति वार्तिके उपसर्जनग्रहणं न कर्तव्यमिति। इदं च भाष्यद्वयं परस्परविरुद्धम्। तत्र तदन्तविध्यभावेऽपि कौम्भकारेय इत्यस्य सिद्ध्या प्रत्याख्याने एव भाष्यतात्पर्यम्। तथाहि-अनुपसर्जनं यट्टिदादि तदन्तं यत्प्रातिपदिकं ततः स्त्रियां ङीबित्यर्थः। अत्र अनुपसर्जनादिति तत्पुरुषो न तु बहुव्रीहिः सुपर्णीत्यादौ पाककर्णेति ङीषोऽभावापत्तेः। मम तु समुदायस्य उपसर्जनभिन्नत्वान्न दोषः। नच सामर्थ्यादेव तत्र ङीष्बहुव्रीहावपोति वाच्यम्। तथा सति बहुकुरुचरेत्यत्र टितः कुरुचरेत्यस्य उपसर्जनरहितत्वेन ङीबापत्त्या अनुपसर्जनाधिकारवैयर्थ्यापत्तेः।

नच दामहायनान्ताच्चेति सूत्रे अन्तग्रहणेन हायनान्तस्य गृह्यमाणतया अनुपसर्जनादिति तस्य विशेषणम् ततश्च द्वौ द्विहायनौ यस्याः सा द्विद्विहायना बाला इत्यादौ ङीब्न्याय्यो ऽप्रसक्तः, अन्यथा समुदा-

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

यस्य हायनान्तत्वेन उपसर्जनभिन्नत्वेन च ङीबापत्तिः । बहुव्रीहेः उपसर्जन राहित्यरूपानुपसर्जनत्वाभावनादोष इति वाच्यम्, बहुव्रीहौ सर्वत्रोपसर्जनघटितत्वेन द्विहायनीत्यत्रापि ङीबनापत्त्या बहुव्रीहिग्रहणसामर्थ्यादत्र सूत्रे बहुव्रीह्यवयवोपसर्जनतामादाय तन्निषेधाप्रवृत्तिकल्पनेनादोषात् ।

न चैवं विभाषासपूर्वस्येत्यत्र सपूर्वग्रहणेन पत्यन्तस्यापि गृह्यमाणतया कर्मधारयोत्तरबहुव्रीहौ बहुवृषलपतिः स्त्रीत्यत्र ङीब्वारणाय अनुपसर्जनाधिकारः, अन्यथा पत्यन्तस्योपसर्जनभिन्नत्वान्ङीबापत्तिरिति वाच्यम्, एवं सति गृहपत्नीत्यत्रापि उपसर्जनीभूतगृहघटितत्वेन ङीबनापत्त्या सूत्रस्यैव नैरर्थक्यापत्त्या अत्रापि समासावयवगतोपसर्जनतामादाय निषेधाप्रवृत्त्या अधिकारवैयर्थ्यतादवस्थ्यात्, तस्मात्तत्पुरुष एव । एवं च बहुकुरुचरेत्यत्र ङीब्वारणमनुपसर्जनाधिकारफलं सुस्थमिति बोध्यम् ।

ननु 'समासप्रत्ययविधौ प्रतिषेध' इत्यनेन तदन्तविधिनिषेधाट्टिद्रूपं यत्प्रातिपदिकं ततः स्त्रियां ङीबित्यर्थेन चोरी नदीत्यादौ ङीप्सिद्धावपि कुरुचरेत्यत्रैव टिद्रूपप्रातिपदिकत्वाभावेन ङीपोऽप्राप्त्या बहुकुरुचरेत्यत्र ङीब्वारणाय क्रियमाणोऽनुपसर्जनाधिकारो व्यर्थः । न च अवयवेऽचरितार्थं लिङ्गं समुदायोपकारकमिति न्यायेन जुगुप्सते इत्यत्रात्मनेपदस्येव कुरुचरेत्यत्र टित्त्वमिति वाच्यम्, एवमपि बहुकुरुचरेत्यस्य टित्त्वेन अनुपसर्जनत्वेन च ङीपो दुर्वारतयाऽनुपसर्जनाधिकारस्य वैयर्थ्यादिति वाच्यम्, यथा गोः सक्थनि कर्णे वा कृतं लिङ्गं तत्राचरितार्थं सद् गोरेव व्यञ्जकमित्येवं लोकन्यायमूलकेन अवयवेऽचरितार्थमिति न्यायेन यादृशसमुदायाव्यभिचारी योऽवयवस्तद्गतस्य धर्मस्य तादृशसमुदाये एवारोप इति स्वीकारेण टप्रत्ययस्य बहुकुरुचरशब्दातिरिक्ते कुरुचरशब्देऽपि सत्त्वेन बहुकुरुचरशब्दे न तस्यारोप इति चेन्न ।

अनुपसर्जनाधिकारेण स्त्रीप्रत्यये तदन्तविधिज्ञापनेनादोषात् ।

ननु समुदायाव्यभिचारित्वं नाम समुदायाघटकत्वमेव । तच्च टप्रत्यये बहुकुरुचरशब्दाघटकत्वस्यासत्त्वेन बहुकुरुचरशब्दाव्यभिचारित्व

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

टित्त्वस्यारोपे ङीपो दुर्वारतयाऽनुपसर्जनाधिकारो व्यर्थ इति चेद् ?

न, स्वाव्यभिचारीत्यनेन स्वव्याप्यावयवनिष्ठधर्मस्य स्वरिमन्नारोप इत्येव बोध्यते। स्वव्याप्यत्वं च स्वासमवायिप्रयोगासमवायित्वे सति स्वसमवायिप्रयोगसमवायित्वम् बहुकुरुचरशब्दासमवायी यः कुरुचर-शब्दः तत्समवायित्वस्य प्रत्यये सत्त्वेन बहुकुरुचरशब्दव्याप्यत्वं किन्तु कुरुचरशब्दव्याप्यत्वमेवेति बहुकुरुचरशब्दे टित्वारोपासंभवेन ङीपोऽप्राप्त्या व्यर्थेऽनुपसर्जनाधिकारस्तदन्तविधिं ज्ञापयतीत्यदोषात्। तेन अतिधीवरीत्यत्र ङीप्सिद्धिः। अन्यथा स्त्रीत्वे वर्तमानात् वनन्तत-दादेः प्रातिपदिकान्ङीब्रश्चेत्यर्थे अतिधीवरीत्यत्र वनन्ततदादेः धीव-नित्यस्य स्त्र त्वेऽसत्त्वेन ङीब्रश्च न स्याताम्।

नच वनोरचेति सूत्रे वनधातोरपि ग्रहणेन प्रत्ययमात्रग्रहणाभावात् प्रत्ययग्रहणपरिभाषाया अप्रवृत्त्या प्रातिपदिकविशेष्यकतदन्तविधेश्च समासप्रत्ययविधाविति निषेधेनाप्रवृत्त्या वन्रूपात्प्रातिपदिकान्ङीप् रश्चे-त्यर्थे वनो न हश इत्यस्य वैयर्थ्यापत्त्या वनोरचेति सूत्रे प्रातिपदिकवि-शेष्यकतदन्तविधेर्ज्ञापनात्। धीवरी अतिधीवरीत्यनयोः सिद्धयाऽनुप-सर्जनाधिकारो व्यर्थः। एवं च टिड्ढेति सूत्रे तदन्तविधेरभावात् बहु-कुरुचरेत्यत्रापि न दोष इति वाच्यम्, प्रत्ययाप्रत्यययोः प्रत्ययस्यैव ग्रहणमिति परिभाषया वनः प्रत्ययस्यैव ग्रहणेन वनन्ततदादेरित्यर्थे धीवन् शब्दे ङीप्सिद्धया वनो न हश् इत्यस्य चारितार्थ्येन प्रातिप दिकविशेष्यकतदन्तविधेरज्ञापनेन अतिधीवरीत्येतदर्थं द्वितीयतदन्तवि-धिज्ञापनायाऽनुपसर्जनाधिकारस्यावश्यकत्वात्। नच नित्यं समास इति सूत्रे अनुत्तरपदस्थग्रहणेन क्वचिद्विशेष्यान्तरसत्त्वेपि अध्याहृत-शब्दस्वरूपविशेष्यमादायापि तदन्तविधिरित्यर्थस्य ज्ञापनेन इसुसन्ता-न्तपदावयवस्येत्यर्थेनेव प्रकृते वन्नन्तदाद्यन्तात्प्रतिपतिकादित्यर्थेन धीवरी अतिधीवरीत्यनयोः सिद्धयाऽनुपसर्जनाधिकारो व्यर्थ एवेति वाच्यम्, पूर्वं सर्पिप्रियो यस्येति त्रिपदे बहुव्रीहौ पूर्वसर्पिःप्रिय, इत्यत्र सर्पिषोमध्यमत्वाक्रान्ततया उत्तरपदत्वे इति निषेधाप्रवृत्त्या प्रा-प्तषत्ववारणाय अनुत्तरपदस्थग्रहणस्य चारितार्थ्येन द्वितीयतदन्तविधिज्ञा-पने सामर्थ्याभावादतिधिवरीत्येतदर्थमनुपसर्जनाधिकारस्यावश्यकत्वात्।

नच समासग्रहणेन पूर्वपदस्य लोपात समासाद्यन्तद्रूपस्य पू

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

पदत्वस्य पूर्वसर्पिःप्रिय इत्यत्र सर्पिष्यसत्त्वेन षत्वाप्राप्त्या तत्र अनुत्तरपदस्थस्येत्यस्याचारितार्थ्येन द्वितीयतदन्तविधिज्ञापकत्वसंभवादनुपसर्जनाधिकारो व्यर्थ इति वाच्यम्, समासग्रहणेन परमसर्पिष्प्रिय इति त्रिपदे बहुव्रीहौ षत्वानापत्तेः उणादीनामव्युत्पन्नतया इस्पदेन तदाद्यनुपस्थित्या ऽनुत्तरपदस्थग्रहणवारितार्थ्येन द्वितीयतदन्तविध्यज्ञापकतया ऽनुपसर्जनाधिकारस्य अतिधीवरीत्येतदर्थमावश्यकत्वात् ।

नच वनोरचेति सूत्रस्य अन्नेभ्य इति सूत्रप्राप्तङीबनुवादेन रादेशमात्रविधायकतया द्वितीयतदन्तविधिं विनापि धीवरी अतिधीवरीत्यनयोः सिद्धया ऽनुपसर्जनाधिकारो व्यर्थ इति वाच्यम्; अस्य तदन्तविधिज्ञापनार्थमनावश्यकत्वे ऽप्यन्यार्थमावश्यकत्वात् । तथा हि—आपिशला ब्राह्मणीत्यत्र 'प्रोक्ताल्लुक्' इति अध्येत्रणो लुकि 'यः शिष्यत' इति न्यायेन प्रोक्ताणन्तस्यैव स्त्रियां वृत्त्या प्राप्तङीब्वारणाय अनुपसर्जनाधिकारस्यावश्यकत्वात् सति तु तस्मिन् अनुपसर्जनादित्यस्य गृह्यमाणविशेषणतया अनुपसर्जनं योऽण् ततो ङीबित्यर्थात् प्रोक्ताणः उपसर्जनत्वाद् अध्येत्रणश्च लुप्तत्वान्न ङीप् । प्रत्ययलक्षणं तु न, वर्णाश्रयत्वे तदप्रवृत्तेः ।

नच श्रुतानुमितयोरिति न्यायेन स्त्रियामित्यस्य गृह्यमाणविशेषणतामङ्गीकृत्य प्रोक्ताणः स्त्रियामवर्तमानत्वेन ङीब्वारणसंभवादनुपसर्जनाधिकारो न तदर्थोऽपीति वाच्यम्, काशकृत्स्ना ब्राह्मणीत्यत्र अध्येत्रणो लुक्यपि प्रोक्ताणः स्त्रियां वर्तमानत्वेन प्राप्तङीब्वारणाय तदावश्यकत्वात् ।

नच काशकृत्स्ना ब्राह्मणीत्यत्र प्रोक्ताणि पूर्वं ङीप् जातस्ततोऽध्येत्रणि तस्य प्रोक्ताल्लुगिति लुकि लुक्तद्धितलुकीति ङीपो लुकि ततश्चापि काशकृत्स्ना ब्राह्मणीति सिध्यति। ततश्च लक्ष्येलक्षणन्यायेन पुनर्ङीपोऽप्रसक्त्यानुपसर्जनाधिकारो व्यर्थ इति वाच्यम्, एवं तर्हि कौम्भकारेय इत्येव यथा स्यात् कुम्भकारेयो माभूदित्येतदर्थं स्त्रीप्रत्यये तदन्तविधिज्ञापनार्थमेवानुपर्जनाधिकारस्यावश्यकत्वात् । तथा हि—तदन्तविध्यभावे प्रणन्ततदादेः कारेत्यस्मान्ङीपि स्त्रीप्रत्ययान्तपदेन कारीत्यस्य ग्रहणे कुम्भकार्या अपत्यमिति विग्रहे ढकि ढग्निरूपिताङ्गत्वस्य कारीत्यत्रैव सत्त्वेन कुम्भकारेय इति स्यात् । यदि च स्त्रीप्रत्यये चानुपसर्जनेनेति परिभाषया स्त्रीप्रत्ययान्तपदेन कुम्भकारीत्यस्य ग्रहणं ततो ढक्-

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

ङ्स्यादिवृद्धौ कौम्भकारेय इत्यपि स्यात्, तदन्तविधिसत्त्वे तु अणन्तान्तान्ङीबित्यर्थेन कुम्भकारशब्दान्ङीपि ततो ढकि कौम्भकारेय इत्येकमेव रूपम्।

नच त्वन्मते तदन्तान्ङीप्यपि स्त्रीप्रत्यये इति परिभाषया कारीत्यस्यापि ग्रहणसंभवात्कदाचित्कुम्भकारेयो दुर्वार इति वाच्यम्, तदन्तविधेः कौम्भकारेय इति फलप्रदर्शनपरभाष्यात् स्त्रीप्रत्यय इति परिभाषयाऽधिकस्य कार्यं बोध्यते न न्यूनस्येति स्वीकारेणादोषात्।

नच तदन्तविध्यभावेऽपि कृद्ग्रहणपरिभाषया अणन्ततदादिपदेन कुम्भकारेत्यस्य ग्रहणे ततो ङीपि न कुम्भकारेय इत्यस्यापत्तिरिति वाच्यम्, टिड्ढेति सूत्रेऽणः कृतोऽकृतश्च जिघृक्षिततया कृन्मात्रग्रहणाभावेन कृद्ग्रहणपरिभाषाया अप्रवृत्तेः।

नच तदन्तविध्यभावे कारशब्दान्ङीप्यपि न कारीशब्दाड्ढक् कुम्भकार्या अपत्यमिति विग्रहे कारीशब्दे एकार्थीभावाभावादिति वाच्यम्, परमगार्ग्यायण इति येनविधिरितिसूत्रस्थभाष्यप्रयोगेण अपर्याप्त्या एकार्थीभावमादायापि तद्धितप्रवृत्तिस्वीकारात्।

नचैवं राजपुरुषस्यापत्यमिति विग्रहे पुरुषशब्दादपि इञ् स्यादिति वाच्यम्, प्रत्ययार्थनिष्ठविशेष्यतानिरूपितप्रकारताप्रयोजकतापर्याप्त्यधिकरणात्प्रत्यय इति स्वीकारेण पुरुषशब्दादिञोऽप्रवृत्तेः। नच परमगार्ग्यायण इत्यस्यासिद्धिः प्रत्ययानुद्देश्यकप्रत्ययविधावेव तथानियमस्वीकारेणादोषात्। एवं च तदन्तविधिबोधनद्वारा कारीशब्दाड्ढग्वारणाय अनुपसर्जनाधिकार इति स्थितम्।

नच कारीशब्दे अर्थवत्सूत्रोक्तार्थवत्त्वाभावेन प्रातिपदिकत्वाभावान्न ढक्। नच कृद्वृत्तीयैकार्थीभावस्य कारेत्यत्र सत्त्वेन कृदन्तत्वात्प्रातिपदिकत्वम् एतादृशे विषये समासार्थं कृद्वृत्त्यर्थं चैकस्यैवैकार्थीभावस्य कल्पनेन कारेत्येतत्पर्याप्तैकार्थीभावाभावेनाप्रातिपदिकत्वादत एव पञ्चनावप्रिय इत्यत्र नैकार्थीभावद्वयम्, अन्यथा पञ्चनावेत्यस्य तद्धितान्तत्वात्प्रातिपदिकत्वेन टावापत्तेः। नच पञ्चनावप्रिय इत्यत्र बहुव्रीह्यर्थमेकार्थीभावस्य प्रथमं कल्पनीयतया अपर्याप्त्या तमादायैव तत्पुरुषटचोः सिद्धया नैकार्थीभावद्वयम्, प्रकृते तु कृद्वृत्त्यर्थं प्रथमोकार्थीभावः

CC-0. Vasishtha Tripathi Collection. Digitized by eGangotri

कल्प्य एवेति वाच्यम्, कर्मण्युपपदे अण् इत्युक्त्या कृदर्थमपि विशिष्ट एवैकार्थीभावकल्पनादिति वाच्यम्,

परिष्कृतस्यार्थवत्त्वस्य तत्र सत्त्वेन प्रातिपदिकत्वेन ढगापत्तेर्दुर्वारत्वात् । परिष्कारश्चार्थवत्सूत्रे वक्ष्यते इत्यलम् ॥

## जानपदकुण्डगोणेति ६८

ननु जानपदेति सूत्रे कालग्रहणं वर्णग्रहणं चाकृत्वा वर्णादनुदात्तादित्यनन्तरं कालादिति पठित्वा वर्णादित्यनुवर्त्य वर्णवाचकात्कालशब्दान्ङीबित्यर्थेन कालीत्यस्य, क्रौर्यगुणवत्यां टापा कालेत्यस्य, च सिद्ध्या सूत्रे कालवर्णयोर्ग्रहणं व्यर्थम् ।

न च जानपदेतिसूत्रेण ङीषि अन्तोदात्तत्वं वर्णादित्यनन्तरं पठितेन कालादित्यनेन ङीपि पित्वादनुदात्तान्तत्वमिति स्वरे भेदापत्तिरिति वाच्यम्, कालशब्दस्य फिट्स्वरेणान्तोदात्ततया ङीप्यपि अनुदात्तस्य च यत्रोदात्तलोप इति अन्तोदात्तत्वलाभेन स्वरे भेदाभावात् ।

न च 'गुणे शुक्लादयः पुंसि' इति कोशबलेन वर्णवाचिकालशब्दस्य स्त्रीत्वमेव न सम्भवति अत एव यथान्यासे वर्णपदमर्शआद्यजन्तत्वेन वर्णवत्परमिति शेखरे व्याख्यातमिति वाच्यम्, एनी इत्यादौ वर्णवत्परे ङीपो दर्शनेन कालशब्दस्य वर्णवत्परत्वेऽपि ङीपः साधुत्वे इदानीमपि बाधकाभावादिति चेन्न—

कालशब्दान्ङीष् चेत्तर्हि वर्णवत्परत्वे एवेति नियमकरणद्वारा पुंयोगङीष्वारणार्थं कालवर्णयोर्ग्रहणस्य जानपदसूत्रे आवश्यकत्वात् ।

केचित्तु पदगौरवाद्योगविभागो गरीयानिति न्यायज्ञापनार्थं वर्णग्रहणमिति पुंयोगे ङीष् भवत्येवेति वदन्ति ।

## वोतो गुणवचनात् ९६

नन्वस्मिन्सूत्रे उद्ग्रहणं व्यर्थं गुणवाचिनः प्रातिपदिकाद्वा ङीषित्यर्थेन सकलेष्टसिद्धेः, न चोद्ग्रहणाभावे अजाद्यतष्टावित्यतोऽत इत्यस्यानुवृत्त्यापत्तौ अदन्ताद् गुणवाचिन इत्याद्यर्थापत्तौ मृद्वीत्यस्यासिद्ध्यापत्तिः, शुक्लेत्यादौ ङीषापत्तिश्चेति वाच्यम्, तथा सति शोणीत्यादावनेनैव ङीषि सिद्धे शोणात्प्राचामित्यस्य वैयर्थ्यापत्त्या स्वस्वयोगोपधानेति

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

वार्तिकारम्भेण च अत इत्यस्यानुवृत्तिज्ञापनादिति चेन्न--

एवं सति मृद्वीत्यस्य सिद्धावपि शुक्लेत्यादौ ङीषापत्तेस्तादवस्थ्यात्। न च खरुसंयोगोपधान्नेति वार्तिकेन निषेधान्न शुक्लेत्यत्र ङीषिति वाच्यम्, खरुसाहचर्येण उदन्तसंयोगोपधादेव तेन निषेध इत्यर्थस्यापि स्वीकर्तुं शक्यतया शुक्लेत्यस्यासिद्धितादवस्थ्यात् साहचर्यानाश्रयणेन शुक्लेत्यत्र दोषवारणेऽपि श्वेतेत्यादौ दोषाच्च । न च शोणात्प्राचामिति सूत्रारम्भेणादन्तगुणवाचिनो न ङीषिति कल्पनया न श्वेतेत्यादौ दोष इति वाच्यम्, एवमपि शुचिरित्यत्र ङीषोवारणाय उदुग्रहणस्यावश्यकत्वात्। न च शुचिशब्दस्य शुचेः किदिन् इति सूत्रनिष्पन्नतया कृदन्तत्वेन 'कृदिकारादक्तिन' इत्यनेन, उणादीनामव्युत्पन्नत्वात् 'सर्वतोऽक्तिन्नर्थादित्येक' इत्यनेन, वा वैकल्पिको ङीषिष्यत एवेति वाच्यम्, एवमपि तकारान्तहरिच्छब्दान्ङीष्वारणाय उदुग्रहणस्यावश्यकत्वादित्यलम्।

## इन्द्रवरुणभवशर्वेति ९७

ननु इन्द्रवरुणेति सूत्रेण अनुगेव विधीयताम् आनुकि आकारोच्चरणं किमर्थम्। नचेन्द्रशब्दादाचक्षाणरयन्तात्क्वौ स्त्रियां पुंयोगे इन्द्राणीत्यस्य सिद्ध्यर्थं तदिति वाच्यम्, अत इत्यनुवृत्तेरनुपसर्जनत्वाभावात्तत्र ङीष आनुकश्चाप्रवृत्त्या इन्द्राणीति रूपस्यानिष्टत्वादिति चेन्न–

अनुग्विधाने दीर्घं बाधित्वा पररूपे इन्द्राणीत्यस्यासिद्ध्यापत्तेः।

न च नुकि विधातव्ये अकारोच्चारणं पररूपबाधनार्थमिति वाच्यम् 'अल्लोपोऽन' इत्यस्य बाधनेनाकारोच्चारणस्य चारितार्थ्येन पररूपबाधकत्वायोगात्।

न चेदानीमनो लाक्षणिकत्वान्न तत्प्राप्तिरिति वाच्यम्, उधसो नाशेन सिद्धेऽनङ्करणं धनुषश्चेत्युत्तरार्थमिति भाष्योक्त्या 'अल्लोपो-' इत्येतद्विषये प्रतिपदोक्तपरिभाषाऽप्रवृत्त्यवगमात्। अन्यथा नादेशक-अल्लोपाप्रवृत्तेः कुण्डोध्नीत्यस्यासिद्ध्या भाष्यासंगतिः स्पष्टैव।

न च यदि प्रकृतेऽल्लोपः स्यात्तर्हि 'पत्युर्नो यज्ञसंयोगे' इति इन्द्रादीनां नादेशेनैव सिद्धे नुगागमकरणं व्यर्थं सदल्लोपबाधकम्, आरोच्चारणं च पररूपबाधकमिति वाच्यम्, शर्वशब्दे नुगागमपदे न

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

योगाद्धमन्तादिति निषेधेन लोपाप्राप्त्या शर्वणी इति नादेशपक्षे च शर्व्-योगाद्धमन्तादिति निषेधेन लोपाप्राप्त्या शर्वणी इति नादेशपक्षे च शर्वणीति फलभेदेन नादेशस्य विधातुमशक्यतया अकारोच्चारणमल्लोपबाधकम् आकारोच्चारणं च पररूपबाधकमित्यदोषात्।

स्वाङ्गाच्चोपसर्जनादसंयोगोपधात् ९८

उपसर्जनात् किम् सुशिखा। नन्वत्र शिखशब्दाट्टापि ततः सुशब्देन समासे अदन्तत्वाभावान्ङीषोऽप्राप्त्या इदमयुक्तम्। न चोपसंजनिष्यमाणन्यायेन पूर्वं टापोऽप्रवृत्तिरिति वाच्यम्, उपसंजनिष्यमाणन्यायेन तद्विषयदपवादविषयातिरिक्तत्वेन संकोचात् अस्वाङ्गपूर्वपदात्परस्वाङ्गान्तप्रातिपदिकात्तेन ङीष्विधानेन अजाद्यतष्टाबितिशास्त्रीयादन्तपदार्थे तादृशस्वाङ्गान्तातिरिक्तत्वेन संकोचेऽपि शिखाशब्दे टापो दुर्वारत्वादिति चेन्न—

शिखेत्यत्रान्तरङ्गत्वाट्टापि सुशिखेत्यत्र दोषाभावेन उपसर्जनाद्ग्रहणसामर्थ्येन अत इत्यनुवृत्तेः क्वाचित्कत्वबोधनात् टापोऽनन्तरमपि ङीषापत्त्या तद्वारणाय उपसर्जनादित्यस्यावश्यकत्वात्। अत एव अनड्वाहीत्यत्र ङीषिति, अन्यथा पाठसामर्थ्याद् हलन्तादपि बिद्गौरेति ङीषिति वक्तव्यं स्यात्।

न च बहुव्रीहेरित्यनुवृत्त्यैव सुशिखेत्यत्र दोषाभावादेवमप्यनुपसर्जनग्रहणं व्यर्थमिति वाच्यम्, अतिकेशीत्यादेरसिद्ध्यापत्त्या बहुव्रीहिग्रहणानुवृत्तेः कर्तुमशक्यत्वात्।

ननूपसर्जनादित्यस्य भाष्ये शिखा सुशिखा अशिखेति प्रत्युदाहरणानि दृश्यन्ते तत्र शिखेति प्रत्युदाहरणं नोचितम्। कल्याणपाणिपादेत्यत्र ङीष्वारणाय अस्वाङ्गपूर्वपदाद्वेत्यतः अस्वाङ्गपूर्वपदादित्यस्यानुवृत्त्या शिखेत्यस्य अस्वाङ्गपूर्वपदात्परत्वाभावात्। नापि अशिखेति प्रत्युदाहरणमुचितं, सहनञ्विद्यमानपूर्वाच्चेत्यनेन निषेधात्। नापि सुशिखेति प्रत्युदाहरणमुचितम्, समासात्प्रागेवान्तरङ्गत्वाट्टापि अदन्तत्वाभावेन ङीषोऽप्रवृत्तेरिति चेन्न—

एवं सति उपसर्जनादिति व्यर्थं सत् अस्वाङ्गपूर्वपदादित्यत्र प्रसज्यप्रतिषेधाश्रयणेन स्वाङ्गरूपपूर्वपदात्परं यत्स्वाङ्गं ततो न ङीषित्यर्थात् ...त्यत्र ङीषो वारणायोपसर्जनादित्यस्यावश्यकत्वात्।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

न चासमर्थसमासवाक्यभेदरूपगौरवेण फलाभावेन चोक्ता कल्पनाऽयुक्तेति उपसर्जनादित्यस्य वैयर्थ्यमेवेति वाच्यम्, अस्य करः अकरः मस्तकेऽकरो यस्याः सा मस्तकाकरा इत्यत्र ङीष्निवृत्तये प्रसज्यप्रतिषेधाश्रयणस्यावश्यकत्वात् स्वाङ्गभिन्नपूर्वपदात्परं यत्स्वाङ्गमिति व्याख्याने अरूपस्वाङ्गभिन्नपूर्वपदात्परत्वेन प्रकृते ङीष् दुर्वारः स्यादित्यन्यत्र विस्तरः। अस्य शिखा अशिखेति विग्रहेण अशिखेत्यपि साधुः। सुशिखेत्यस्य सौष्ठवं पूर्वमुक्तमेवेत्यलम्।

## तद्धिताः ९९

ननु तद्धिताधिकारः स्त्रियामित्यनन्तरमेवास्तु तथा सति प्राचां ष्फ इति सूत्रे तद्धितग्रहणं, यस्येतिचेति सूत्रे ईतिग्रहणम्, औङः श्यामिति वार्तिकम्, नस्तद्धित इत्येव टिलोपसिद्धौ डापि डित्करणं च मास्तु इति महल्लाघवम्। ;नचैवं ङीब्ङीषोर्ङस्येत्वानापत्तिरतद्धित इति निषेधादिति वाच्यम्, चुटुङः इति न्यासेनैव ङस्येत्त्वसिद्धेः ङीवादिस्थाने टीवादिकरणेन सिद्धेश्च। नचेदानीं तद्धितान्तत्वेन प्रातिपदिकत्वात्फिट्स्वराप्त्तिरिति वाच्यम्, पकारषकाराद्यनेकानुबन्धकरणेन स्त्रीप्रत्यये तदप्रवृत्तिकल्पनादन्यथा यथान्यासेऽपि लिङ्गविशिष्टपरिभाषया फिट्स्वरं दुर्वारः स्यात्। प्रकृतिप्रत्ययविभागशून्येष्वेव तत्प्रवृत्तेश्चेति चेन्न—

पट्वीत्यत्र ओर्गुण इति गुणापत्तेः। न च यस्येतिचेत्यत्र ईति ग्रहणं कृत्वा ईतिग्रहणेन तद्धितनिमित्तं कार्यं ङीबादौ नेति प्रकल्प्य दोष इति वाच्यम्, कुरूरित्यत्र ओर्गुणापत्तेः। समान्यतः स्त्रीप्रत्यये नेत्येवं ज्ञापने तु आसुरायणीत्यादौ ष्फेपि यस्येति चेति लोपानापत्तिः शुनीत्यत्र अतद्धित इति निषेधेन संप्रसारणानापत्तिः दण्डिनीत्य नस्तद्धित इति टिलोपापत्तिश्चेति दिक्।

## लक्षणेत्थंभूताख्यानभागवीप्सासु प्रतिपर्यनवः। १००

अत्र 'भागे प्रतिपर्यनव' इत्येको योगः ततो 'लक्षणेत्थंभूताख्यानवीप्सासु' ततः 'अभिः' संपूर्णं पूर्वसूत्रमनुवर्तते अभागे इति चिन्त्यं प्रयोजनम्।

CC-0. Vasishtha Tripathi Collection. Digitized by eGangotri

## कर्तृकर्मणोः कृति १०१

अत्र कृत्पदे प्रत्ययग्रहणपरिभाषया तदन्तविधौ कृदन्ते इत्यर्थो लभ्यते तच्च कृदन्तोपस्थाप्यक्रियापरम् । तथा च कृदन्तोपस्थाप्यक्रियानिरूपितकर्तृकर्मणोः षष्ठीति सूत्रार्थः । यद्वा कृतीति सतिसप्तम्यन्तं तथा च कृति सति प्रत्यासत्त्या कृत्प्रकृत्युपस्थाप्यक्रियानिरूपितकर्तृकर्मणोः षष्ठीति सूत्रार्थः । कृष्णस्य कृतिरिति कर्तरि, जगतः कर्ता कृष्ण इति कर्मणि, उदाहरणम् । कर्तृकर्मणोरिति किम् । शस्त्रेण भेत्ता । करणे माभूत् ।

ननु कर्तृत्वकर्मत्वे क्रियापेक्षे इति कर्तृकर्मपदाभ्यां क्रियावाचकं पदमाक्षिप्यते तच्च धातुरेव ततश्च द्वये प्रत्ययाः तिङः कृतश्च तत्र तिङ्योगे नलोकेति षष्ठीनिषेधात् परिशेषात्कृद्योग एव षष्ठी भविष्यतीति कृद्ग्रहणाभावेऽपि धातूपस्थाप्यक्रियानिरूपितकर्तृकर्मणोर्वाचकात्षष्ठीत्यर्थेन सकलेष्टसिद्ध्या कृद्ग्रहणं व्यर्थम् । एतेन कृद्ग्रहणाभावे पाचयति यज्ञदत्तो देवदत्तनेत्यत्र देवदत्तशब्दात् तण्डुलं पचतीत्यत्र तण्डुलात् देवदत्तेन पच्यते इत्यत्र देवदत्तात् कर्तृकर्मणोरनुक्ततया षष्ठी दुर्वारा इत्यपास्तम् नलोकेति निषेधात् ।

न च उभयप्राप्तौ कर्मणीति सूत्रे अन्यपदार्थावगतये कृद्ग्रहणमावश्यकम्, अन्यथा कर्तृकर्मणोरिति सूत्रे कृद्ग्रहणाभावे षष्ठ्याऽनैमित्तिकत्वेन तत्प्रयोजकत्वस्य कृत्यसंभवेन अन्यपदार्थाप्रसिद्धिः स्यात् । ततश्च उभयप्राप्तावित्यत्र तत्पुरुष एव स्यात् तस्मिन्सति ओदनस्य पाकः ब्राह्मणानामागमनमित्यत्र भिन्नक्रियानिरूपितकर्तर्यपि षष्ठी न स्यात् उभयप्राप्तौ कर्मण्येवेति नियमात् कृद्ग्रहणसत्त्वे तु अन्यपदार्थस्य स्पष्टतया उभयप्राप्तावित्यत्र बहुव्रीहौ उभयोः प्राप्तिर्यस्मिन्कृतीत्यर्थाद्भिन्नक्रियानिरूपितकर्तृकर्मणोर्न षष्ठीनियम इति वाच्यम्, एकाचौ द्वे इत्यत्रापि अन्यपदार्थमादाय बहुव्रीहिवत् प्रकृतेऽपि कर्तृकर्मपदाक्षिप्तधातुरूपान्यपदार्थमादाय बहुव्रीह्युपपत्तौ तदर्थं कृत्पदस्यानावश्यकत्वात् ।

न च करोतीति कृदिति व्युत्पत्त्या कृत्पदं कर्तृपरं देवदत्तस्य यज्ञदत्तस्य काष्ठानां भेद इत्यत्र गुणभूतणिच्प्रकृत्यर्थकर्तृवाचकात्षष्ठीविधानार्थमिति वाच्यम्, तृतीयावत् गुणभूते कर्तरि षष्ठ्या अपि सिद्धेः ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

न च देवदत्तेन शत्यः, नदीं नाविकः, आश्रिको भूमिम् इत्यादौ तद्धितान्तोपस्थाप्यकर्तृकर्मणोर्वाचकात्षष्ठीवारणाय कृद्ग्रहणमिति वाच्यम्, कारकान्वयितावच्छेदकसाध्यत्वेन रूपेण क्रियोपस्थितिर्धातुत एवेति भाष्यसिद्धान्तात् शत्यादिपदोपस्थाप्यक्रियायां कर्तृकर्मणोरन्वयाभावेन देवदत्तेन शत्य इत्यादिवाक्यस्यैवाभावेन तत्र षष्ठीवारणप्रयासस्यानावश्यकत्वात्।

न च कृतपूर्वी कटमित्यादौ षष्ठीवारणार्थं कृद्ग्रहणं, कृद्ग्रहणसत्त्वे कृदन्तनिष्ठशक्तिग्रहप्रयोज्योपस्थितिविषयक्रियाकर्तृकर्मणोः षष्ठीत्यर्थेन प्रकृते 'यदा वाक्यं न तदा प्रत्ययः। यदा प्रत्ययस्तदा सामान्येन वृत्तिरेव' इति भाष्येण कृतेत्येतन्मात्रस्य प्रयोगासंभवेन कृदन्तनिष्ठानुभविकशक्तेरभावात्षष्ठ्यप्राप्तेरिति वाच्यम्, निष्ठान्तधातुयोगे नलोकेति षष्ठीनिषेधेन सिद्धेः।

न च कर्तव्यपूर्वी कटमित्यत्र कटशब्दात्पूर्वोक्तरीत्या षष्ठीवारणाय कृद्ग्रहणमिति वाच्यम्, कृधातोः सकर्मकत्वेन तयोरेवेति नियमेन कर्मण्येव तव्यप्रत्यये कर्मण उक्ततया तत्र षष्ठ्यप्राप्तेः। कर्तव्यः कटः पूर्वमिति विग्रहे सविशेषणानामिति न्यायेन वृत्तरेव दुर्लभतया तादृशप्रयोगस्यैवासंभवाच्च।

न च कृतपूर्वी कटमित्यत्रेव कर्तव्यपूर्वी कटमित्यत्रापि पूर्व कर्मणोऽविवक्षया भावे तव्यप्रत्यये पश्चात्कटरूपकर्मणो योगे कर्तव्यपूर्वी कटमिति वाक्यस्य साधुत्वमिति वाच्यम्, भाष्योक्तातिरिक्तस्थले तथासाधुत्वाङ्गीकारे मानाभावादिति चेदत्र—

शब्दकौस्तुभकृतः—श्वमांसादिभिरपि शक्यं क्षुत्प्रतिहन्तुमित्यत्रेव कर्मसामान्ये क्तप्रत्यये कर्मविशेषानन्वितस्यैव कृतशब्दस्य पूर्वशब्देन समासे इनौ कृतपूर्वीत्यस्य सिद्ध्या पश्चात्किं कृतमिति विशेषजिज्ञासायां कटरूपकर्मणो योगे षष्ठीवारणाय कृद्ग्रहणमावश्यकम्।

न च कर्मसामान्ये प्रत्ययेऽपि शक्यं क्षुत्प्रतिहन्तुमित्यत्रेव कर्मणोऽभिधानान्न षष्ठीप्राप्तिरिति वाच्यम्, तद्धितार्थेनैकार्थीभूतेन कृतशब्देन सह कटस्यानन्वयेन कटरूपकर्मणोऽभिधानासम्भवात् शक्यं क्षुत्प्रतिहन्तुमित्यत्र तु सामानाधिकरण्येनान्वयात्कर्मणोऽभिधानान्नद्वितीयेत्याहुः।

CC-0. Vasishtha Tripathi Collection. Digitized by eGangotri

न च नलोकेति निषेधात्षष्ठ्यप्राप्त्या कृद्ग्रहणं व्यर्थमेवेति वाच्यम्, निष्ठान्तोपस्थाप्यकर्तृकर्मणोर्न षष्ठीत्यर्थात् प्रकृते निष्ठान्तस्य प्रयोगासंभवेन निषेधाप्रवृत्तेरित्यलम् ।

अन्ये तु कर्मसामान्ये कृत्प्रत्यये निर्विशेषं न सामान्यमिति न्यायेन विशेषानालिङ्गितसामान्यासंभवात् कर्मत्वावच्छिन्नस्य सर्वस्याप्यभिधानं स्यादिति कटशब्दाद् द्वितीयानुपपत्तिरुक्तत्वात् । किं च कारकाणां तदर्थकप्रत्ययान्तधातुसमभिव्याहारे धात्वर्थेऽन्वयोऽव्युत्पन्नः । अत एव तण्डुलं पचतीत्यर्थे तण्डुलः पचतीति प्रयोगो न सति संभवे तत्रैवान्वयस्यौत्सर्गिकत्वात् । यत्र तथान्वये बाधकं वृत्तस्य विशेषणयोगो नेति तत्र तु धात्वर्थेऽन्वय इत्यपि न युक्तं तण्डुलं पक्वीयतीति प्रयोगापत्तेः । सिद्धान्ते तु तण्डुलं पक्वीयतीति न प्रयोगाः कारकाणां तदर्थकप्रत्ययान्ते एकदेशत्वेनान्वयासंभवादतः पच्यते तण्डुलः स्वयमेवेतिवत् कर्मान्वययोग्यधात्वर्थफलांशस्याविवक्षणेन अकर्मकत्वाद्भाव एव प्रत्ययः कृतं पूर्वमनेनेति विग्रहे सुप्सुपेति समासे तत इनौ कृतपूर्वीति ततस्त्यक्तस्य फलांशस्य विवक्षया कटस्य गुणभूतक्रियया संबन्धः। एवं चैतादृशस्थले षष्ठीवारणार्थं कृद्ग्रहणम् ।

न चैवं रीत्या ग्रामो गम्यते इत्यपि साधुः स्यादिति वाच्यम्, विवक्षायाः प्रामाणिकप्रयोगानुरोधितया अस्मादृशविवक्षयाऽतिप्रसङ्गदानस्यायुक्तत्वात् अन्यथा असूर्यंपश्या इत्यत्रेव अन्यत्रापि असमर्थसमासस्य साधुत्वं स्यात् अत एव न लोकेति षष्ठीनिषेधो न एतादृशकृतपदस्य एतादृशवृत्तिघटकतयैव प्रयोगस्य साधुत्वेन निष्ठान्तपदशक्तिज्ञानसहकारेणोपस्थितक्रियाकर्तृकर्मणोरेव तेन निषेधात् ।

न च गत्यर्थेभ्यो भावे क्तस्य गत्यर्थाकर्मकेतिसूत्रेणानुशिष्टतया तस्य लोके प्रयोगसंभवेन गतपूर्वी ग्राममित्यत्र षष्ठी स्यादिति वाच्यम्, उक्तरीत्या नलोकेति निषेधेनादोषात् । न चैवं कृतपूर्वी सूपम्, अधीतपूर्वी वेदम्, इत्यादिप्रयोगाणां भाष्यानुक्ततयाऽसाधुत्वापत्तिरिति वाच्यम्, कृतपूर्वी कटमिति कृद्ग्रहणप्रत्युदाहरणप्रदर्शनपरभाष्येण कृद्ग्रहणप्रत्युदाहरणयोग्यलक्ष्याणां साधुत्वानुमानेनादोषादिति प्राहुः ।

केचित्तु कृतपूर्वी कटमित्यत्र कर्मण्येव क्तप्रत्ययस्तेन न तेन कर्मत्व-

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

स्योक्ततया द्वितीयानुपपत्तिरिति वाच्यम्, इनिप्रत्ययस्य कर्तरि विधानेन तदुपस्थाप्यक्रियानिरूपितकर्मत्वस्यानुक्ततया द्वितीयोपपत्तेः। षष्ठ्यापत्तिस्तु न तद्धितोपस्थाप्यभावनाकर्मत्वस्य कटे सत्त्वेऽपि कृदन्तोपस्थाप्यानुक्तभावनाकर्मत्वस्याभावात् आसने आस्ते इत्यत्र गुणक्रियाधिकरणत्वस्योक्तत्वे प्रधानक्रियानिरूपिताधिकरणत्वस्यानुक्ततया सप्तमीवत्। एवं च कर्मणोऽविवक्षयाभावे क्तोपपादनमयुक्तमिति वदन्ति।

तत्तुच्छम्। ईक्षांचक्रे इत्यत्र विभिन्नकर्तृकर्मव्यावृत्तये सामान्यविशेषयोरभेदाङ्गीकारेण क्रिययोरैक्येन तत्साधनानामपि ऐक्यावगतिवत् कृतपूर्वीत्यत्रापि विभिन्नकालिकत्वविभिन्नकर्तृकत्वादिव्यावृत्तये क्रिययोरैक्यमास्थेयमिति तत्साधनानामैक्येनैतादृशविषये अन्यतरक्रियाकर्मण उक्तत्वेनान्यतरस्मिन्ननभिहितत्वस्य दुर्वचत्वात्। आसने आस्ते इत्यादौ कालभेदेन क्रियाभेदान्न तत्साधनानामैक्यमिति न सप्तम्यनुपपत्तिः। किं च कारकान्वयितावच्छेदकरूपेण क्रियोपस्थितेर्धातुत एवेति सिद्धान्तात्तद्धितोपस्थाप्यक्रियायां कटस्य कर्मत्वमयुक्तम्, अन्यथा पूर्वीकटमित्यपि साधुः स्यात् अत एव नाविको नदीम्, आश्रिको भूमिं, देवदत्तेन शत्य, इत्यादयो न प्रयोगाः। किं च गुणक्रियनिरूपितशक्तेः प्रधानक्रियानिरूपितशक्तिवदभिहितत्वानभिहितत्वस्वीकारेण तद्धितोपस्थाप्यक्रियानिरूपितशक्तेरनुक्ततया द्वितीयोपपादनमयुक्तं श्रुत्वाप्यर्थं नानुमतस्तेन सोऽर्थः कुबुद्धिनेत्यत्र अर्थपदोत्तरं द्वितीयानुपपत्तेरिति दिक्।

## सुपो धातुप्रातिपदिकयोः १०२

नन्वत्र अङ्गावयवस्य सुपो लुगित्यर्थकं सुपोऽङ्गस्येव सूत्रमस्तु। न च अङ्गसंज्ञानिमित्तकस्य सुपोलुगित्यर्थभ्रमवारणाय यथाश्रुतं सूत्रमिति वाच्यम्, सप्तम्यधिकरणे चेति निर्देशेन तादृशभ्रमवारणसम्भवात्। एवं राजन् ङस् पुरुष सु इत्यत्र समासत्वे प्रातिपदिकत्वे सुपि अङ्गसंज्ञायाम् अङ्गावयवसुपो लुगिति प्रक्रियेति चेन्न—

तथान्यासे परमसर्वै परमसर्वस्मै इत्यादौ शीभावाद्यनापत्तेः। परम सु सर्व सु इति समुदायस्य सर्वनामत्वाभावेन जसादीनां सर्वनामभ्यो विहितत्वाभावात्।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

न च सर्वनाम्नः परस्य जसः शीत्येवार्थोस्तु विहितविशेषणं च मास्तुइति नोक्तदोषः अङ्गावयवसुपो लुकि जसः सर्वनामपरत्वादिति वाच्यम्, तथा सति मासपूर्वाः वर्णाश्रमेतराणामित्यादौ श्यादीनामापत्तेः समुदायस्य सर्वनामत्वाभावेऽपि अवयवस्य सर्वनामत्वेन जसादीनां सर्वनामपरत्वानपायात्।

नच द्वन्द्वेचेत्यादौ घटकत्वार्थकत्वं सप्तम्या अभ्युपगम्य द्वन्द्वघटकः सर्वनामसंज्ञो नेत्यर्थात् समुदायस्यापि व्यपदेशिवद्भावेन द्वन्द्वघटकत्वादवयवस्य च स्वत एव तत्त्वात् द्वयोः सर्वनामत्वनिषेधान्नायं दोषोविहितविशेषणत्वाभावेऽपि। किंच प्रत्ययग्रहणे चापञ्चम्या इति परिभाषया तदादेरुपस्थित्या तस्य पञ्चम्यन्तत्वेन सर्वनाम्न्यन्वयात् तदादिभूतादन्तसर्वनाम्नः परस्य जसः शीत्यादिक्रमेणार्थात् द्वन्द्वेचेत्यत्र प्रथमार्थकसप्तम्यङ्गीकारेण समुदायस्यैव संज्ञानिषेधेऽपि न दोषः यत्तदादिवर्णाश्रमेतर इति न तत्सर्वनाम यच्च सर्वनाम इतर इति न तत्तदादीति। किंच सिद्धान्तेऽवयवस्यानिषेधेनाकजर्थं संज्ञावश्यिका तथा च सप्तमी प्रथमार्थे एवेति वर्णाश्रमेतराणामित्यत्र दोष इति वाच्यम्,

विहितविशेषणानङ्गीकारे अ अन्ये चेति विग्रहे द्वन्द्वे सुपो लुकि समुदायात्स्वादेः सवर्णदीर्घस्य च प्राप्तौ अपरनिमित्तकत्वेनान्तरङ्गत्वादामि पश्चात्सवर्णदीर्घे अ अन्येति द्वन्द्वस्य सर्वनामत्वनिषेधेपि अन्यस्य सर्वनामत्वेन परादिवद्भावेन आन्य इत्यस्य सर्वनामत्वात् अ अन्य इत्यत्र यत्तदादित्वमासीत् तस्यैकदेशविकृतन्यायेन आन्य इत्यत्र सत्वात्तदादिभूतादन्तसर्वनाम्नः परत्वस्य आन्य इत्यत्र सत्वेन सुडापत्तेः, विहितविशेषणाङ्गीकारे अ अन्य इत्यस्माद्विहितत्वेन तादृशसमुदायस्य सर्वनामत्वाभावेन न सुडिति तादृशविशेषणस्य फलसत्वात् तस्यावश्यं स्वीकार्यत्वेन तादृङ्न्यासे परमसर्वे इत्यादिलक्ष्ये दोषो दुरुद्धर एव तादृङ्न्यासेऽपि अ सु अन्य जस् आमित्यवस्थायां सुपो लुकि दीर्घे समुदायवृत्तितदादित्वस्यैकदेशविकृतन्यायेन आन्य इत्यत्र सत्त्वात् परादिवत्त्वेन सर्वनामत्वाच्च दोषः विहितविशेषणे सर्वनाम्नो विहितत्वाभावान्न दोष इति बोध्यम्।

न च अचः परस्मिन्निति एकादेशस्य स्थानिवत्त्वेन सर्वनामत्वं,

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

किं च पूर्वोत्तरपदनिमित्तककार्यात्पूर्वमन्तरङ्गोऽप्येकादेशो नेति वचनान्न सुट्, किं च सुडादिकार्ये कर्तव्ये पदद्वयसंबन्धिवर्णद्वयापेक्षस्य सवर्णदीर्घस्यासिद्धत्वेन अ अन्य इत्यस्य सर्वनामतदादित्वाभावेन सर्वनाम्नः तदादेः परत्वस्याप्यभावात् सुटः प्रवृत्तिरेव नेति व्यर्थं विहितविशेषणमिति परमसर्वे इत्यादौ न दोष इति वाच्यम्।

परम औ हरि औ इत्यवस्थायां समासे भ्यामि पूर्वस्याङ्गसंज्ञायां सुपो लुकि भ्यांसत्ताधीनाऽङ्गसंज्ञा तदधीनो विभक्तिलोप इति औ विभक्तेर्लोपो भ्यान्निमित्तकः। तथाच अचः परस्मिन्निति स्थानिवत्त्वेन तस्मिन्परे हरेरिकारस्य यणापत्तेः। मम तु प्रातिपदिकसंज्ञायां भ्यामोऽनपेक्षणान्न विभक्तिलुकः परनिमित्तकत्वमिति न स्थानिवत्त्वम्।

न च परमश्चासौ हरिः परमहरिः कर्मधारये तत एकशेषे ताभ्यां परमहरिभ्यामिति स्वीकारेणादोषः। किं च अचः परस्मिन्नित्यत्र निमित्तपदेन सप्तम्यन्तस्यैवापेक्षणात्प्रकृते अङ्गस्येति षष्ठीनिर्देशान्न सुब्लुकः परनिमित्तकत्वमिति वाच्यम्, एवं तर्हि भानो भानवः इत्यत्र गोतोणिदिति णित्ववारणाय विहितविशेषणत्वस्यावश्यकत्वेन शोभनश्चासौ गौश्चेति कर्मधारये न पूजनादिति निषेधाट्टचोऽभावे समासाद्विहितसर्वनामस्थानस्य णिद्भावो न स्यात् ततश्च वृद्ध्यनापत्तेः सर्वनामस्थानस्य सुसु गोसु सु इत्यसमाद्विहितत्वेन ओकारान्ताद्विहितत्वाभावात।

न च ओत्सूत्रस्थभाष्यप्रामाण्येन प्रतिपदोक्तपरिभाषाया वर्णग्रहणेऽपि प्रवृत्तेर्निर्विवादतया तयैव भानो भानव इत्यत्र वृद्ध्यभावसिद्ध्या विहितविशेषणत्वस्य गोतोणिदित्यत्रासत्त्वेन दोषाभावः। किं च संबुद्धौ शाकल्येतिसूत्रसामर्थ्यादपि भानो इत्यत्र वृद्ध्यभाव इति वाच्यम्, सुष्ठु ज्ञानं यस्य कुलस्येतिबहुव्रीहौ सु सु ज्ञान सु सु इत्यवस्थायामेकार्थीभावस्यालौकिकविग्रहवाक्ये एव कल्पितत्वेन नपुंसके विद्यमानतया 'स्वमोर्नपुंसकात्' सुपोऽङ्गस्येत्यनयोः प्राप्तौ परत्वात्स्वमोरिति लुकि लक्ष्ये लक्षणन्यायेन पुनः सुबनुत्पत्तौ सुज्ञानमित्यस्यासिद्धेः।

न च नित्यत्वात्सुपोऽङ्गस्येति पूर्वं सुपो लुकि पश्चात्स्वमोरिति लुकं बाधित्वाऽतोऽमिति अमि सुज्ञानमित्यस्य सिद्धिरिति वाच्यम्, स्वमोरिति लुकोऽपि पश्चात्प्राप्तिसत्त्वेन नित्यत्वसाम्यात्परत्वेन लुकः प्राबल्येन दोषात्।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

न च बाधकाबाधितफलोपहितप्रसङ्गरूपनित्यस्यैव स्वीकारेण स्वमोरित्यस्य न नित्यत्वमिति न दोषः। किंच उपसंजनिष्यमाणन्यायेन यद्यत्र पूर्वं सुपो लुक् न स्यात्तर्हि सुपोऽङ्गस्येति लुकि अपवादस्यातोमित्यस्य प्रवृत्तिः स्यादिति संभावनायाः सत्त्वेन पूर्वं स्वमोरित्यस्याप्रवृत्तिश्चेति वाच्यम्, तथापि प्राध्या कृतं प्रधीकृतमित्यत्र सुपोऽङ्गस्येति लुकि अङ्गादिप्रत्ययनिमित्तकत्वेन तस्य परनिमित्तकतयाऽचः परस्मिन्निति स्थानिवत्त्वेनाजादिप्रत्ययपरत्वमाश्रित्य एरनेकाच इति यणापत्तेर्दुर्वारत्वात्।

न च पञ्चेन्द्राण्यो देवता अस्य पञ्चेन्द्र इत्याद्युदाहरणानुरोधेन लुकि न स्थानिवदित्यस्यावश्यमङ्गीकर्तव्यतया तेन स्थानिवत्त्वनिषेधान्न प्रकृते दोष इति वाच्यम्, पञ्चेन्द्र इति लक्ष्यानुरोधेन पूर्वस्य स्थितौ कर्तव्यायामेव यः स्थानिवद्भावस्तस्यैव निषेधोऽयं न तु पूर्वस्य कार्ये कर्तव्ये यस्तस्यापीति स्वीकारेण प्रकृते लुकि न स्थानिवदित्यस्याप्रवृत्तेः।

न च लुकि न स्थानिवत्त्वमित्यस्योभयविधस्थानिवत्त्वनिषेधकत्वम्, अन्यथा अदिप्रभृतिभ्यः शपः इत्यस्य शबादिसार्वधातुकनिमित्तकत्वेन परनिमित्तकत्वात् लुकोऽचः परस्मिन्निति स्थानिवत्त्वेन एतीत्यत्र तिनिमित्तकगुणानापत्तिः, शब्निमित्तकस्तु न, नलुमतेति निषेधादिति वाच्यम्, सर्वे इत्यादौ सर्वजस् इत्यवस्थायां शीभावाय जातायामङ्गसंज्ञायां पश्चादेकादेशे पूर्वान्तवद्भावेनैकादेशविशिष्टेऽङ्गत्वातिदेशेनैकारस्याङ्गावयवत्वात् परादिवद्भावेन सुप्त्वाच्च तस्य लुगापत्तेः। उभयत आश्रयणे नान्तादिवदित्यस्य तु नायं विषयः तेन पूर्वत्वपरत्वघटितधर्मस्यैवानतिदेशात्।

न च सिद्धान्तेऽपि सर्वे इत्यत्र प्रातिपदिकत्वातिदेशस्य सत्त्वेन सुब्लुग्वारणाय सुब्विशिष्टस्य सुपो लुगित्येवमर्थः सुपो धात्वित्यस्यावश्यं वक्तव्यः। वै० स्वघटितस्य स्वविशिष्टसञ्ज्ञावद्घटकत्वोभयसंबन्धेन, अत्र वै० स्ववृत्तित्व स्वान्ततदाद्यवयवेतरवृत्तित्वोभयसंबन्धेन, ततः प्रकृतेऽप्यदोष इति वाच्यम्, धातुसाहचर्येणैव तादृशार्थस्य लभ्यतया साम्प्रतं धातुग्रहणाभावेन तस्य वक्तुमशक्यत्वात्। सप्तम्यास्त्रालित्यस्य सर्वनामप्रकृतिकसप्तम्यास्त्रालित्यर्थात् परमसर्वस्मिन्नित्यत्र नलुक् न स्यात् सप्तम्याः सर्व-

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

नामप्रकृतिकत्वाभावात् ।

न च अङ्गावयवविभक्तेर्लुकि परमसर्वेत्यत्र सर्वेत्यस्य सर्वनामत्वेन सर्वनाम्नः परा या सप्तमी तस्यास्त्रलित्यर्थमङ्गीकृत्य न दोष इति वाच्यम्, सर्वनाम्नः परा या सप्तमीत्यर्थे वर्णाश्रमेतरेषु इत्यत्र त्रलापत्ते-र्दुर्वारत्वात् ।

न च सर्वनामार्थगतसंख्याभिधायिसप्तम्यास्त्रलित्यर्थात् वर्णाश्रमेत-रेषु इत्यत्र न त्रलापत्तिरिति वाच्यम्, तथा सति सर्वस्मिन् घट इत्यत्र घटपदोत्तरसप्तम्यास्त्रलापत्तेः ।

न च सर्वनामार्थगतसंख्याभिधायिन्याः सर्वनाम्नः परस्याः सप्तम्या-स्त्रलित्यर्थान्न दोषः। एवं षड्भ्यो लुगित्यस्य षडर्थगतसंख्याभिधायिनोः षट्संज्ञकात्परयोर्जस्शसोर्लुगित्यर्थः तेन प्रियषषः परमषडित्यत्रापि न दोष इति वाच्यम्, कच्छपीत्यत्र सुबुत्पत्तेः प्रागेव समासे ङीषिष्यते इदानीमङ्गत्वसंपादनाय सुप आवश्यकतया स्वार्थद्रव्यलिङ्गसंख्याकार-काणां क्रमिकतया पूर्वं लिङ्गविवक्षायां टापि कच्छपीत्यसिद्ध्यापत्ते-रित्यलम् ।

## इको ह्रस्वोऽङ्यो गालवस्य १०२

अत्रोत्तरपदे इत्यस्याधिकारेण पूर्वपदस्याक्षेपः । तच्च विशेष्यमिति इको विशेषणत्वात्तदन्तविधौ, अङ्य इत्यत्र प्रत्ययग्रहणपरिभाषया तद-न्तविधौ च ङ्यन्तभिन्नस्य इगन्तस्य पूर्वपदस्य ह्रस्वः स्यादुत्तरपदे इति सूत्रार्थः । ग्रामणिकुलम् ग्रामणिपुत्र इत्युदाहरणानि । अङ्य इति किम् गौरीपतिः । इक इति किम् रमापतिः ।

ननु अङ्य इति पर्युदासेन ङ्यन्तभिन्नस्य ङ्यन्तसदृशस्य इगन्तस्य ह्रस्व इत्यर्थेनैवेष्टसिद्धौ इकपदं व्यर्थम् । न च तदभावे अचश्चेति परिभाषोपस्थितया ङ्यन्तभिन्नस्याजन्तस्येत्यर्थापत्तौ रमापतिरित्यत्र ह्रस्वत्वापत्तिरिति वाच्यम्, तथा सत्यनेनैव ह्रस्वत्वसिद्धौ ङ्यापोः संज्ञाछन्दसोर्बहुलमिति सूत्रे आव्ग्रहणवैयर्थ्येनाचश्चेत्यस्य प्रकृतेऽ-नुपस्थितिकल्पनेन पर्युदासबलेन ङ्यन्तभिन्नस्येगन्तस्येत्यर्थेनेष्टसिद्धे-रिति चेन्न

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

उपस्थितत्वादीकारान्तत्वेनैव सादृश्याश्रयणापत्तौ वधूपतिरित्यत्र ह्रस्वत्वानापत्तेः ।

न च इयङुवङ्भाविनामव्ययानां च नेति वाच्यमिति वार्तिकस्थोवङ्ग्रहणसामर्थ्यॆन नैकारान्तत्वेन सादृश्यग्रहणमिति वाच्यम्, तावतापि नदीत्वोपलक्षितेगन्तत्वेनैव सादृश्यग्रहणापत्तौ भुवै श्रियै इत्यत्र नदीसंज्ञाया दृष्टतया भ्रूभङ्गः श्रीमद इत्यत्र वार्तिकस्य चारितार्थ्येन लक्ष्मीपतिरित्यत्रैव ह्रस्वः स्यात् न ग्रामणिपुत्र इत्यादाविति दोषात् ।

यदि तु तादृशसादृश्यग्रहणे वार्तिकस्थमव्ययग्रहणं व्यर्थमिति इगन्तत्वेनैव सादृश्यस्य विवक्षणान्न क्वापि दोषः इत्युच्यते तदा इग्ग्रहणं चिन्त्यप्रयोजनम्, अनेकसामर्थ्याश्रयणापेक्षया लाघवार्थं वेति बोध्यम् ।

## शक्तियष्ट्योरीकक् १०४

नन्वत्र ह्रस्वेकारघटित इकगेव विधीयताम्, एवं नञ्स्नञ् इति वार्त्तिकेऽपि, सवर्णदीर्घेणैव शाक्तीक इति दीर्घेकारघटितरूपसिद्धेः यस्येति चेतीकारलोपापत्तिस्तु न कक्ि एव विधातव्ये इकारोच्चारणसामर्थ्यादिति चेन्न—

कर्कलोहितादीकक् इति कर्कशब्दादीकक्ि यस्येतिचेतीकार लोपे स्त्रीत्वे नञ्स्नञ् इति वार्तिकेन ङीपि कार्कीकी इति भवति इदानीं तदनापत्तेः तदर्थं वार्तिके ईकगिति करणे शाक्तीकी इत्यस्यासिद्ध्यापत्तेः ।

ननु शक्तियष्ट्योरीकक् इत्यत्र ह्रस्वेकारं पठित्वा इ कक् इति पदद्वयमङ्गीकृत्य अन्त्यस्य इकारः कक् प्रत्ययश्चेत्यर्थः एवमेव सर्वत्र ईकग्विधायकसूत्रेषु कर्तव्यम् । वले चेत्यत्र वल्ककोश्चेति न्यस्यतामिति तेन दीर्घे शाक्तीक इत्यादेः सिद्धिः । नञ्स्नञ् इति वार्तिके च कक एव ग्रहणमस्तु इति चेन्न—वुञ्छण् इति सूत्रविहितककोऽपि ग्रहणेन वाराहिकेत्यत्र दीर्घङीपोरापत्तेः ।

केचित्तु वुञ्छण् सूत्रे अकारेत्संज्ञकमककं विधाय तदनुबन्धकग्रहणे नातदनुबन्धकस्येति परिभाषया तस्याग्रहणेनादोष इति वदन्ति ।

अन्ये तु 'शक्तियष्ट्योरीकक्' 'कर्कलोहितादीकक्' इत्याभ्यां टीककं विधाय शाक्तीकीत्यादीनां सिद्ध्या 'नञ्स्नञ्'—इति वार्तिके ईकग्रहणं चिन्त्यप्रयोजनमिति वदन्ति ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

परन्तु सर्वेऽप्यमी ज्ञानगौरवमनादृत्यैव प्रवृत्ता हेया एवेति बोध्यम्।

## लः कर्मणि च भावे चाकर्मकेभ्यः १०५

अत्र 'लः कर्मणि च' इत्येकं वाक्यम्। 'भावे चाकर्मकेभ्यः' इति द्वितीयम्। चकारेण कर्तरि कृदित्यतः कर्तरीत्यनुकृष्यते। पूर्वं च सकर्मकविषयमकर्मकेषु कर्मणीत्यंशस्य बाधितत्वात्। भावे चेत्युत्तरवाक्येन तत्र विशेषविधानाच्च। तथा च लकाराः सकर्मकेभ्यः कर्मणि कर्तरि च स्युरकर्मकेभ्यो भावे कर्तरि चेति सूत्रार्थः।

ननु भावकर्मणोरात्मनेपदविधानात् शेषात्कर्तरीति परस्मैपदविधानाच्च ज्ञापकाल्लकाराणां भावकर्मकर्तारोऽर्था अनुमातुं शक्या एवेति किमनेन सूत्रेणेति चेन्मैवम्।

असत्यस्मिन्सूत्रे सकर्मकेभ्योऽपि भावे प्रत्ययापत्तौ घटं क्रियते देवदत्तेनेति प्रयोगापत्तेः।

न चाकर्मकेभ्यो भावे ल इत्येव सूत्रमस्तु भावेऽकर्मकेभ्य एवेति नियमान्न दोष इति वाच्यम्, अकर्मकेभ्यो भाव एवेति विपरीतनियमापत्त्याऽकर्मकेभ्यः कर्तरि लकारानापत्तेः।

नचैवं 'भावे चाकर्मकेभ्यो ल' इत्येवास्तु इति वाच्यम्, भाव इव कर्तर्यपि अकर्मकेभ्य एवेति नियमापत्तौ सकर्मकेभ्यो भाव इव कर्तर्यपि लकाराभावप्रसङ्गात्।

नन्वेवमपि 'लश्च' 'भावे चाकर्मकेभ्यः' इत्येवास्तु चकारेण कर्तरीत्यनुकर्षात् लकाराः सकर्मकेभ्यः कर्तरि स्युः, अकर्मकेभ्यो भावे कर्तरि चेत्यर्थः। कर्मणि तु ज्ञापकाद्भविष्यन्तीति चेन्न।

उत्तरसूत्रे तयोरिति पदेन कर्मणोऽपि परामर्शार्थं तदावश्यकत्वात्। न च कर्मणि कृत्यक्तखलर्था इत्येव सूत्रमस्तु पूर्वसूत्राद्भावे इत्येवानुवर्ततां न तु कर्तरीति चानुकृष्टत्वादिति वाच्यम्, एवं सति लाघवाभावेन यथान्यासस्यैवौचित्यादिति मनोरमाकृतः।

## सार्वधातुकार्धधातुकयोः १०६

नन्वत्र पित्यार्धधातुके च परतः इगन्ताङ्गस्य गुणो भवतीत्यर्थः 'पिदार्धधातुकयोः' इत्येव सूत्रमस्तु।

CC-0. Vasishtha Tripathi Collection. Digitized by eGangotri

न च हरिषु कविषु इत्यादौ गुणापत्तिरिति वाच्यम्, आर्धधातुकसाहचर्येण धातुविहितपित एव ग्रहणेनादोषात् ।

न चैवमपि श्रीषु, भूषु इत्यादौ गुणापत्तिः धातुविहितस्य पितः सत्वादिति वाच्यम्, धातुत्वावच्छिन्नोद्देश्यतानिरूपितविधेयताश्रयस्यैव पितः आर्धधातुकसाहचर्येण ग्रहणात् प्रकृते सुपः प्रातिपदिकत्वावच्छिन्नोद्देश्यतानिरूपितविधेयताश्रयत्वेनादोषात् ।

एवं न्यासे तसादौ गुणाप्राप्त्या तसादौ गुणनिषेधाय सार्वधातुकमपिदिति सूत्रेण ङिद्विधानमनावश्यकमित्यपि लाघवमिति तु न वाच्यम्, उष्टः इत्यादौ सम्प्रसारणविधानार्थं, मृष्ट इत्यादौ वृद्ध्यभावार्थं च ङित्करणस्यावश्यकत्वादिति चेन्न ।

सहचरितपरिभाषाया अनित्यत्वज्ञापनद्वारा हरिषु इत्यादौ गुणवारणाय सार्वधातुकग्रहणस्यावश्यकत्वात् । तेन 'दीधीवेवीटाम्' इत्यत्र इट् धातोः, सिजभ्यस्तविदिभ्यश्चेत्यत्र सिच्धातोर्वा न ग्रहणमिति केचित् ।

नन्वत्र धातोरित्येव सूत्रमस्तु 'धातोरुच्यमानं कार्यं तत्प्रत्यये भवति' इति परिभाषया भ्रौणहत्ये तत्त्वनिपातनमूलकया तत्प्रत्यये इत्यस्योपस्थित्या इगन्तस्य धातोर्गुणो भवति तत्प्रत्यये इत्यर्थः ।

न चैवं सुनोति करोतीत्यादौ गुणानापत्तिः उकारस्य धात्वनवयवत्वाति वाच्यम्, 'स्वादिभ्यः श्नुक्' 'तनादिकृञ्भ्य उक्' इति प्रत्ययं विधायं यदागमपरिभाषया धातुत्वेन गुणसिद्धेः । न चोक्करणे करोतीत्यादौ कृञो गुणानापत्तिः ग्क्ङिति चेति निषेधादागमसमभिव्याहारे कृञोऽनर्थकत्वेन धातुत्वाभावाच्चेति वाच्यम्, 'अत उत्सार्वधातुके' इति सूत्रारम्भेण उकि क्ङिति चेति निषेधाप्रवृत्तेः 'आगमसमभिव्याहार' इत्यस्याप्रवृत्तेश्च ज्ञापनात् ।

न चैवं कुर्वन्नित्यत्रोवङापत्तिरिति वाच्यम्, अचि श्नु इति सूत्रे धातुत्वादेव सिद्धे श्नुग्रहणेन प्रत्ययान्तस्य धातोरुवङ् चेत्तर्हि श्नुप्रत्ययान्तस्यैवेति नियमस्वीकारेणादोषादिति चेन्न ।

धातुत्वभिन्नधातुत्वव्याप्यधर्मावच्छिन्नोद्देश्यताके कार्ये एव धातोरुच्यमानमिति परिभाषायाः प्रवृत्तेः, न भूसुवोरिति निर्देशेन क्लृप्ततया

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

प्रकृते तदप्रवृत्त्या भूषु लूषु इत्यादौ गुणापत्तेर्दुर्वारत्वात्। श्नुक् उक् इत्यादिविषये परत्वात्परश्चेत्यनेन बाधादाद्यन्तौ टकितावित्यस्याप्रवृत्त्या आगमत्वासम्भवेन यदागमा इत्यस्याप्रवृत्त्या धातुत्वातिदेशासम्भवेन सुनोतीत्यादौ गुणानापत्तेश्चेत्यलम्।

## अतो दीर्घो यञि १०७

नन्वत्र 'पावा' इत्येव सूत्रमस्तु आ इत्यत्र लुप्तषष्ठ्यन्तः अकारोपि प्रश्लिष्यते तथा च अकारान्तस्याङ्गस्य दीर्घो भवति पवर्गे परे इत्यर्थः। एवं च भवामि रामाभ्यामित्यादावनेन दीर्घः सिध्यति, सुपि चेति सूत्रमपि न कार्यमित्यपरं लाघवम्।

न च सुपि चेत्यस्याभावे रामायेत्यस्यासिद्धिरिति वाच्यम्, 'अकृत्सार्वधातुकयोर्दीर्घ' इति सूत्रेणैव दीर्घसिद्धेः।

न च अकृदिति पर्युदासाद्धातुत्वव्याप्यधर्मावच्छिन्नोद्देश्यतानिरूपितविधेयताश्रये प्रत्यये एव तेन दीर्घ इति वाच्यम्, तथा सति कण्ड्वायते इत्यस्यासिद्ध्यापत्तेः।

न च अकृदिति पर्युदासादसुप्येव तत्प्रवृत्तिः, अत एव उरुया इत्यत्र न दीर्घ इति रामायेत्यत्र दीर्घार्थं सुपि चेत्यावश्यकमिति वाच्यम्, एवं तर्हि ङेर्य इत्यत्र ङेरयङिति न्यस्याकारोच्चारणसामर्थ्येन पररूपं बाधित्वा सवर्णदीर्घे रामायेत्यस्य सिद्धेरिति चेन्न।

ङेरयङिति करणे सुपाद् अश्च अनयोः समाहारः सुपादम् तस्मै सुपादायेत्यत्र भत्वेन पदादेशापत्तेः। एकादेशस्य स्थानिवत्त्वेन पदादेशाप्रवृत्तिस्तु न शङ्क्या न पदान्तेति स्थानिवत्त्वनिषेधात्। सुपि चेत्यस्य बहुवचने झल्येदित्यादावनुवृत्त्यर्थमावश्यकत्वाच्च सारसायनभक्तः पण्डितपाश इत्यादौ दीर्घापत्त्या, भवावः भविष्यावः इत्यादौ दीर्घानापत्त्या च पावा इति न्यासस्य कर्तुमशक्यत्वाच्च तदर्थं सार्वधातुकपदानुवृत्तौ रामाभ्यामित्याद्यर्थं सुपि चेत्यस्याप्यवश्यकर्त्तव्यतया लाघवाभावाच्चेत्यलम्।

ननु अत आद्यञि इत्येव सूत्रमस्तु दीर्घं ग्रहणं किमर्थम्।

न च दीर्घग्रहणं दीर्घो दीर्घ एव यथा स्यादित्यर्थज्ञापनद्वारा पचामि भोः इत्यत्र आन्तरतम्यापि प्लुतयोरिति प्लुतस्य बाधनार्थम्। न

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

चानन्त्यस्य पदस्य च टेरिति तदर्थात्पचामीत्यादौ न तत्प्राप्तिरिति वाच्यम्, वाक्यस्थ्योः क्लृप्तसम्बन्धत्यागे मानाभावेन वाक्यस्थस्यानन्त्यस्य पदस्याचः प्लुतः अन्त्यस्य पदस्य च टेरित्यर्थात् पचामीत्यादौ तत्प्राप्तेः। तपरकरणेन तु न प्लुतव्यावृत्तिः, प्लुतस्यासिद्धत्वात् । अत एव गीः-पूरित्यादौ इदुदिति तपरसामर्थ्यान्न दीर्घव्यावृत्तिः । नच आदिति न्यासेऽपि आकारान्तरं प्रश्लिष्य प्लुतवारणं सुशकमिति वाच्यम्, क्लिष्टत्वात् उपायस्योपायान्तरादूषकत्वाच्चेति वाच्यम्,

'ज्ञाजनोर्जा' इत्यत्र ह्रस्वान्तजादेशं विधाय 'अतो दीर्घ'-इति दीर्घेण जानामीत्यादेः सिद्ध्या दीर्घाकारान्तजादेशविधानमङ्गवृत्तपरिभाषाज्ञापनार्थमिति भाष्येण जानामि पचामीत्यादौ प्लुतस्यानिष्टत्वावगमात्, अन्यथा जविधानपक्षे प्लुताभावस्य जाविधानपक्षे प्लुतस्य च सत्त्वेन फलभेदेन ह्रस्वान्तजादेशस्य विधातुमशक्यतया अङ्गवृत्तपरिभाषाज्ञापनासङ्गतिः स्पष्टैव । एवं च दीर्घग्रहणस्य पचामीत्यादौ प्लुतवारणरूपफलाभावाद्दीर्घग्रहणं व्यर्थमिति चेन्न,

हलि लोप इत्यत्र हल्यश् इति वक्तव्ये लोपग्रहणवत् अतो दीर्घ इति सूत्रे दीर्घग्रहणस्य सत्त्वादिति केचित् ।

परे तु तितउशब्दाण्णिचि टिलोपे क्विपि भ्यामि तितभ्यामिति स्थिते दीर्घविधौ स्थानिवद्भावनिषेधाद्दीर्घे तिताभ्यामिति भवति यथाश्रुतसूत्रसत्त्वे, आदिति करणे तु स्थानिवत्त्वेन आत्वाभावे तितभ्यामिति स्यादिति दीर्घग्रहणमावश्यकमिति वदन्ति । इतोऽपि हेतोः 'पावा' इति न्यासो हेय इत्यलम् ।

ननु अड्गार्ग्यगालवयोरित्यनन्तरम् अतो यञीत्येव सूत्रमस्तु । एवं च अटि दीर्घे भवामीत्यादिसिद्ध्या दीर्घग्रहणं मास्तु । नच पररूपापत्तिः, अड्विधानसामर्थ्येन पररूपस्य बाधात् । नच निर्जराभ्यामित्यत्र जरसादेशापत्तिरिति वाच्यम्, सन्निपातपरिभाषाविरोधादिति चेन्न ।

तथा सति सुपि चेत्यनेनापि अडागमविधानापत्त्या आभ्यामित्यत्र हलादिप्रत्ययपरत्वाभावेन हलि लोप इत्यस्याप्रवृत्त्यापत्तेः, अनाप्यक इत्यनादेशापत्तेश्च अनभ्यासेऽकः 'आपि लोपः' इति न्यासेन आभ्या-

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

मित्यत्र दोषाभावेऽपि अधुत्तावद्धीत्यत्र क्सस्याचीति क्सस्य लोपापत्ति-र्दुर्वारैवेत्यलम् ।

## असिद्धवदत्राभात् १०८

नन्विदं सूत्रं किमर्थम् ।

न च शाधीत्यत्र नित्यत्वाच्छासः शादेशे कृतेऽपि असिद्धत्वाज्झलन्तत्वेन धित्वं भवति इदानीं न स्यादिति वाच्यम्, शा हौ इत्यत्र शास् हाविति रुत्वयत्वयलोपेन निर्देशे शासः शासादेशेनेत्त्ववारणे धित्वे धि चेति सलोपेन सिद्धेः । किं च आहाविति न्यासं कृत्वा अनिदितां हल इत्यत उपधाया इत्यस्यानुवृत्त्योपधाया आत्वे पूर्वोक्तरीत्या सिद्धेः ।

न चैधीत्यत्राकारस्य परत्वान्नित्यत्वाच्च श्नसोरिति लोपे सकारस्यैत्वे धित्वं न स्यात् सूत्रसत्त्वे तु तद्भवतीति वाच्यम्, एत्वं लोपापवादं विज्ञाय 'उत्सर्गसमानदेशा अपवादा' इति न्यायेनाकारस्यैत्वे धिचेति सलोपेन सिद्धेः । न च धि चेति सलोपः सिच एवेति वाच्यम्, चकाधीत्यत्र सकारलोपपरभाष्येण तस्यार्थस्यानाश्रयणात् ।

न च कुरु इत्यत्र नित्यत्वाद्धेर्लुकि सार्वधातुकपरत्वाभावेनोत्वं न स्यात् सूत्रसत्त्वे तु लुकोऽसिद्धत्वाद्भवतीति वाच्यम्, उतश्च प्रत्ययादित्यत उत इत्यनुवर्त्य उकारान्तस्याङ्गस्येत्यर्थे आर्धधातुके दोषाभावेन सार्वधातुकग्रहणं व्यर्थं सत् भूतपूर्वसार्वधातुकसम्प्रतिपत्त्यर्थमित्यदोषात् ।

न चासन्नित्यत्र परत्वादल्लोपे अनजादित्वादाट् न स्यात् सूत्रसत्त्वे तु असिद्धत्वाद्भवतीति वाच्यम्, श्नसोरल्लोप इति सूत्रे तपरकरणबलेन लोपादाड्बलीयान् इति ज्ञापनेनादोषात् । तथाहि तपरकरणस्य प्रयोजनमास्तामासन्निति आटि कृते 'वार्णादाङ्गं बलीय' इत्येकादेशं बाधित्वा अलोपो मा भूदिति' यद्यलोपः प्रथमं स्यात् तदा अनजादित्वादाटः प्राप्तिरेव नास्तीति तद्व्यर्थम् ।

न चायन्नित्यत्र नित्यत्वाद्यणि कृतेऽनजादित्वादाट् न स्यादिति वाच्यम्, 'इणो यण्' भवति तत 'एरनेकाच' इणो यण् भवति ततः 'असंयोगपूर्वस्य' इति योगं विभज्य आटि सत्यवानेकाच्त्वादियण् इत्यदोषात् ।

CC-0. Vasishtha Tripathi Collection. Digitized by eGangotri

ईयतुरित्यादौ योगविभागमन्तरेण यणः सिद्धत्वादाड्विध्यर्थमेव योगविभाग इति बोध्यम् ।

न चाकारीत्यत्र नित्यत्वात्तलोपेऽट् न स्यात् सूत्रसत्त्वे तु भवतीति वाच्यम्, स्यसिच्सीयुडित्यतः उपदेशे इत्यनुवर्त्योपदेशे एवाटो विधानेनादोषात् । अथवा मयतेरिदन्यतरस्यांल्लुङ्लङ्लृङ्क्ष्वडुदात्त इति संहितापाठे लकारं प्रश्लिष्य लावस्थायामेवाड्विधानेनादोषात् ।

न च लावस्थायामेवाड्विधाने ऐज्यत औब्यत इत्यत्रानजादित्वादडेव स्यादिति वाच्यम्, आडजादीनामिति सूत्रमकृत्वा आटश्चेत्यत्र अटश्चेति न्यासेन सिद्धेः ।

न चाकरोदित्यादावपि वृद्ध्यापत्तिः, अचीत्यनुवृत्तेरदोषात् । ऐधत इत्यत्र पररूपं बाधित्वा वृद्ध्या सिद्धिरिति बोध्यम् । न चैवमपि स्वपोऽह्वसन्नित्यत्र अड्गार्ग्यगालवयोरित्यडागमस्य सर्वादेशत्वेऽचपरत्वेन वृद्ध्यापत्तिरिति वाच्यम्, उपसर्गादृतीत्यतो धातावित्यस्यापकर्षणेन अजादौ धाताविति, धात्ववयवेचीति, वा व्याख्यानेनाऽदोषात् ।

न च बहुश्रेयस्यै इति न सिद्ध्येत् धात्ववयवाच्परत्वाभावेनाटश्चेत्यस्याप्राप्त्या 'आण्नद्याः' इति अटो विधानेन पररूपापत्तेरिति वाच्यम्, आण्नद्या इत्यनेन आटमेव विधाय पररूपाप्राप्त्या वृद्धिरेचीति वृद्ध्या सिद्धेः ।

न चाण्नद्या इत्यनेन अडेव विधीयतां पररूपं तु विधानसामर्थ्यादेव न भविष्यतीति वाच्यम्, बहुश्रेयस्यामित्यत्र नुड्बाधनाय तच्चारितार्थ्येन विधानसामर्थ्याभावात् ।

न चास्वपोऽस्तीत्यत्र ओकारस्यान्तवद्भावेनाट्त्वमाश्रित्य अटश्चेति वृद्ध्यापत्तिरिति वाच्यम्, आद्गुण इत्यतः आदित्यनुवर्त्य अकाररूपादटोऽचि परे वृद्धिरित्यर्थेनादोषात् ।

न च बहिरङ्गपरिभाषयैव निर्वाहेणादित्यनुवृत्तिर्व्यर्थेति वाच्यम्, नाजानन्तर्य इति निषेधात् । एतेन अटश्चेति न्यासे अट्धातोर्ल्युटि अटनमित्यत्र वृद्धिः स्यादित्यपास्तम् ।

नचैवमायन्नासन्निति न सिद्ध्येत् अन्तरङ्गत्वाद् वृद्ध्या तत्सिद्धेः । न च वार्णादाङ्गमिति परिभाषया वृद्धेः प्रागेव लोपः स्यादिति वाच्यम्,

CC-0. Vasishtha Tripathi Collection. Digitized by eGangotri

व्याश्रयत्वात् अनित्यत्वाद्वा वार्णादाङ्गमित्यस्याप्रवृत्तेः । अनित्यत्वे मानं तु श्नसोरिति तपरकरणमेव, वृद्धेः प्रागेव लोपे तद्व्यर्थं स्यात् । एवं चासन्नित्यत्र तपरकरणात् नालोपः इणो यण् परिति योगविभागात् इकारान्तस्येणो यण् विधानेनायन्नित्यत्र यणोऽप्राप्त्याऽऽयादेशे आयन्निति सिद्धम् ।

न चाडजादीनामित्यस्याभावे आनट् आव इति वैदिकप्रयोगो न स्यादिति वाच्यम्, आटं विनैव व्यत्ययेनाङ्पूर्वकत्वेन वा तत्सिद्धेः ।

न च गतः गतवानित्यत्रानुनासिकलोपे अतो लोपः स्यात् सूत्रसत्त्वे मलोपस्यासिद्धत्वान्न भवतीति वाच्यम्, अतो लोप इत्यत्र उपदेश इत्यस्य सत्वेन उपदेशेऽकारान्तस्य लोप इत्यर्थेनादोषात् ।

न चोपदेश इत्यनुवृत्तौ धिनुतः कृणुतः इति न सिद्ध्येदिति वाच्यम्, आर्धधातुकोपदेशे यदकारान्तमित्यर्थेनादोषात् ।

न च जहि जङ्घहि इत्यत्र हिलोपः स्यात् सूत्रसत्त्वे तु न भवतीति वाच्यम्, 'अतो हेः' 'उतश्च' इत्युभयोः प्रत्ययादितिशेषः अकारान्तात्प्रत्ययाद्धेर्लोप इत्यर्थेनादोषात् ।

न च मघोनः पश्येत्यत्र वनिपः सम्प्रसारणे यस्येतिचेति लोपापत्तिः । सिद्धान्ते तु न, संप्रसारणस्यासिद्धत्वात् । न च बहिरङ्गपरिभाषया निर्वाहः नाजानन्तर्ये इति निषेधादिति वाच्यम्,

मघवच्छब्दस्याव्युत्पन्नत्वेनादोषात् सूत्रसत्त्वेपि व्याश्रयत्वेन सूत्राप्राप्त्या इदमेव समाधानं बोध्यम् ।

न च दध्रे इत्यत्र रेभावे नित्यत्वात्कृते आलोपो न स्यात् सूत्रसत्त्वे तु असिद्धत्वाद्भवतीति वाच्यम्, छान्दसो रेभावः इति लिटः छन्दस्युभयथेति सार्वधातुकत्वेन सार्वधातुकमपिदिति ङित्त्वे श्नाभ्यस्तयोरित्यालोपसिद्धेः ।

ननु कुर्वः कुर्म इत्यत्र उकारलोपे कृते उत्वं न स्यात् । न च सार्वधातुके परत एवोत्वं विधीयतामिति वाच्यम्, कुरुत इत्यत्रोकारव्यवधानेनोत्वानापत्तेः। न च सूत्रसत्त्वेऽप्ययं दोषो व्याश्रयत्वेनासिद्धवदित्यस्याप्रवृत्तेरिति वाच्यम्, मकारवकारादौ प्रत्यये उकारलोप इत्यर्थात्समानाश्रयत्वेन सिद्धान्ते दोषाभावादिति चेन्न ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

स्त्रोर्यञ्चेत्यस्य अत उदित्यत्रानुवर्तनेन वाक्यभेदेन व्याख्यानेन कुर्मः कुर्यादित्यस्य सिद्धेः ।

न च कारिष्यत इत्यत्र णिलोपो न स्यात् । मम तु प्रकृतिप्रत्ययाश्रयत्वेनेड्णिलोपयोः समानाश्रयत्वेन असिद्धत्वाद् भवतीति वाच्यम्, स्यसिजिति सूत्रेण चात् णिलोपविधानेनादोषात् । न चाकारितराम् अहारितरामित्यत्र चिणो लुगिति तलोपः स्यात् । मम तु पूर्वतलोपस्यासिद्धत्वान्न दोष इति वाच्यम्, गमहन इत्यतः क्ङितीत्यनुवर्त्य षष्ठयन्तत्वेन विपरिणम्य क्ङित एव लोपविधानेनादोषात् ।

न च तिराययतीत्यत्र अञ्चेष्टिलोपो न भवति प्रथमटिलोपस्यासिद्धत्वादिदानीं तु स्यादिति वाच्यम्, अङ्गवृत्तपरिभाषया तद्वारणसम्भवात् ।

न च यातिरित्यत्रालोपापत्तिः । मम तु प्रथमालोपस्यासिद्धत्वान्न दोष इति वाच्यम्, अचः परस्मिन्निति प्रथमालोपस्य स्थानिवत्त्वेनैवादोषात् इति चेन्न—

अनेकपरिहाराश्रयणे प्रतिपत्तिगौरवं स्यादिति सूत्रकरणस्यैवौचित्यात् ।

सूत्रे अत्र पदेन निमित्तसमुदायः परामृश्यते तथा चाभीयनिमित्तकमाभीयमसिद्धमित्यर्थेन समानाश्रय इति लब्धम् ।

ननु समानाश्रयत्वं नाम किम् । न च असिद्धत्वाश्रयशास्त्रसम्बन्धिनिमित्तसमुदायान्यूनानतिरिक्ताश्रयकत्वं तदिति वाच्यम्, जहीत्यत्र समानाश्रयत्वाभावेन हेर्लुगापत्तेः चिणोलुग्दृष्ट्या चिणोलुकोऽसिद्धत्वानापत्तेश्चेति चेदत्रोच्यते--

यत्किंचिदाभीयशास्त्रविशिष्टत्वं तत्त्वम् । वै० स्वविशिष्टत्वं, स्वीयोद्देश्यतावच्छेदकावच्छिन्नत्वेनाश्रीयमाणो यावान् शब्दसमुदायस्तत्समभिव्याहृतो यस्तद्घटितसमुदायाश्रयकत्वमेतदन्यतरसम्बन्धेन, वैशिष्ट्यं च स्वीयोद्देश्यतावच्छेदकरूपावच्छिन्नोद्देश्यताकत्व,स्वीयविधेयतावच्छेदकरूपावच्छिन्नविधेयताकत्वोभयसम्बन्धेन ।

प्रथमसम्बन्धदानेन चिणोलुग्दृष्ट्या चिणो लुकोऽसिद्धत्वम् । द्वितीयसम्बन्धे शब्दसमुदाय इति विशेषणमुपादाने जहीत्यादौ अतो हेरिति
CC-0. Vasishtha Tripathi Collection. Digitized by eGangotri

इष्ट्या हन्तेर्ज इत्यस्यासिद्धत्वं न स्यात् तयोरर्थे न्यूनाधिकभावस्य सत्त्वात् । समभिव्याहृत इत्युपादानात् स्थान्यादेशयोर्भिन्नस्वरूपमादाय न दोषः । समानाश्रयग्रहणफलं तु पपुष इत्यत्र सम्प्रसारणस्यातोलोपेऽसिद्धत्वाभावः चखायितेत्यत्र 'यस्य हल' इति लोपे कर्तव्ये ये विभाषेत्यात्वासिद्धत्वाभावश्च । आद्येऽधिकापेक्षत्वाद् द्वितीये न्यूनापेक्षत्वान्न समानाश्रयत्वमित्यलं पल्लवितेन ।

## आर्धधातुकस्येड्वलादेः १०९

नन्वस्मिन्सूत्रे आर्धधातुकग्रहणं किमर्थम् ।

न च रामेषु इत्यत्र इडागमापत्तिः बहुवचने झल्येदिति सूत्रेण तक्रन्यायेन इडागमस्य बाधात् ।

न च हरिषु इत्यत्र इडागमापत्तिः, ऋत इद्धातोरित्यतो धातोरित्यनुवर्त्य धातोः परस्य वलादेरिडागम इत्यर्थेनादोषात् ।

न चैवं जुगुप्सत इत्यत्र सन इडागमापत्तिः, आर्धधातुकग्रहणसत्त्वे तु न दोषः सनो धातुशब्दमुच्चार्य विहितत्वाभावेन आर्धधातुकत्वाभावादिति वाच्यम्, विहितविशेषणमङ्गीकृत्य धातुत्वावच्छिन्नोद्देश्यतानिरूपितविधेयताश्रयवलादेरिडित्यर्थेनादोषात् ।

न चैवमपि भवतीत्यादौ सार्वधातुकतिप इडापत्तिरिति वाच्यम्, 'रुदादिभ्यः सार्वधातुके' इति सूत्रस्य इदानीं सार्वधातुकस्येडागमश्चेत्तर्हि रुदादिभ्यः परस्यैवेति नियमार्थतयाऽदोषात् । रुदादिभ्यः परस्य वलादेरिट् चेत्तर्हि सार्वधातुके एवेति विपरीतनियमस्तु न, रुदविदमुषग्रहिस्वपिप्रच्छः संश्चेति सूत्रेण सेटोः क्त्वासनोः कित्त्वविधानसामर्थ्यात् । न च स्यसिच्सीयुडिति सूत्रेऽनुवृत्त्यर्थं तत् अत एव विधिलिङि नेडिति वाच्यम्, तस्यान्याध्यायस्थत्वेन इतोऽनुवृत्त्यसंभवात्, परस्परसाहचर्येण सार्वधातुकभिन्नस्यैव आर्धधातुकस्यैव सीयुटो ग्रहणेनादोषाच्च ।

न चाशीर्लिङि वधादेशस्यापवादश्चिण्वद्भावःआर्धधातुके सीयुडिति विशेषविहितत्वात् साम्प्रतं वधादेश एव स्यादिति वाच्यम् 'वधिभावात्सीयुटि चिण्वत्त्वं विप्रतिषेधेन' इति वार्तिकेन वादोषादिति चेदार्धधातुकग्रहणं व्यर्थमेवेत्यवधेहीति दिक् ।

CC-0. Vasishtha Tripathi Collection. Digitized by eGangotri

भैरवमिश्रास्तु–प्रकृतसूत्रे आर्धधातुकग्रहणस्य न फलम्। किन्तु, योगविभागार्थम्, आर्धधातुकस्य यावानिट् स आर्धधातुकस्यैवेति तेन स्यसिच्सीयुडिति सूत्रेण विधीयमान इट् अडाड्वदङ्गाधिकारादङ्गस्य न भवतीत्याहुः।

## पुगन्तलघूपधस्य च ११०

नन्वस्मिन्सूत्रे लघुग्रहणं किमर्थम्। न च लघुग्रहणाभावे पुगन्ताङ्गावयवस्य उपधायाश्च इको गुण इत्यर्थापत्तौ ईहते ऊहते इत्यादौ गुणापत्तिरिति वाच्यम्, उपधाया गुण इत्येव सिद्धे पुगन्तग्रहणस्य दीर्घोपधस्य गुणश्चेत्तर्हि पुगन्तस्यैवेति नियमार्थतयाऽदोषात्। लघूपधस्य चेत्तर्हि पुगन्तस्यैवेति विपरीतनियमस्तु न 'रुदविदमुषग्रहिस्वपिप्रच्छः संश्च' इति सूत्रेण रुदित्वेत्यादौ गुणबाधनार्थकित्वारम्भसामर्थ्यात्। नियमशास्त्रीयोद्देश्यतावच्छेदकव्याप्यं नियामकशास्त्रीयोद्देश्यतावच्छेदकव्यापकं च यद्रूपं तद्रूपावच्छिन्नातिरिक्तत्वेनैव संकोचस्य न्याय्यतया यद्यपि नियम्यशास्त्रीयोद्देश्यतावच्छेदकं सार्वधातुकाव्यवहितपूर्वत्वविशिष्टाङ्गावयवोपधाभूतेक्त्वं तद्व्याप्यं सार्वधातुकार्धधातुकाव्यवहितपूर्वत्वविशिष्टाङ्गावयवलघूपधाङ्गावयवेक्त्वं तादृशदीर्घोपधाङ्गावयवेक्त्वं वा भवति तथापि नियामकशास्त्रीयोद्देश्यतावच्छेदकस्य सार्वधातुकार्धधातुकाव्यवहितपूर्वत्वविशिष्टपुगन्ताङ्गावयवेक्त्वस्य व्यापकं न भवतीति पुगन्तस्य चेल्लघूपधस्यैवेत्यस्य पुगन्तस्य चेद्दीर्घोपधस्यैवेत्यस्य वा नियमस्यासंभवाच्च; कस्य चित् इको झलित्यस्य पुगन्तस्य चेल्लघूपधस्यैवेति नियमवारकतोक्तिरत्यन्तमनुचिता तदुदाहरणेषु लघूपधत्वाभावादिति चेन्न।

एवं सति लघूपधस्य चेत्पुगन्तस्यैवेति नियमस्याप्यसंभवादीहते इत्यादौ गुणापत्तेः। सार्वधातुकाव्यवहितपूर्वत्वविशिष्टलघूपधपुगन्ताङ्गावयवेक्त्वस्य नियामकशास्त्रीयोद्देश्यतावच्छेदकव्यापकतासंभवेन संकोच्यतावच्छेदकत्वासम्भवात्, किन्तु सार्वधातुकार्धधातुकाव्यवहितपूर्वत्ववदागमाव्यवहितपूर्वत्वविशिष्टेक्त्वस्यैव तादृशत्वेन तेन रूपेण संकोचे पुञ्धातोः क्विपि तुकि आचारक्विबन्ताल्लटि सोततीत्यादौ गुणनापत्तिरतो लघुग्रहणं कर्तव्यमित्यलम्।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

## रि च १११

ननु 'लुटः प्रथमस्य डारौरसः' सूत्रं कप्रत्ययविधायकात्प्रागेव पठ्यताम्। तथा च भवितारावित्यत्र 'स्वादिष्वसर्वनामस्थाने' इति पदत्वे रुत्वे रोरीति लोपेन सिद्धे रिचेति सूत्रं व्यर्थमेवेति चेन्न।

पक्तारो भवितारो यस्मिन्व्यापारे इति विग्रहे मयूरव्यंसकादित्वात्समासे अत्वसन्तेति दीर्घे पक्तारोभवितारा इति रूपं ततो णिचि लुङि उपधाह्रस्वत्वानापत्तेः रोरीत्यस्यासिद्धत्वात्।

वस्तुतस्तु अग्मात्रलोपिग्रहणे मानाभावात् अस्याग्लोपितयोपधाह्रस्वत्वं नेष्यत एवेति तथाकरणे दूषणं चिन्त्यम्।

## सेर्ह्यपिच्च ११२

ननु 'सेर्हिङ्' इति न्यासोऽस्तु अपिद्ग्रहणं किमर्थम्। न च ङिच्चेति परिभाषया सेरिकारस्य हिङादेशापत्तिरिति वाच्यम्, अनन्यार्थङित्त्वेषु अनङादिषु चरितार्थस्य ङिच्चेत्यस्य गुणवृद्ध्योः प्रतिषेधार्थतया सम्भावितप्रयोजनङकारवति हिङि मन्थरं प्रवृत्त्या परेण अनेकाल्शित्सर्वस्येत्यनेन बाधादिति चेन्न—

सिद्धान्तेऽपित्त्वेन अनुदात्तौ सुप्पितावित्यनुदात्तत्वं न भवति सांप्रतमातिदेशिकपित्त्वमादायानुदात्तत्वापत्तेः।

यदि तु औपदेशिकेन ङित्त्वेन आतिदेशिकस्य पित्त्वस्य बाध इत्यर्थकेन ङिच्च पिन्नेति भाष्येण पित्त्वस्य बाधान्नानुदात्तत्वापत्तिः प्रकृतन्यासे इत्युच्यते तदा वा छन्दसीत्युत्तरार्थमपिद्ग्रहणं तेन युयोधीति सिद्ध्यति, अन्यथा हिङ एव विकल्पापत्तौ तन्न सिद्ध्येदित्यलम्।

ङिच्च पिन्न पिच्च ङिन्नेत्यत्र मानं तु सार्वधातुकमपिदिति सूत्रे अपिदिति योगो विभज्यते तत्र च गाङ्कुटादिभ्य इत्यतो ङिदित्यनुवर्तते उभयमप्यावर्तते एकत्र अपिदिति प्रसज्यप्रतिषेधः तेन ङित् पिन्नेत्यर्थः, अपरत्र अपिदित्यत्रत्यनञो ङिता संबन्धः तेन पित् ङिन्नेत्यर्थः, सार्वधातुकमित्यत्र अपिदित्यनुवर्तते तस्य मूलोक्तोर्थ इति व्याख्यानमेवेति गृहाण।



CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

## लोटो लङ्वत् ११३

नन्विदं सूत्रं न कर्तव्यम् । लोट् च इत्यत्र ङ्लोट् चेति सूत्रमस्तु । ङ्लोटो ङित्त्वादेव तामादीनां सिद्धेः क्रियासमभिहारे इत्यत्र च ङ्लोट इत्येवास्तु । लङ्वद्भावकरणे यान्तु इत्यत्र लङः शाकटायनस्य इति जुसो वारणाय यत्नविशेषाश्रयणं कर्तव्यं साम्प्रतं तदपि नेति महल्लाघवम् ।

न च लोटोलङ्वदित्यस्याभावे एरुरित्यत्रलोटो लाभः कथं स्यादिति वाच्यम्, लोट एरुरिति न्यासेनादोषात् ।

न चैवं जुह्वतु विदन्तु इत्यत्र सिजभ्यस्तविदिभ्यश्चेति जुसापत्तिरिति वाच्यम्, श्नः शित्त्वेनैव सिद्धे शानचः शित्करणेन अनुवन्धकार्यं क्वचिदनल्विधाविति निषेधप्रवृत्तिज्ञापनेन ङित्त्वाभावात् । लङ्वद्भावकरणेऽपि अस्य दोषस्य सत्त्वेन—

'यश्चोभयोः समो दोषः परिहारस्तयोः समः ।
नैकः पर्यनुयोक्तव्यस्तादृगर्थविनिर्णये' ॥

इति न्यायेन एतादृशदोषस्य उद्भावयितुमशक्यत्वाच्च ।

न च लोटो लङ्वदिति सूत्रसत्त्वे विदो लटो वेत्यतो मण्डूकप्लुत्या वा इत्यनुवर्त्य व्यवस्थितविभाषां चाश्रित्य नायं दोष इति वाच्यम्, मण्डूकप्लुतानुवृत्तौ भाष्यानुक्तव्यवस्थितविभाषायां च मानाभावेन दोषादिति चेन्न—

आतिदेशिकमनित्यमिति ज्ञापनार्थं लोटो लङ्वदित्यस्यावश्यकत्वादन्यथा विदन्तु इत्यादौ जुस् दुर्वारः स्यादिति बोध्यम् ।

वस्तुतः सिच्साहचर्यादभ्यस्तादप्यनतिदिष्टङित्त्ववतो लकारस्य स्थाने जायमानस्य झेर्जुस् इत्यर्थान्न विदन्तु इत्यत्र दोष इति आतिदेशिकमनित्यमिति फलाभावाद्भाष्यानुक्तत्वाच्च नादरणीया लोटो लङ्वदिति सूत्रमदृष्टार्थम् लोड्घटितानेकसूत्रे ङकारपठने गौरवं चेति तत्त्वम् ।

## आङुत्तमस्य पिच्च ११४

नन्वत्र अगुत्तमे इत्येव न्यासोऽस्तु एवं च अगागमे अतो दीर्घो यञीति दीर्घं अदानीत्यादिसिद्ध्या आ करणं व्यर्थम्—

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

न च पित्त्वाभावे अको ऽनुदात्तत्वं न स्यादिति वाच्यम्, आगमा अनुदात्ता इत्यनेनैव अनुदात्तत्वसिद्धेरिति चेन्न—

अको ऽङ्गावयवत्वेन लघूपधत्वाभावाद् देहानीत्यत्र गुणानापत्तेः, वस्मसोर्ङित्त्वेन करवाव करवाम इत्यादौ गुणानापत्तेश्च। न च तदर्थम् अडुत्तमे इति न्यासेन विकरणो ऽट् प्रत्ययो ऽस्तु अतो दीर्घ इति दीर्घे णैवादानीत्यादेः सिद्धिरिति वाच्यम्, सिद्धान्ते आट आगमतया आगमजमनित्यमिति परिभाषया ऽऽटो ऽभावे आनि लोडित्यस्याप्रवृत्या प्रभवानीति भवति साम्प्रतमट आगमत्वाभावेन आगमजमनित्यमित्यस्याप्रवृत्या प्रभवानीति भवति साम्प्रतमट आगमत्वाभावेन आगमजमनित्यमित्यस्याप्रवृत्या णत्वापत्तेः।

वस्तुतस्तु इदानीम् आनि लोट् इत्येव सूत्रं भविष्यति तत्र नि लोट् इत्येव वक्तव्ये आनि लोट् करणेन विकरणमनित्यमित्यस्य ज्ञापने ऽटो ऽभावे प्रभवानी सिद्धौ बाधकाभावः। किं च आगमजमनित्यमिति भाष्यानुक्तत्वान्नाद्रियते प्रभवानीति च नैवेष्यते इति अडुत्तम इति न्यासे न किमपि बाधकमिति बोध्यम्।

## इतश्च ११८

ननु 'इतश्च' इदं सूत्रमास्तु 'नित्यं ङितः' इति सूत्रे इतश्च लोपः परस्मैपदेषु इति सूत्रात्परस्मैपदेषु इति सम्बध्यते 'वैतोऽन्यत्र' इति सूत्राद्वा इति नानुवर्तते नित्यमित्यनेन विरोधात् स उत्तमस्येत्यत उत्तमस्येति नानुवर्तते। एवं च ङितः परस्मैपदानां नित्यं लोप इत्यर्थः। अलोऽन्त्यपरिभाषया सकारेकारयोरुभयोर्लोपस्य अनेनैव सूत्रेण सिद्धत्वात्। न च तसादावपि लोपापत्तिः 'तस्थस्थमिपां तांतंताम' इति सूत्रेण तक्रन्यायेन नित्यं ङित इत्यस्य बाधादिति केचित्।

## यासुट् परस्मैपदेषूदात्तो ङिच्च ११६

नन्वत्र श्यास्परस्मैपदेषु इत्येव सूत्रमस्तु उदात्तत्वस्य प्रत्ययस्वरेण ङित्त्वस्य सार्वधातुकमपिदित्यनेन सिद्धेरुदात्तग्रहणं ङिद्ग्रहणं च मास्तु—

न च लिङ धातोरादेशेण लिङः परस्मैपदेषु श्यास् भवतीत्यर्थात् शबप्राप्तियोग्ये ऽचरितार्थस्य श्यासः शबपवादतया शप बाधित्वा श्यासि कर्त्रर्थसार्वधातुकपरत्वाभावेन शब् न स्यात्

CC-0. Vasishtha Tripathi Collection. Digitized by eGangotri

यत्तु श्यासि शब् न स्यादित्याशङ्क्य सोचीतिनिर्देशेन क्वचिदपवादे
प्रवृत्तेऽपि उत्सर्गः प्रवर्तते इति कल्प्यते, अन्यथा त्यदाद्यत्वाप्राप्तियोग्येऽ-
चरितार्थस्य तदोरित्यस्य त्यदाद्यत्वापवादतया सत्वे कृतेऽपि त्यद्यत्वा-
पत्तौ स इति न सिद्ध्येत्। एवं च श्यासि कृतेऽपि शब्भविष्यतीति
केन चित् समाहितं तत्तुच्छम्।

स इत्यत्र सत्वे कृते त्यदाद्यत्वप्राप्तेरिह च श्यासि कृते कर्त्रर्थसा-
र्वधातुकपरत्वाभावेन शपोऽप्राप्तेर्वैषम्यात्। किं च स इति निर्देशेन
तदप्राप्तियोग्येऽचारितार्थ्ये सति कृतेऽप्यचरितार्थरूपस्य तक्रन्यायस्यानि-
त्यत्वकल्पनेऽपि सर्वथाऽऽनवकाशत्वरूपस्य तदप्राप्तियोग्येऽचारितार्थ्ये
सति कृतेऽप्यचारितार्थ्यरूपबाधबीजस्यानित्यत्वबोधने सामर्थ्याभावा-
दिति वाच्यम्,

भवतेर इति निर्देशेन क्वचित्कर्त्रर्थसार्वधातुकपरत्वाभावेऽपि शबिति
ज्ञापनेन निरर्थकश्यास्यपि शपः प्रवृत्त्याऽदोषात् आशिषि शपोऽप्राप्त्या
श्यासश्चारितार्थ्याच्च।

न च भूयादित्यत्रापि शबापत्तिः श्यासः सार्वधातुकत्वादिति वा-
च्यम्, किदाशिषीत्यनन्तरं लिङ्यार्धधातुकमिति सूत्रं कृत्वा आशिषि
लिङि परे श्यास् आर्धधातुकसंज्ञ इति स्वीकारेण शपोऽप्राप्तेः जागर्या-
दित्यत्रापि विशेषविहितेन कित्त्वेन अतिदिष्टस्यसार्वधातुकमपिदिति ङि-
त्वस्य बाधात् ङिद्भिन्नप्रतिषेधविषयसत्वाद्गुणसिद्धेरिति चेन्न—

एवं सति 'श्यास् परस्मैपदेषु' इति न्यासस्य गुरुभूततयैव हेय-
त्वादित्यलम्।

ननु ङ्यासुट् परस्मैपदेषूदात्त इत्येव सूत्रमस्तु ङिच्चेत्येतन्मास्तु
इति चेन्न।

तथा सति किदाशिषीति कित्वस्येज्यादित्यादौ सम्प्रसारणविधानेन
चारितार्थ्यात् औपदेशिकङित्त्वस्य आतिदेशिककित्वेन बाधासंभवेन
जागर्यादित्यत्र ङिद्भिन्नप्रतिषेधविषयपरत्वाभावेन गुणानापत्तेः। सिद्धा-
न्ते तु कित्त्वङित्त्वयोरुभयोरप्यातिदेशिकतया विशेषविहितकित्त्वेन ङि-
त्वस्य बाध इत्यदोषात्।

न चैवं यासुट् विधीयतां किदाशिषीति च मास्तु तथा च नोक्तो

CC-0. Vasishtha Tripathi Collection. Digitized by eGangotri

दोष इति वाच्यम्, विधिलिङ्यपि जागृयात् वच्यादित्यादौ संप्रसारण-गुणयोरापत्तेरित्यलम्।

इजादेश्च गुरुमतोऽनृच्छः ११७

नन्वत्र 'गुर्वादेरनृच्छः' इत्येव न्यासोस्तु गुर्वादेर्ऋच्छतिभिन्नाद्धातोराम् लिटीति तदर्थः—

न च आप्लृधातोर्लिटि आमापत्तिः ततश्च आप इति न सिद्ध्येदिति वाच्यम्, दयायासश्चेति सूत्रेण आसेराम्विधानस्य आकारादेश्चेदास एवेति नियमार्थतयाऽदोषात्।

न च नियमस्य सजातीयापेक्षत्वाद् आसेरौपदेशिकगुर्वादित्वेन औपदेशिकगुर्वादेश्चेदास एवेति नियमापत्तौ आत इत्यादावपि आमापत्तिरिति वाच्यम्, लाघवेन सामान्यापेक्षनियमस्यैवौचित्येनादोषात् लिट्सन्निपातप्रयुक्तद्वित्वप्रयोज्यदीर्घस्य लिट्संनिपातविघातकत्वानौचित्याच्चेति केचित्।

अन्ये तु अनृच्छ इत्यपि मास्तु गुर्वादेरित्येव सूत्रमस्तु। नियमादिकं पूर्ववत्। आनर्च्छेत्यादौ ऋच्छत्यृतामिति गुणविधानाल्लिङ्गाल्लिट्याम् न भविष्यति।

न च व्यवधानार्थं तदिति वाच्यम्, प्रकृतसूत्रे अनृच्छपदाभावे आम्गुणयोः प्राप्तौ प्रतिपदोक्तत्वाद् ऋच्छत्यृतामिति गुणे कृते संयोगसंज्ञा ततो गुरुसंज्ञा तस्या सन्निपातविघातके आम्यनिमित्तत्वेन दोषाभावादिति वदन्ति।

तन्न, अन्तरङ्गानपीति न्यायेन लुक्प्रयोजकसमासादीनां प्राबल्य बोधनवत् आमोऽपि बलवत्त्वबोधनेन प्रतिपदोक्तादपि गुणात्पूर्वमामि लुकि लिट्परकृञोऽनुप्रोयगे आम्बाधापेक्षया तस्मिन्निति परिभाषाबाधस्यौचित्येन व्यवधानेऽपि गुणसंपादनेन ऋच्छग्रहणस्य चरितार्थ्येन तत्सामर्थ्येन आमो वारणासम्भवेन अनृच्छ इति पर्युदासस्यावश्यकत्वात्।

परेतु 'इचो गुरोरनृच्छ' इत्येव सूत्रमस्तु अनृच्छ इति पर्युदासादर्थान्तरस्यासंभवाच्च इजादेर्गुरुमत इत्यर्थलाभसंभवात्।

न च मतुब्ग्रहणमौपदेशिकगुरुमद्ग्रहणार्थं तेनेयेष इत्यत्र नामिति

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

वाच्यम्, सन्निपातपरिभाषया इयेषेत्यत्राम्वारणसंभवे तादृशार्थकरणे फलाभावात् औपदेशिकगुरुमत्त्वस्य इदि धातावपि सत्त्वेन इन्दांचकारेत्यस्यासिद्ध्यापत्तेश्च ।

एवमादिग्रहणं मुख्येजादेरेवग्रहणं न तु व्यपदेशिवद्भावेनेजादेरित्यर्थमित्यपि न युक्तम् ईङ्गतौ इत्यत्र माधवाद्युदाहृतस्य अयांचक्रे इत्यस्यासिद्ध्यापत्तेः । नचैवं न्यासे अनृच्छेत्यपि व्यर्थम् आनच्छेत्यत्र प्रतिपदोक्तत्वाद् गुणे इजादित्वाभावेनामोऽप्राप्तेरिति वाच्यम्, अन्तरङ्गानपीतिन्यायेन गुणं बाधित्वा पूर्वमामः प्रवृत्त्यापत्तेरिति वदन्ति ।

आमः ११८

आमः परस्य लुक् स्यादिति सूत्रार्थः । नन्वाम्विधायकसूत्रैर्लिटः स्थाने आम् विधानेनैव सिद्धौ 'आम' इदं सूत्रं किमर्थम् । नचैवं लिट्त्वस्य स्थानिवत्त्वेन 'लिटि धातोरनभ्यासस्य' इति आम्प्रकृतिभूतधातोर्द्वित्वापत्तिरिति वाच्यम्, भीह्रीभृहुवां श्लुवच्चेत्यनेन द्वित्वार्थमामः श्लुवद्भावविधानेनामि न द्वित्वमिति कल्पनेनादोषात् । न च बिभरांचकारेत्यत्र भृञामिदिति इत्वार्थं श्लुवद्भाव इति वाच्यम्, तावन्मात्रप्रयोजनकत्वे भृञामिदामिच्चेत्येव सिद्धे भीह्रीति सूत्रवैयर्थ्यस्य तादवस्थ्यादिति चेन्न—

ईङ् गताविति धातोर्लिटि आमि अयांञ्चक्रे इत्यत्र असंयोगाल्लिट् किदिति कित्त्वेन गुणानापत्तेः ।

न च उषविदजागृभ्योऽन्यतरस्यामित्यत्र विदांचकारेत्यत्र गुणाभावाय कृतस्य विदेत्यकारान्तानुकरणस्य सामर्थ्येन आमः कित्त्वं नेति कल्पनेन अयांचक्रे इत्यत्र न दोष इति वाच्यम्, एवं तर्हि अयांचक्रे इत्यत्र आमः कृत्त्वेन कृदन्तत्वात्प्रादिपादिकत्वेन सुः तस्य लुगर्थमाम इति सूत्रस्य सार्थक्यात् । एवं च अयाञ्चक्रे इत्यत्र अयामित्यस्य पदत्वान्मोनुस्वारे 'वा पदान्तस्य' इति वैकल्पिकपरसवर्णसिद्धिः ।

न च आम इत्यस्याभावेऽपि हल्ङ्यादिलोपेनैव सोर्निवृत्तिर्भविष्यतीति वाच्यम् यदानुप्रयोगसामर्थ्याद्द्वित्वबहुत्वावगतिः तदास्तिद्विवचनबहुवचनोत्पत्तिरिति तन्निवृत्त्यर्थमाम इति सूत्रस्यावश्यकत्वात् सर्वैकवचनोत्पत्तिपक्षे आमादिलुगर्थमावश्यकत्वाच्चेत्यलम् ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

## इट ईटि ११९

अत्र 'सेट ईटि' इति न्यासोऽस्तु ईटि परे सेटः सस्य लोपो भवतीति तदर्थः । तथा चाचेतीदित्यादौ सवर्णदीर्घार्थं 'सिज्लोप एकादेशे सिद्धो वाच्य' इति वार्तिकमपि न कर्तव्यं भवतीति महल्लाघवमिति ।

न च कृष्णशब्दात्क्यङन्तात् कर्तरि क्विपि अल्लोपे यलोपे च कृते निमित्तापाय इति परिभाषया क्यङ्प्रयोज्याकारस्य निवृत्तौ आचारक्विपि लुङि अकृष्ण इस् ईत् इति स्थिते अन्तरङ्गत्वादकारेकारयोर्गुणे अन्तादिवच्चेत्यनेनेकारे इट्त्वात् इड्विशिष्टस्य सस्य लोपे अकृष्णीदिति रूपापत्तिः । यथाश्रुतसूत्रसत्त्वे तु सकारस्य लोपे अकृष्णे ईत् इति रूपमिष्यते अयादेशस्तु न सिज्लोपस्यासिद्धत्वादिति वाच्यम्,

अकृष्ण इस् ईत् इति स्थिते 'अतो लोप' इति अल्लोपस्य 'आद्गुण' इत्यस्य च प्राप्तौ 'वार्णादाङ्गं वलीय' इति परिभाषया अल्लोपे सकारलोपदीर्घयोः, इड्विशिष्टसस्य लोपे वा अकृष्णीदिति रूपस्यैवेष्टत्वेनादोषादिति चेन्न—

और्णुवीदित्यत्र पुगन्तेति गुणापत्तेः । मम तु एकादेशस्य स्थानिवत्त्वेनेटाव्यवधानान्न गुण इत्यलम् ।

## सिज्लोप एकादेशे सिद्धो वाच्यः १२०

नन्वत्रैकग्रहणं किमर्थमिति चेन्न–'सिज्लोप आदेशे सिद्धो वाच्य' इत्युक्तौ अवात्तामित्यत्रसिज्लोपस्यासिद्धत्वात्सस्यार्धधातुक इति तत्वानापत्तेरित्यलम् ।

## वदव्रजहलन्तस्याचः १२१

हलन्तत्वादेव सिद्धे वदिव्रजिग्रहणमतो हलादेरिति वैकल्पिकवृद्धिबाधनार्थम् अन्यथा हलन्तलक्षणवृद्धेर्नेटीति निषेधे अतो हलादेर्लघोरिति वैकल्पिकवृद्धिः स्यात् ।

ननु 'वदव्रजोश्च' इति सूत्रमस्तु तत्र वदव्रजोरिति पृथग्वाक्यम् । तस्य वदेर्व्रजेरङ्गस्य वृद्धिः स्यात् परस्मैपदे परे सिचि । ततः 'अचः' अङ्गस्याचो वृद्धिः परस्मैपदे परे सिचि इति तदर्थः । आद्यमतो हलादेरित्यस्य बाधनार्थं द्वितीयमगोपीदित्यादौ वृद्ध्यर्थम् ।

CC-0. Prasanth ... Digitized by eGangotri

न च सम्भवति सामानाधिकरण्ये वैयधिकरण्यस्यान्याय्यत्वात् अजन्तस्याङ्गस्येत्यर्थापत्तौ अगौप्सीदित्यत्र वृद्धयनापत्तिरिति वाच्यम्, नेटीत्यारम्भेण, अज्ग्रहणसामर्थ्येन च वैयधिकरण्येनान्वयात् । तथा हि अचिकीर्षीत् इत्यादौ परत्वादल्लोपात्, अयासीदित्याकारान्ते फलाभावात्, इगन्ते सिचि वृद्धिरित्यनेन सिद्धत्वात् एजन्ते आत्वे कृते आदन्तत्वेन फलाभावात् अजन्त इत्यर्थे अज्ग्रहणं व्यर्थं सद्वैयधिकरण्येनान्वेति ।

न च व्यधिकरणान्वये अपिपठिषीदित्यत्र पकारोत्तराकारस्य वृद्धयापत्तिरिति वाच्यम्, 'अनन्त्यविकार'-इति परिभाषया ऽदोषाद्धलन्तग्रहणं व्यर्थमिति चेन्न—

इति आरभ्य वृद्धिस्थानिनः सिच्परत्वेन विशेष्यन्त इत्यर्थज्ञापनार्थं हलन्तग्रहणस्य सत्त्वात् । एवं च अराङ्क्षीदित्यादि सिद्धये वर्णग्रहणे जातिग्रहणाय हलन्तग्रहणमावश्यकम् । अत एव लावस्थायामडिति पक्षे अपाक्षीदित्यत्राटो न वृद्धिरिति शेखरे स्पष्टम् ।

केचित्तु अपिपठिषीदित्यत्र वृद्धिवारणाय हलन्तग्रहणम् 'अनन्त्यविकारपरिभाषया' तु न निर्वाहः अत्यसदेशानन्त्यसदेशयोर्यत्र युगपत्प्राप्तिस्तद्विषयत्वात्तस्या इति वदन्ति ।

## अत उपधायाः १२२

नन्वत्र सूत्रे तपरकरणं व्यर्थम् । न तावद् दीर्घे वृद्धिव्यावृत्त्यर्थम् सत्यामपि वृद्धौ क्षत्यभावात् प्लुतस्य वृद्धौ क्षतिसत्त्वेऽपि धातुषु प्लुतस्याभावादिति चेन्न—

राममततीति रामात् संबुद्धौ हे रामात् 'गुरोरनृत'-इति रकारोत्तरवर्त्याकारस्य प्लुते तदनुकरणे आख्यानणिचि टिलोपे रा३मयतीति रूपम् वृद्धिं प्रति प्लुतस्यासिद्धत्वं तु न तपरकरणसामर्थ्यात् तपरत्वाभावे वृद्धौ रामयतीति रूपापत्तेः । न च वृद्धौ स्थानिवत्त्वम्, अज्झलादेशत्वादित्यलम् ।

## णलुत्तमो वा १२३

नन्वत उपधाया इत्यनन्तरम् उत्तमे णि इति सूत्रमस्तु उत्तमे

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

ञ्णिति वा वृद्धिरिति तदर्थः। जगाद जगदेत्यादीनां सिद्धया 'णलुत्तमो वा' सूत्रं व्यर्थमिति चेन्न–

'उत्तमे वा' इति सूत्रे अत इति संबध्यते न वा आद्ये लुलाव लुलवेत्यत्रोपधाभूतातोऽभावाद्वृद्ध्यनापत्तौ अचो ञ्णितीति नित्यवृद्ध्यापत्तिः। न च परत्वात्सार्वधातुकार्धधातुकयोरिति गुणेऽदुपधत्वमिति वाच्यम्, नित्यत्वाद्गुणापेक्षया अचो ञ्णितीति वृद्धेरेव वलीयस्त्वात् गुणेऽपि वार्णादाङ्गमिति परिभाषया अवादेशं बाधित्वा नित्यवृद्धेरेवापत्तेश्च। द्वितीये चुकुट चुकोटेत्यत्र वृद्ध्यापत्तिः इक्परिभाषोपस्थितौ जगदेत्यस्यासिद्ध्यापत्तिश्चेति यथान्यासमेव रमणीयम्।

यत्तु अचो ञ्णितीति सूत्रं णलुत्तमो वा इति सूत्रं च मास्तु, 'अत उपधाया' इत्यत्रैव ञ्णितीति अस्तु, 'गोतो णित्' इत्यत्र ओतोवृद्धिरिति सूत्रमस्तु 'सख्युरसंबुद्धौ' इत्यनेनापि वृद्धिरेव विधीयताम् लुलावेत्यत्र गुणेऽवादेशे 'उत्तमे वा' इति वृद्धाविष्टसिद्धिरिति तन्न–

प्रियं करोति प्रापयतीत्यत्र वृद्ध्यर्थमचोञ्णितीत्यस्यावश्यकतया लुलावेत्यत्र नित्यवृद्ध्यापत्तेः। चुकुट चुकोट इति रूपद्वयाद्धिश्च तथा हि सिद्धन्ते णित्वविकल्पेन गाङ्कुटादिसूत्रेण ञ्णिद्भिन्नस्य ङित्वेन चुकुटेतिरूपं णित्वपक्षे चुकोट इति रूपमिति रूपद्वयम्। सांप्रतम् 'उत्तमे वा' इति सूत्रेण वैकल्पिकवृद्धेरेव करणाण्ङित्त्वाभावेन गुणे चुकोट इत्येकमेव रूपं स्यात् 'उत्तमे वा' इत्यत्र अत इत्यस्यासम्बन्धकरणे वैकल्पिकवृद्धौ चुकोट चुकौटेति स्यादित्यलम्।

अञ्चु गतिपूजनयोः १२४

अञ्चु गतौ अचि पूजायामिति धातुद्वयमस्तु नाञ्चेः पूजायामिति सूत्रं मास्तु, एवं पूजार्थकस्य अञ्चेरुदित्त्वाभावेन क्त्वायामुदितो वेत्यस्याप्रवृत्त्या यस्य विभाषेति निष्ठायामिड्निषेधाप्रवृत्त्या निष्ठायामिडर्थमञ्चेः पूजायामिति सूत्रं च मास्तु इति महल्लाघवम्

न च सिद्धान्ते पूजार्थकस्याप्युगित्त्वेन ततः क्विनि प्राङ् तस्य लक्ष्मीवाचकेन ईशब्देन समासे प्राञ्ची ततस्तरपि उगितश्चेति ह्रस्वविकल्पे पक्षे प्राञ्चितरेतीष्यते तदिदानीं न स्यादुगितः परत्वस्यैकारेऽसत्वादिति वाच्यम् आद्ये पेषमतिवरेत्यत्र नित्य ह्रस्वस्यैवोक्त्या

CC-0. Vasishtha Tripathi Collection. Digitized by eGangotri

उगितो विहितस्येत्यस्यावश्यकत्वेन प्राञ्चितरेत्यत्र ह्रस्वविकल्पस्यानिष्टत्वात् ।

न च उगिदचामित्यत्राज्ग्रहणनियमेन अञ्चुधातोः पूजायामप्युगित्कार्यं भवति उगित्त्वाभावेन तदिदानीं न स्यादिति वाच्यम्, अचामिति नलोपनिर्देशेन धातोश्चदुगित्कार्यं तर्हि नलोपिनोऽञ्चतेरेवेति नियमेन पूजायामुगित्कार्यस्यानिष्टत्वादिति चेन्न । नाञ्चेः पूजायामिति सूत्रे दत्तोत्तरत्वादिति दिति दिक् ।

## घुण घूर्ण भ्रमणे १२५

नन्वत्र घुर्ण इति ह्रस्वपाठ एवास्तु 'उपधायां च' इति दीर्घेण घूर्णते इत्यादिसिद्धेरिति चेत्प्रक्रियालाघवार्थं दीर्घपाठ इति केचित् । ननु घूर्णधातोः 'अन्येभ्योपि दृश्यते' इति वनिपि विड्वनोरित्यात्वे ह्रस्वपाठे घुरावेति दीर्घपाठे घूरावेति फलभेदस्य स्पष्टतया कथमेतत् । न च दीर्घे कर्तव्ये परनिमित्तकत्वेन वहिरङ्गस्यासिद्धत्वादादौ दीर्घे न फलभेद इति वाच्यम्, त्रिपाद्यां वहिरङ्गपरिभाषाया अप्रवृत्तेरिति चेन्न—

प्राचीनमते कार्यकालपक्षे त्रिपाद्यां वहिरङ्गपरिभाषायाः प्रवृत्त्या तन्मताभिप्रायेण प्रक्रियालाघवार्थमित्यर्थमभिधानमित्याशयात् ।

वस्तुतस्तु घुर्ण इति ह्रस्वपाठः । न च नव्यमते त्रिपाद्यां बहिरङ्गपभाषाया अप्रवृत्त्या वनिपि फलभेद इति वाच्यम्, घुरावा ब्राह्मणीत्यस्यैवेष्टत्वेनादोषात् उपधायां चेति दीर्घस्यात्वस्य च प्राप्तौ दीर्घस्यासिद्धत्वेनात्वस्यैव प्रवृत्तेः ।

न चास्माद्धिजन्तात्सौ भ्यामादौ च नलोपे कर्तव्ये नलोपणत्वयोः प्राप्तौ णत्वस्यासिद्धत्वान्नलोपे लघूपधगुणापत्तिः, गुणे नलोपासिद्धत्वं तु न नलोपः सुप्स्वरेति परिगणनादिति वाच्यम्, अन्येभ्योऽपि दृश्यत इति दृशिग्रहणेनास्माद्विज् न भवतीत्याशयादित्यलम् ।

## धिन्विकृण्व्योर च १२६

तनादिकृञ्भ्य उरिति सूत्रात् उरित्यनुवर्तते कर्तरि सार्वधातुके इति चानुवर्तते । तथा च अनयोरकारोऽन्तादेशः स्यात् उप्रत्ययश्च कर्त्रर्थे सार्वधातुके परे इति सूत्रार्थः । इमौ भ्वादी ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

प्राञ्चस्तु स्वादिगणे पठन्ति । तदयुक्तम् । तथा सति तत्सामर्थ्यात्पक्षे

श्नुप्रत्यये वस्योठि अनिष्टरूपापत्तेः। वोपदेवेन तु विकरणलोमेन तनादित्वमनयोरङ्गीकृतम्।

धिनोतीत्यत्र वकारस्य अकारादेशे 'अतोलोप' इत्यल्लोपे तस्य स्थानिवत्वेन लघूपधगुणो न एतदर्थमेव वकारस्याकारादेशविधानं कृतमन्यथा प्रक्रियालाघवाय धिन्विकृण्व्योर्लोपश्चेत्येव वदेत्।

ननु 'अतो लोप' इत्यस्य उपदेशे यदकारान्तं तस्याकारस्य लोपः स्यादार्धधातुके इत्यर्थात् प्रकृतेऽल्लोपो न स्यात् उपदेशेऽकारान्तत्वाभावादिति चेन्न

आर्धधातुकोपदेशे यदकारान्तं तस्याकारस्य लोपः स्यादित्यर्थस्वीकारेण इह पूव वकारस्याकारे कृते पश्चाच्चानुकृष्टस्य उप्रत्ययस्य जायमानतया आर्धधातुकोपदेशेऽकारान्तत्वात्तत्तया दोषाभावात्।

ननु प्रक्रियालाघवेन धिन्विकृण्व्योर्लोपश्चेति करणेऽपि 'न धातुलोप—' इति गुणनिषेधः सिद्धः किमर्थमकारादेशविधानम्।

न च 'न धातुलोप'—इत्यत्र धातोर्लोपः धातुलोप इति तत्पुरुषे धात्वंशलोपे सति आर्धधातुकनिमित्ते गुणवृद्धी न भवत इत्यर्थं क्नोपयतीत्यत्र गुणनिषेधापत्तिरतो धातोर्लोपो यस्मिन्निति बहुव्रीह्यङ्गीकारेण धात्वंशलोपनिमित्ते आर्धधातुके इत्यर्थेन प्रकृतन्यासे लोपस्य आर्धधातुकनिमित्तत्वाभावेन गुणनिषेधाप्रवृत्तिः। न चैवं लविता इत्यादौ अलोपस्य अनैमित्तिकत्वेनार्धधातुकनिमित्तत्वाभावेन गुणनिषेधाप्रवृत्त्या धातुग्रहणं व्यर्थम्, बहुव्रीहिलाभार्थं तदावश्यकत्वात् 'यद्येवं नार्थो धातुग्रहणेन' इति तस्य प्रत्याख्यानाच्चेति वाच्यम्,

द्विर्वचनेऽचीत्यस्य द्वित्वनिमित्तेऽचीत्यर्थात् ऊर्णुनविषतीत्यत्र द्वित्वनिमित्तत्वमिस इति समुदायस्य नत्वच इति निषेधाप्रवृत्तिमाशङ्क्य तस्य भावस्तद्भावस्तदीयसत्ता तद्भावे सति भवतीति तद्भावभावी तत्सत्तोत्तरसत्ताक इत्यर्थः। तत्त्वमात्रेण द्वित्वनिमित्तमत्र इत्युक्तस्य द्विर्वचनेऽचि इति सूत्रशेखरे उक्ततया प्रकृतेऽप्यार्धधातुकस्य धात्वंशलोपनिमित्तत्वानपायेन 'न धातुलोप' इति गुणनिषेधप्रवृत्तेर्निर्बाधत्वादिति चेन्न—

न धातुलोप' इति सूत्रस्य भाष्ये प्रत्याख्याततया तत्पक्षसाधारण्येन गुणनिषेधाय प्रक्रियागौरवमङ्गीकृत्यापि अकारादेशविधानात्।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

तदुक्तं भाष्ये 'प्रत्याख्यायते स योगः तथा च गुणवृद्धी स्याताम्' इति।

ननु भाष्यकारीयस्य प्रत्याख्यानस्य सूत्रकृतो ज्ञानासंभवेन कथं तदनुसारेण अकारादेशविधानमिति चेन्न—

ऋषीणां सर्वज्ञत्वेन परकालभाविभाष्यकारीयप्रत्याख्यानस्यापि सूत्रकृतो ज्ञानसंभवात् एतन्मूलकमेव पठ्यते यथोत्तरं मुनीनां प्रामाण्यमिति दिक् ।

अत्र 'धिविकृण्व्योर च' इत्येव सूत्रमस्तु । नचैवमन्तरङ्गत्वात्पूर्वमकारादेशे अकरात्परो नुम् स्यात् सिद्धान्ते तु नुम्विशिष्टस्यैव पाठेनादोष इति वाच्यम्, इदितो नुम् धातोरित्यस्य अङ्गसंज्ञायोग्यस्य इदिदन्तस्य धातूपदेशकाले नुमित्यर्थस्य कुण्डेत्याद्यर्थमावश्यकतया प्रकृते पूर्वं नुमि ततोऽकारादेशेऽदोषात् । अन्यथा कुण्डेति न सिध्येत् सति नुमि गुरुमत्त्वेन 'गुरोश्च हल' इति अप्रत्ययः सति च अप्रत्यये अङ्गसंज्ञायां नुमित्यन्योन्याश्रयात् । तथा च भाष्यम् 'नुम्विधावुपदेशिवद्वचनं कर्तव्यमिष्टप्रत्ययसिद्ध्यर्थम्, धातुग्रहणसामर्थ्याद्वा तदुपदेशे नुम्विधानम्' इति । न च धातुग्रहणाभावे भविता अभैत्सीत् इत्यादौ नुम् स्यादिति वाच्यम्, तासेत्यदन्तप्रत्ययविधानेन सिचः स्थाने सच इति पाठेन चाऽदोषात ।

न चैवं मन्तेत्यत्र अनिदितामिति नलोपापत्तिरिति वाच्यम् , हनः सिच इति सूत्रारम्भेण प्रत्ययधातूभयघटितेङ्गे अनिदितामित्यस्याप्रवृत्त्यङ्गीकारेणादोषादिति दिक् ।

## ऋतेरीयङ् १२७

नन्वत्र 'ऋतेङ्य' इत्येव सूत्रमस्तु । अकृत्सार्वधातुकयोर्दीर्घ' इति दीर्घे ऋतीयते इत्यादिसिद्धेरिति चेदत्र—

शेखरकारः । कमेर्णिङ्साहचर्यात्तान्त इका निर्दिष्टो नत्विकारान्तः ङ्यप्रत्यये 'अकृत्सार्वधातुकयोर्दीर्घ' इति दीर्घेण सिद्धे ईयङ्करणाच्चेति ।

युक्तं चैतत् अत एव वश्चिलुञ्च्यृतश्च इति संगच्छते इति प्राहुः ।

भैरवमिश्रास्तु-यङा सिद्धे ईकारोच्चारणसामर्थ्यान्नायमिकारान्तः अन्यथा अकृत्सार्व इति दीर्घेण सिद्धे ईकारोच्चारणं व्यर्थं स्यात् ।

CC-0. Panini Kanya Maha Vidyalaya Collection. Digitized by eGangotri

न च यङि सति सन्यङोरिति द्वित्वापत्तिरिति वाच्यम्, यप्रत्ययेनेष्ट-सिद्धेरित्याहुः।

केचित्तु वञ्चिलुञ्च्यृतश्चेति निर्देशः एकदेशानुकरणेन, एवञ्च ऋते-रिकारान्तत्वे ईयङि सवर्णदीर्घस्य एरनेकाच इति यणश्च प्राप्तौ वात-प्रमीतिवद् 'वार्णादाङ्गं बलीय' इति परिभाषया दीर्घं बाधित्वा यणि ऋत्यत इतीष्यते ङ्ये तु ऋतीयते इति स्यादिति ङ्यविधाने दूषण-मुद्गिरन्ति।

अन्येतु 'अर्तनं च ऋतीया च हृणीया च घृणार्थका' इति कोश-दर्शनेन ऋतेरिकारान्तत्वमास्थाय च्छ्वोरिति सतुङ्निर्देशेन वार्णपरि-भाषाया अनित्यत्वेनाप्रवृत्त्या अन्तरङ्गत्वाद्दीर्घे ऋतीयते इत्येवेष्यते इति ङ्यविधाने न किमपि दूषणमिति वदन्ति।

तदुभयमप्यसङ्गतम्। वञ्चिलुञ्च्यृतश्च इत्यत्र ऋत इति एकदेशानु-करणमित्यत्र प्रमाणाभावः। किंच अर्तनं च ऋतीया चेति कोशेनापि ऋतेस्तान्तत्वमेवावगम्यते, अन्यथा ऋति धातोर्ल्युटि इकारस्य गुणे ऋतयनमिति स्यात् ऋतीया इति तु ऋतधातोः स्वार्थे ईयङि सना-द्यन्ता इति धातुत्वे गुरुमत्त्वेन "गुरोश्च हल" इति अप्रत्ययेन सिध्यति। ङ्य इति वक्तव्ये ईयङ् करणमपि ऋतधातोस्तान्तत्वे मानम्।

यत्त ईयङि यणा रूपवैलक्षण्याशङ्कनम् यच्च वार्णपरिभाषाया अनि-त्यत्वेन परिहरणं तदुभयमप्यसङ्गतम्। एरनेकाच इति सूत्रस्य बाध्यसा-मान्यचिन्तापक्षाश्रयणेन दीर्घापवादतया वार्णपरिभाषया तद्बलवत्त्वसा-धनस्यानुपयुक्तत्वात्।

न चैवमिकारान्तत्वे ङ्येयङो रूपभेदेन कथमीयङः ऋतधातोस्ता-न्तत्वे ज्ञापकत्वमिति वाच्यम्, 'अपवादो यद्यन्यत्र चरितार्थस्तर्ह्यन्तरङ्गेण बाध्यते' इति परिभाषया यणं बाधित्वा दीर्घत्वे तयोः फलभेदाभावेन तान्तत्वज्ञापकत्वे बाधकाभावादिति नव्याः।

## अर्त्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ् णौ १२८

ननु णेः पुडागम एवानेन विधीयतामर्पयतीत्यादेः सार्वधातुकार्ध-धातुकयोरिति गुणेन सिद्धया पुगन्तलघूपधस्य च इति सूत्रे पुगन्तग्रहणं मास्तु इति चेदुच्यते—

CC-0. Vasishtha Tripathi Collection. Digitized by eGangotri

णेः पुडागमकरणे प्रणिदापक इत्यत्र यदागमपरिभाषया पुग्विशिष्टस्य लोपापत्तिः निर्दिश्यमानपरिभाषया तद्वारणे तु वलादित्वात्क्न्यादावि-डापत्तिः अदीदपदित्यादौ 'णौचङ्युपधाया ह्रस्व' इति ह्रस्वत्वानापत्तिश्च दुरुद्धरे एवेत्यलम् ।

ननु शवादिवद्विकरणमेव पुप् अस्तु । तथा च नेडाद्यापत्तिर्न वा यदा गमपरिभाषोपयोग इतिं चेन्न—यदि धात्वधिकारे पुपो विधानं तर्हि तस्यार्धधातुकत्वेनेटो दुर्वारत्वं यदि न धात्वधिकारे विधानं तर्हि आर्ध-धातुकत्वाभावेन अर्पयतीत्यादौ गुणार्थं पुगन्तेति सूत्रे पुगन्तग्रहणस्य कर्तव्यत्वमेव ।

न चैवं पिसार्वधातुकार्धधातुकयोः इति न्यस्य पकारे सार्वधातुकार्ध-धातुकयोश्चेगन्ताङ्गस्य गुणः स्यादित्यर्थेन अर्पयतीत्यस्य सिद्धया पुगन्तेति सूत्रे पुगन्तग्रहणमनावश्यकमिति वाच्यम्, जिह्रेतीति ह्रीस्त-स्माद्धात्वर्थे णिचि पुकि ह्रीपयतीति भवतीदानीं पकारे परे गुणापत्तेः सिद्धान्ते धातोर्विहितत्वाभावेनार्धधातुकत्वाभावान्न दोषः ।

न च पुप्तिङ्शित्सार्वधातुकमिति न्यस्य सार्वधातुकसंज्ञाविधाना-न्नेडापत्तिः अर्पयतीत्यादौ गुणस्य सिद्धिश्चेति वाच्यम्, यङ्लुगन्ताद् हाधातोर्णिचि पुपि यङोवेतीडापत्त्या जाहेपयतीति रूपापत्तेः इष्यते तु जाहापयतीति सिद्धान्ते णिचः प्रातिपदिकाद्विहितत्वेन आर्धधातुकत्वा-भावन्न भवतीति ।

न च अर्त्यादिसाहचर्यादौपदेशिकधातोर्विहिते णिच्येव पुप् न प्राति-पदिकणिचीति वाच्यम्, प्रियं करोति प्रापयतीत्यादिलक्ष्यानुरोधेन।सह-चरितपरिभाषाऽप्रवृत्तेरिहाभ्युपेयत्वात् ।

ननु पश् एव विधीयतां ततश्च नेडापत्तिरिति चेन्न—

तथा सति सार्वधातुकमपिदिति ङित्वेन अर्पयतीत्यत्र गुणनिषेधा-पत्त्या गुणार्थ पुगन्तेत्यस्यावश्यकत्वात् घ्रापयतीत्यत्र जिघ्रादेशस्य ज्या-पयतीत्यत्र ग्रहिज्येति संप्रसारणस्य आपत्तेश्च श्पप् इति करणेन गुणस्य ज्यापयतीत्यत्र संप्रसारणाभावस्य च संपादनेऽपि घ्रापयतीत्यत्र जिघ्रा-देशस्य दुष्परिहरत्वमेव ।

पुप्श् इति करणे आदिरित्यस्य जिघ्रादेशवारणे तु पद्वयश्रवणा-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

प्त्तिः पकारस्योपदेशेऽन्त्यत्वाभावेनेत्वानापत्तेः चुटुपः इति न्यासेनेत्व-संपादने तु पाशप्प्रत्यये पकारस्येत्वापत्तिः तदर्थं लशक्वतद्धित इत्यत्रैव लशप्क्वतद्धित इति । करणे तु न कश्चिद्दोष इति चेदुच्यते ।

'अतिष्ठपत् अदिद्रपत् इत्यादौ इत्वस्य उपधाह्रस्वत्वस्य चानापत्तेः । यदि णौ चङ्युपधाया इत्यारभ्य जिघ्रतेर्वा इत्यन्तेषु सूत्रेषु उपधाग्रहणमपि न कार्यं सूत्रषट्कसप्तम्यन्तानां निर्दिश्यमाने एवान्वयेन चङ्परकण्यव्यवहितपूर्वस्य अङ्गावयवाचो ह्रस्व इत्याद्यर्थेन येननाव्यवधानमिति न्यायेन एकवर्णव्यवधाने एव प्रवृत्त्या द्व्यादिवर्णव्यवधानवतामचां ह्रस्वत्वापत्त्यभावात् तथा च नायं दोष इत्युच्यते तदा सुवच एवायं न्यास इति बोध्यम् ।

कश्चित्तु क इवाचर्य क, अ इवाचर्य अ, क अ इति यस्मिन्व्यापारे इति विग्रहे एहीडादित्वात्समासे दीर्घे का ततो णिचि पुकि क्विपि णिलोपे काप् कवृत्तितिङन्तत्वस्य का इत्यत्र पूर्वान्तवद्भावेनातिदेशेन यदागमपरिभाषया च काप् इत्यत्र तदतिदेशेन काप्गच्छतीत्यत्र 'तिङ्ङतिङ' इति न प्रवर्तते, णिलोपस्य स्थानिवत्त्वं तु न, स्वरविधौतन्निषेधात् पपुश् इति करणे तु तस्यागमत्वाभावेन यदागमपरिभाषाया अप्रवृत्त्या न काविव्यत्र तिङन्तत्वमिति 'तिङ्ङतिङ' इति प्रवर्ततेवेति पपुश् इति न कर्तुं शक्यते इत्याह तन्न ।

कास्प्रत्ययादिति सूत्रस्थभाष्येण एकाच्स्य आचारक्विपोऽनभिधानेनादोषात् ।

यदि तु लिट्येवानभिधानमिति सूक्ष्ममीक्ष्यते तदा तु इदमेव दूषणं प्रकृतन्यासे इत्यवधीयतामित्यलम् ।

ओः पुयण्ज्यपरे । १२९

ननु 'पुयण्ज्यपरे' इत्येव सूत्रमस्तु ओर्ग्रहणं किमर्थम् । न चैतदभावेऽकारादीनामपीत्वं स्यादिति वाच्यम्, अवर्णपरकपवर्गादिपरत्वे पिपततीत्यादावकारस्येत्वस्य इष्टत्वात् तादृशस्य ईकारस्य तादृशयोर्ऋकारलृकारयोश्चासम्भवात् पै रै वै धातुभ्यः सनि आत्वे 'सन्यत' इतीत्वस्येष्टत्वाच्च परिशेषादुकारे एवेत्वं भविष्यतीति ओर्ग्रहणवैयर्थ्यस्य तादवस्थ्यात् ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

न च पचधातोर्यङि ततस्सनि यङ्निमित्ताभ्यासावयवाकारस्यान्तरङ्गत्वेन 'दीर्घोऽकित' दीर्घे पापचिषते इत्यत्र इत्वापत्तिरिति वाच्यम्, सनि परे सन्निमित्तकाभ्यासावयवस्यैवेत्वमित्यर्थस्य प्रत्यासत्तिमूलकस्य प्रकृते आश्रयणेनादोषादिति चेन्न—

द्विर्वचननिमित्ताङ्गाभ्यासावयवस्य द्विर्वचननिमित्तकं कार्यं तन्निमित्तकाभ्यासस्यैव भवतीति प्रत्यासत्तिलभ्य एवार्थे ओरित्यस्य ज्ञापनाय सत्त्वात् तत्फलन्तु यङन्तगमधातोः सनि जङ्गमिषते इति ।

सन्निमित्तकद्वित्वनिमित्ताभ्यासावयवस्येत्वमित्यर्थस्य प्रत्यासत्त्यैव लाभसंभवे तत्रौरित्यस्य ज्ञापकतादानं पिष्टपेषणमेवेति ओरिति निष्फलमेवेति परे ।

## इको झल् । १३०

अत्र 'रुदविदमुषग्रहिस्वपिप्रच्छः संश्च इति सूत्रात्सन्पदमनुवर्तते तदाक्षिप्तो धातुश्च विशेष्यते तेन इगन्ताद्धातोः परो झलादिः सन् कित्स्यादिति सूत्रार्थः । चिचीषति तुष्टूषतीत्युदाहरणम् । चेतुमिच्छतीति विग्रहे सनि एकाच इतीडभावे 'अज्झनगमां सनि' इति दीर्घे द्वित्वे अभ्यासकार्ये सन आर्धधातुकत्वाद् गुणप्राप्तौ 'इको झल्'इति सनः कित्त्वे न क्ङिति च इति निषेधान्न भवति । इकः किम् । पिपासति कित्त्वे तु घमास्थेतीत्वापत्तिः । झलि किं शिशयिषते ।

ननु 'इको झल्' 'हलन्ताच्च' इत्यनयोः स्थाने 'इग्वतो झल्' इत्येव सूत्रमस्तु । एवं च तितृक्षतीत्याद्यर्थं हल्ग्रहणं जातिपरमित्यस्यापि न कश्चिदुपयोगः ।

न च यियक्षतीत्यादौ 'सन्यत' इतीत्त्वे इग्वत्त्वसत्त्वेन सनः कित्त्वेन संप्रसारणापत्तिरिति वाच्यम्, इग्वन्तं धातुमुच्चार्य विहितो झलादिः सन् किदित्यर्थेन प्रकृते कित्त्वाभावेनादोषात् ।

नचैवमर्थस्वीकारे धिप्सतीत्यादौ इग्वतो विहितत्वस्य सन्यभावेन कित्त्वानापत्त्या नकारलोपानापत्तिः उक्तार्थे प्रमाणाभावश्चेति वाच्यम्, एवमपि 'वचिस्वपियजादीनां किती' त्यस्य वच्यादिभ्यो विहिते कितीत्यर्थस्य भाष्यसम्मतत्वेन यियक्षतीत्यादौ दोषाभावेन 'इग्वतो झल्' इति न्यासे दोषाभावात् ।

CC-0. Vasishtha Tripathi Collection. Digitized by eGangotri

परे तु विहितविशेषणाभावेऽपि सना धातुमाक्षिप्य इग्वतो धातोः झलादिः सन् किदित्यर्थमङ्गीकृत्य अभ्यासस्यानर्थकत्वेन तदुत्तरखण्डे एव धातुत्वस्य सत्त्वेन यियक्षतीत्यत्र उत्तरखण्डे इग्वत्त्वस्याभावेन धिप्सतीत्यादौ च तत्सत्त्वेन अकित्त्वकित्त्वयोः सत्त्वेनादोषान्न्यासः सुवच इति वदन्ति ।

अन्ये तु 'लिङ्सिचावात्मनेपदेषु' इति सूत्रे आभ्यां सूत्राभ्याम् इकः हलन्ताच्चेत्यनयोरनुवृत्त्या इक्समीपाद्धलः परौ झलादी लिङ् तङ्परः सिच्चेत्येतौ कितौ स्त इत्यर्थौ भवति उक्तन्यासे च इग्वत एवानुवृत्त्या-नेषीष्ट' अनेष्टेत्यादौ लिङादेः कित्त्वेन गुणनिषेधापत्त्याऽयुक्तोऽयं न्यास इति वदन्ति ।

तन्न, 'हलः लिङ्सिचावात्मनेपदेषु' इति न्यस्य हलः परस्य झलादेर्लिङः सिचश्च कित्वविधानेनादोषात् । न चायष्टेत्यादौ कित्त्वापत्त्या संप्रसारणापत्तिरिति वाच्यम्, इग्वत इत्यस्य सम्बन्धेन इग्वतो हलन्तादित्यर्थेन दोषाभावादित्यलम् ।

ननु चिचीषतीत्यादौ चिनोतेः सनि द्वित्वे सार्वधातुकार्धधातुकयोरिति गुणं येननाप्राप्तिन्यायेन बाधित्वा 'अज्झनगमां सनि' इति दीर्घे दीर्घविधानसामर्थ्येन पुनर्गुणाभावे सिद्धे 'इको झल्' इदं सूत्रं किमर्थम्। न चानिगन्तेषु दीर्घविधानं चरितार्थमिति वाच्यम्, अकारान्तेषु अतोलोपेनाजन्तत्वाभावेन, आकारान्तेषु, कृत्वात्वेषु, एजन्तेषु, दीर्घकाराद्यन्तेषु च सत्यसति दीर्घे विशेषाभावेनाप्रवृत्त्या चारितार्थ्याभावादिति चेन्न ।

मिनोतेर्दीर्घे कृते सनि मीमेति सूत्रे मीग्रहणेन ग्रहणार्थं दीर्घविधानस्य चारितार्थ्येन दीर्घविधानसामर्थ्येन गुणबाधस्य वक्तुमशक्यतया दीर्घे कृते गुणवारणाय 'इको झल्' इत्यस्यावश्यकत्वात् ।

न च नह्येकमुदाहरणं योगारम्भं प्रयोजयतीति भाष्येण तावन्मात्रप्रयोजनकत्वेऽज्ग्रहणवैयर्थ्यमेवेति वाच्यम्, अजादेशगमेरित्यर्थस्यापि लाभार्थमज्ग्रहणस्य सार्थक्यात् ।

न च मिनोतेर्दीर्घाभावेऽपि 'मीनातिमिनोतिदीङां ल्यपि च' इत्यात्वे 'गामादाग्रहणेष्वविशेषः' इति परिभाषया माग्रहणेनैव मिनोतेर्ग्रह-

CC-0. Vasishtha Tripathi Collection. Digitized by eGangotri

णसिद्धौ सनिमीमेति सूत्रे ग्रहणार्थं दीर्घस्य नोपयोग इति दीर्घविधानसामर्थ्येन गुणबाधकल्पनं सम्यगेवेति चेद्

अत्र ब्रूमः, एज्निमित्तत्वं निमित्तीकृत्य प्रवर्तमानस्यात्वस्यैज्निमित्तविघातकहलन्ताच्चेति कित्वसंपादकमिसादेशं प्रति निमित्तत्वासम्भवात् । अत एव सनिमीमेति सूत्रे मीग्रहणं चरितार्थमन्यथा आत्वेन मीनातेरपि माग्रहणेनैव ग्रहणे सिद्धे तद्वैयर्थ्य स्पष्टमेव ते ।

केचित्तु निनीषति बुभूषति तितीर्षति इत्यादौ गुणविधानार्थं कित्वम् न च तत्रापि दीर्घविधानसामर्थ्यादेव गुणभावो भविष्यतीति वाच्यम्, अकृतकारि खल्वपि शास्त्रमग्निवदितिन्यायेन दीर्घान्तेषु प्रयोजनाभावेन अज्झनगमां सनीत्यस्याप्रवृत्या गुणबाधस्य कर्तुमशक्यत्वात्।

न च कृतकारिखल्वपि शास्त्रं पर्जन्यवल्लक्षणप्रवृत्या, दीर्घसंपादनरूपफलाभावेपि गुणप्रतिबन्धरूपप्रयोजनसत्त्वेन च तत्र दीर्घप्रवृत्तौ तत्सामर्थ्येन गुणबाधः सम्राडित्यत्रानुस्वारप्रतिबन्धाय मकारस्य 'मोराजिसमः क्वौ' इतिमकारविधानवदिति वाच्यम्, दीर्घविधानसामर्थ्येन गुणबाध इति हि तदा वक्तुं युज्यते यदा हि अविकृतेन दीर्घेण स्थातव्यमिह तु दीर्घे कृते ॠत इद्धातोरितीत्वं भवतीति गुणप्रतिबन्धो न कर्तुं शक्यते इत्यदोषात् ।

न च दीर्घो हि इत्वस्य निमित्तमेवात इत्वं न बाधते गुणं तु बाधते सामर्थ्यात् । तदुक्तं भाष्ये 'यं विधिं प्रत्युपदेशोऽनर्थकस्स विधिर्बाध्यते । यस्य तु विधेर्निमित्तमेव नासौ बाध्यते इति वाच्यम्, अज्झनगमेति दीर्घाभावेऽपि औपदेशिकेषु ॠकारान्तेषु ॠत इद्धातोरित्यस्य प्रवर्तमानत्वेन अज्झनेतिदीर्घनिमित्तकत्वस्येत्वे वक्तुमशक्यतया विधिं प्रतीति न्यायानवतारेण दीर्घेण इत्वबाधाभाववद्गुणबाधाभावस्यापि वक्तुं शक्यतया कित्वार्थमिको झलित्यस्य चारितार्थ्यात् ।

न च औपदेशिकेषु ॠकारान्तेष्वपि सनि 'इत्वोत्वाभ्यां गुणवृद्धी विप्रतिषेधेन' इति वार्तिकबलेन प्राप्तगुणस्य वारणाय अज्झनेति सूत्रप्रवृत्तेरवश्यं वाच्यतया दीर्घशास्त्रस्य ॠत इदित्वनिमित्तत्वमेवेति यं विधिरिति न्यायप्रवृत्त्या दीर्घेण इत्वाबाधेऽपि गुणबाधो युक्त एवेति इको झलिति सूत्रं व्यर्थमेवेति वाच्यम् ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

असति कित्वे ज्ञीप्सतीत्यत्र सनीवन्तेतीडभावे आपृज्ञपीतीत्वे 'अत्र लोपोऽभ्यासस्य' इति अभ्यासलोपे सति ज्ञीपि स इति स्थिते गुणदीर्घणिलोपानां प्राप्तौ अनवकाशेन दीर्घेण यथा गुणो बाध्यते तथा णिलोपोपि बाध्येत वैषम्ये बीजाभावात्। सति कित्त्वे चिचीषतीत्यादौ सावकाशं दीर्घं णिलोपो बाधते इति ज्ञीप्सतीत्यत्र णिलोपार्थमिको झलिति कित्करणस्यावश्यकत्वात्।

न च कित्वाभावेऽपि ज्ञीपि स इति स्थिते गुणदीर्घणिलोपानां प्राप्तावपि येननाप्राप्तिन्यायेन गुणस्य दीर्घेण बाधेऽपि णिलोपस्य न बाधः णिलोपाप्राप्तिविषये चिचीषतीत्यादौ दीर्घस्य चारितार्थ्यादिति ज्ञीप्सतीत्यत्र दीर्घं बाधित्वा परत्वाण्णिलोपसिद्ध्या कित्करणमनर्थकमिति वाच्यम्,

बाध्यविशेषचिन्तापक्षे येननाप्राप्ते इति न्यायं बाधित्वा पुरस्तादपवादाइति न्यायेन दीर्घेणानन्तरस्य णिलोपस्यैव बाधः स्यात् ननूक्तस्य गुणस्य बाध्यसामान्यचिन्तापक्षे च दीर्घशास्त्रेण स्वविषये प्राप्तविधिमात्रस्य बाध इति दीर्घेण णिलोपबाधे ज्ञीप्सतीत्यत्र णिलोपो न स्याद् गुणश्च स्यादिति तद्वारणार्थं कित्करणस्यावश्यकत्वात्।

न च कुङ् शब्दे, गु पुरीषोत्सर्गे, ध्रु गतिस्थैर्ययोः, इत्येतेभ्यः सनि चुकूषते जगूषति दुधूषतीत्यादौ 'गाङ्कुटादिभ्य' इति सूत्रेण ङित्वे गुणाप्राप्त्या दीर्घस्य चारितार्थ्येन अपवादत्वाभावेन परत्वाद्दीर्घस्य, णयल्लोपाविति वचनेन गुणस्य, च णिलोपेन बाधाज्ज्ञीप्सतीत्यादिसिद्ध्या कित्करणमनर्थकमिति वाच्यम्,

अज्ग्रहणस्य तावन्मात्रप्रयोजनकत्वे नह्येकमुदाहरणमिति न्यायेन कुगुध्रुहनगमां सनीति उहनगमां सनीति वा वक्तव्ये प्रत्याहारग्रहणसामर्थ्येन दीर्घस्य णिलोपगुणबाधकतया ज्ञीप्सतीत्याद्यर्थं कित्करणस्यावश्यकत्वात्।

न च तन्त्रादिना अज्ग्रहणम् अजादेशगमेरित्यर्थलाभद्वारा 'गमेरिङादेशस्य' इति वार्तिकं प्रत्याख्यातुमपि कृतमिति न तत्सामर्थ्येन णिलोपादिबाधकत्वं दीर्घस्य कल्पयितुं शक्यमिति वाच्यम्, एवमपि 'उतः, सनि' 'इङ्हनोः' इति सूत्रयित्वा अज्ग्रहणसामर्थ्यस्योपपादयितुं शक्य-

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

त्वात् गमपदेन इणिकोरादेशस्यापि ग्रहणमिति पक्षे इहनोरित्युक्त्वा हन्साहचर्येण लुग्विकरणानाम् इणिङामेव इग्रहणेन ग्रहणं नत्विव- र्णान्तानामित्यस्य वक्तुं शक्यतया अजिति प्रत्याहाराश्रयणसामर्थ्येन निर- चकारेण दीर्घेण अपवादत्वात्पुरस्तादपवादा इति न्यायेन णिलोपबाधे परत्वाद् गुणः स्यादिति णिलोपसिद्ध्यर्थं गुणनिषेधार्थं च इको झलि- त्यस्यावश्यकत्वमित्याहुः ।

## न धातुलोप आर्धधातुके १३०

लोलूयतेः पचाद्यचि 'यङोऽचि च' इति यङो लुकि उवङि लोलुव इति सिध्यति तत्राज्निमित्तकगुणवारणाय 'न धातुलोप' इति सूत्रं सूत्र- यामास सूत्रकारः ।

अत्र च 'यस्य हल' इत्यत्र 'यस्य' इति योगं विभज्य अत इति चानु- वर्त्य लुग्बाधकालोपं विधाय अवशिष्टयकारस्य 'यङोऽचि च' इति लुकि अल्लोपस्य स्थानिवत्त्वेन गुणाप्राप्त्या 'न धातुलोप' इति सूत्रं प्रत्याख्या- तवान् भाष्यकार इति वस्तुस्थितिः ।

अत्रेदं विचार्यते—ननु लोलुव इत्यत्र उवङ उकारस्य स्थानिभूता- दचः पूर्वत्वेन दृष्टत्वाभावात्तस्य लघूपधगुणे कर्तव्ये स्थानिवत्त्वाप्राप्त्या गुणस्य दुर्वारतया कथं प्रत्याख्यानमिति चेन्न—

उवङ्स्थान्यूकारवृत्तेः स्थानिभूतादचः पूर्वत्वेन दृष्टत्वस्य स्थानि- वत्सूत्रेण उवङ्यतिदेशेन अचः परस्मिन्पूर्वविधौ इत्यस्य प्रवृत्तौ बाध- काभावेन गुणवारणसंभवे प्रत्याख्यानस्य सौष्ठवात् ।

नचाशास्त्रीयस्य स्थानिभूतादचः पूर्वत्वस्य स्थानिवत्सूत्रेण कथम- तिदेश इति वाच्यम्, न पदान्तसूत्रे सवर्णग्रहणेन अशास्त्रीयस्यापि स्थानिभूतादचः पूर्वत्वस्यातिदेशबोधनात्, अन्यथा शिण्ढीत्यत्रानुस्वा- रस्य अल्लोपस्थानिभूतादचः पूर्वत्वेन दृष्टत्वाभावात्स्थानिवत्त्वाप्रसक्त्या तन्निषेधार्थं क्रियमाणस्य सवर्णग्रहणस्य वैयर्थ्यं स्पष्टमेव । स्थानिवत्सू- त्रेणाशास्त्रीयधर्मातिदेशासंभवेऽपि तत्स्थानापन्नस्तद्धर्मं लभते इति लौ- कन्यायेनैव अशास्त्रीयधर्मातिदेशाच्च ।

ननु न पदान्तसूत्रे वरे ग्रहणेन सम्भावनिकाजादिप्रत्ययत्वास्याप्य- तिदेशः अचः परस्मिन्नित्यनेन क्रियते इति ज्ञाप्यते, अन्यथा यायावर

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

इत्यत्र पूर्वमलोपस्ततो यलोप इति क्रमसत्त्वात् अकारेण प्रत्ययत्वाद्यलाभात्कथं तदादेशे प्रत्ययत्वाद्यतिदेशः स्यादिति यायावर इत्यत्रालोपाप्राप्त्या तद्वारणाय क्रियमाणं वरे ग्रहणं व्यर्थं स्यात्। साम्भावनिकप्रत्ययत्वाद्यतिदेशस्वीकारे तु यद्यत्र पूर्वं यलोपः स्यात्तर्हि अकारे एकदेशविकृतन्यायेन प्रत्ययत्वादिलाभः स्यादिति संभावनया अकारे अजादिप्रत्ययत्वस्य सत्त्वेन तदतिदेशे 'आतोलोप इटि च' इति आकारलोपप्राप्त्यात्वद्वारणाय वरे ग्रहणं सार्थकम्। एवं च मरीमृज इत्यत्र 'क्ङित्यजादौ वेष्यते' इति वृद्धिप्राप्त्या तन्निषेधाय न धातुलोप सूत्रमावश्यकम्।

न च साम्भावनिकप्रत्ययत्वातिदेशस्वीकारे जङ्गम इत्यत्र गमहन इति उपधालोपापत्तिरिति वाच्यम्, अनङीति पर्युदासेनौपदेशिकाजादेरेव ग्रहणेनादोषात् इति चेन्न—

व्यवस्थितविभाषाश्रयणेन, क्ङित्यचीति वक्तव्ये आदिग्रहणेन, मुख्याजादिपरिग्रहणेन वा वृद्धिवारणसम्भवेन न धात्वित्यस्यानावश्यकत्वात्।

न च सांभावनिकप्रत्ययत्वातिदेशे देध इत्यत्र दीङो युडचीति युडापत्तिः राद्धान्ते यङो लुकः सत्त्वेन स्थानिवत्त्वाप्राप्त्या न दोष इति वाच्यम्, श्तिपा शपेति परिभाषया युटो वारणसंभवात्।

न चेयं परिभाषा भाष्यानुक्तत्वादनादर्तव्या इति वाच्यम्, यङ्लोपे वेभिदितेत्यादाविट्प्रवृत्त्यर्थमुपदेशेऽनुदात्तादेकाचः श्रूयमाणादङ्गादित्यर्थे 'सनीट् प्रतिषेधो वक्तव्यः' विभित्सतोति दोषोपन्यासवद्यङ्लुकि दोषानुपन्यासेन वेभिदितेत्यादि यङ्लुगन्तस्येष्टत्वावगमेन इड्निषेधाभावाय परिभाषाया आवश्यकत्वात्।

न चैवमपि 'सनीस्रंसः, दनीध्वंसः, यायाः, वावाः', इत्यत्र सांभावनिकप्रत्ययत्वातिदेशेन आद्ययोः 'अनिदितामिति' नलोपः, अन्त्ययोः 'अतोलोप इटि च' इत्यालोपः स्यादिति वाच्यम्,

ओरोदिति वक्तव्ये गुणग्रहणमूलिकया 'संज्ञापूर्वकोविधिरनित्य' इति परिभाषया, ज्यादादीयस इत्यत्र आद्ग्रहणमूलिकया 'ज्ञाजनोर्जा' इत्यत्र ज इति वक्तव्ये दीर्घजाविधानमूलिकया च अङ्गवृत्तपरिभाषया, वा नलोपादिवारणसंभवात्।

न च 'संज्ञापूर्वको विधिरनित्य' इत्यस्या 'अङ्गवृत्ते पुनर्वृत्तावविधिः,

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

इत्यस्याश्च नव्यैरनङ्गीकारेण उक्तदोषतादवस्थ्यमिति वाच्यम्, ण्वुल्परकयङन्तेषु दरीदृशक इत्यादिषु गुणव्यावृत्तये नव्यैरपि तयोः परिभाषयोरङ्गीकारस्यावश्यकत्वात् । एवं ह्रसयति, द्रवयति, स्रजयति, स्थवयति, युष्मभ्यम् इत्याद्यर्थमङ्गवृत्तपरिभाषाया आवश्यकत्वाच्च, अन्यथा 'अत उपधायाः' इति वृद्धेर्बहुवचने झल्येदित्येत्वस्य चापत्तेः ।

न च स्थवयतीत्यादौ वृद्धिवारणाय नाङ्गवृत्तपरिभाषाया आवश्यकत्वम् यणादिलोपस्य स्थानिवत्त्वेन, इष्ठवद्भावस्य अभावातिदेशपरत्वाभ्युपगमेन, वा वृद्ध्यभावसिद्धेरिति वाच्यम्,

स्थवयतीत्यादौ वृद्ध्यभावस्य अशास्त्रीयत्वेन तस्मिन् कर्तव्ये स्थानिवत्सूत्रेण यणादिलोपस्य स्थानिवत्त्वासंभवात्, स्थानिवत्सूत्रेण भावस्यैवातिदेशाच्च, स्रजयतीत्यादौ लुका लुप्तत्वेन स्थानिवत्त्वनिषेधाच्च, इष्ठवद्भावेनापि अशास्त्रीयाभावातिदेशपरत्वमादाय वृद्ध्यभावोपपादनस्यायुक्तत्वाच्च, कथं चिदभावातिदेशस्वीकारेऽपि प्रेष्ठ इत्यादाविव प्रापयतीत्यत्र 'अचो ञ्णिति' इति वृद्ध्यभावापत्तेश्च ।

आमलक्याः फलम् आमलकम् पञ्चेन्द्राण्यो देवता अस्य इति पञ्चेन्द्रः, पञ्चभिः कर्कन्धूभिः क्रीतः पञ्चकर्कन्धूः, पञ्चालावूः, पञ्चभिः श्वश्रूभिर्जितं पञ्चश्वशुरम् इत्यादौ 'द्विगोर्लुगनपत्ये' इति ठञो लुकि 'लुक्तद्धितलुकि' 'अप्राणिजातेः' 'श्वशुरस्योकाराकारलोपश्च' 'यूनस्तिः' इति प्राप्तस्त्रीप्रत्ययभूतोङादिलुकि अलावूकर्कन्धुविषये ऊङः स्थानिवद्भावाद्गोस्त्रियोरिति ह्रस्वस्य श्वश्रूशब्दे ऊङः स्थानिवत्त्वेन उकाराकारयोर्लोपस्य च वारणाय लुका लुप्ते न स्थानिवदित्यस्या अपि अवश्यमङ्गीकर्तव्यत्वात् । एवं च इष्ठवदित्यभावातिदेशाङ्गीकारे प्रापयतीत्यत्र वृद्ध्यनापत्तिः । अभावातिदेशे मानाभावः गौरवं च । भावमात्रातिदेशे प्रमाणं सूत्रप्रत्याख्यानपरभाष्यानुकूल्यम्, न धातुलोप इति सूत्रसत्त्वे सेद्यते इत्यत्र गुणनिषेधापत्तिः । बहुव्रीहिमङ्गीकृत्य धात्वंशलोपनिमित्तार्धधातुकनिमित्तकगुणस्यैव निषेध इति स्वीकारेण दोषवारणे तु हलादिः शेष इत्यस्याङ्गाधिकारीयत्वेनाङ्गाक्षिप्तप्रत्ययनिमित्तत्वाद्विभेदेत्यत्र णलो धात्वंशलोपनिमित्तत्वेन निषेधापत्त्या गुणानापत्तिरिति प्रत्याख्यानमेव श्रेयः ।

CC-0. Vasishtha Tripathi Collection. Digitized by eGangotri

ननु सूत्रसत्त्वे विसेदेत्यत्र नानुपपत्तिः षाष्ठद्वित्वस्य द्विरुच्चारणरूपत्वाभ्युपगमेऽपि पूर्वभागस्यानर्थकत्वात्क्रियावाचकत्वाभावेन धातुत्वाभावादुत्तरखण्डे एव धातुत्वसत्त्वादभ्याससंबन्धिनो हलो लोपेऽपि न धातुलोप इत्यस्याप्रवृत्तेरिति चेत्—

उच्यते, षाष्ठद्वित्वस्य द्विरुच्चारणरूपत्वे स्थाने द्विर्वचनरूपत्वे वा समुदाये एव धातुत्वस्याङ्गीकारात्।

किं च परभागे एव धातुत्वस्वीकारे सिषेच सिषेव सिषेध इत्याद्यावुत्तरखण्डस्य तिङन्तत्वात् सुप्तिङन्तमिति पदत्वे सात्पदाद्योरिति षत्वनिषेधापत्तिः। यदि पूर्वखण्डस्यैव तिङुद्देश्यत्वेन तद्विशिष्टे एव तिङन्ततदादित्वमिति नायं दोष इत्युच्यते तदापि उत्तरखण्डस्यैव धातुत्वे लिटि धातोरित्यत्र अनभ्यासग्रहणवैयर्थ्यापत्तिः।

किं च 'आगन्तूनामन्ते निवेश' इति न्यायेन द्वितीयोच्चारणस्यैव विधेयत्वात् प्रथमभागे एव धातुत्वस्वीकारे तु सिषेचेत्यादावनुपपत्तिलेशोऽपि नेति वैपरीत्यस्यापि वक्तुं शक्यत्वम्। अभ्यासस्यानर्थक्येऽपि क्रियावाचकत्वं भूतपूर्वगत्या इति बोध्यम्। एवं च विसेदेत्यत्र अतिव्याप्त्युपपादनं संगतमेवेति न धातुलोपसूत्रप्रत्याख्यानमेव सम्यगित्यलम्।

न च चिचीषति इत्यादौ 'नटभार्यान्यायेन' सन्सकारविशिष्टस्य द्वित्वे प्रकृतिप्रत्ययविभागसंमोहे प्रत्ययावयवस्य विधीयमानं षत्वं कथमिति वाच्यम्, अस्य दोषस्य त्वन्मतेऽपि सत्त्वात्, 'पूर्वत्रासिद्धीयमद्विर्वचने' इत्यदोषाच्च। किं च प्रकृतिप्रत्ययविशिष्टस्य द्विरुच्चारणेऽपि प्रकृत्यंशे प्रकृतित्वग्रहस्य प्रत्ययांशे प्रत्ययत्वग्रहस्य च शुक्लकृष्णरक्ततन्त्वारब्धपटे तद्‌द्बुद्धिवत्स्वीकारे बाधकाभावाच्च।

एतेन सकारविशिस्य द्वित्वे चिचीषतीत्यादौ सन्परत्वबुद्ध्यभावात् 'अज्झनगमांसनि' इति दीर्घो न स्यात्, तथा जुहूषतीत्यत्र 'ह्वः संप्रसारणम्' इति संप्रसारणं न स्यात् यियत्सतीत्यत्र 'सन्यत' इतीत्वं न स्यात् इत्यादि दूषणानि परास्तानि।

## णेरणौ यत्कर्म णौ चेत्स कर्ताऽनाध्याने १३१

अत्र वाक्यत्रयम्। तत्र 'णेरनाध्याने' इत्यादिमं प्रत्ययग्रहणपरिभाषया तदन्तविधिना ण्यन्तादात्मनेपदं स्यादनाध्याने इति तदर्थः।

CC-0. Vasishtha Tripathi Collection. Digitized by eGangotri

'अणौ यत्कर्म णौ चेत्' इति द्वितीयम् कर्मपदमिह क्रियापरं तेन अणौ ( णिच्यनुत्पन्ने ) या क्रिया सैव चेण्ण्यन्तेनोच्येतेति तदर्थः ।

न च णौ चेत्सा क्रिया इति यथाश्रुतसूत्रानुसारेण व्याख्यायताम् सैवचेत्क्रिया इति अवधारणपरतया व्याख्यानं निष्फलमिति वाच्यम्, अध्यारोपितप्रेषणाद्वितीयकक्षायां 'दर्शयति भवः' 'आरोहयति हस्ती' इत्यत्र अर्थाधिक्येऽपि तत्सत्ताया अक्षतया वाक्यवैयर्थ्यापत्तेः अस्य वाक्यस्य अध्यारोपितप्रेषणे द्वितीयकक्षायां चाक्षुषविषयत्वानुकूल-व्यापारानुकूलव्यापारस्य णिजन्तेन प्रतिपादनात् णिच्प्रकृत्यर्थसद्भावे-ऽपि क्रियाधिक्येन आत्मनेपदव्यावृत्त्यर्थतया साम्प्रतमेवकाराभावे क्रियाधिक्येऽपि तेन व्यावर्तनासम्भवेन तद्वाक्यं व्यर्थं स्यादिति निगूढोऽभिप्रायः ।

'स कर्ता' इति तृतीयम् तत्र अणौ यत्कर्म णौ चेदित्यनुवर्तते ततश्च शब्दाधिकाराश्रयणेन इहानुवर्तमानं कर्मपदं कर्मकारकपरम् न तु क्रिया-परं तथासति अण्यन्तक्रियाया ण्यन्ते कर्तृत्वे एव एतत्सूत्रप्रवृत्त्यवग-मेन क्रियायाः कर्तृत्वप्रतीतेः प्रकृतसूत्रोदाहरणेऽसम्भवेन एतत्सूत्रप्र-वृत्त्यनापत्तेः । एवं च णिच्प्रकृतेरर्थं प्रति यत्कर्मकारकं स चेण्ण्यन्ते कर्तेत्यर्थः । अत्र असति प्रतिबन्धके उद्देश्यतावच्छेदव्यापकत्वं विधेये भासते इति न्यायेन अण्यन्तावस्थास्थकर्मकारकत्वावच्छेदेन णौ कर्तृ-त्वलाभः । ब्राह्मणः पण्डित इत्यत्र ब्राह्मणत्वावच्छेदेन पण्डित्यप्रतीत्या असति प्रतिबन्धके इति । तेन 'देवदत्तो गां याचते यज्ञदत्तं' 'यज्ञदत्तो गां याचते' 'देवदत्तो गां याचयति यज्ञदत्तेन' 'यज्ञदत्तो गां याचयति' इत्यादौ नात्मनेपदम् । तथा च ण्यन्तादात्मनेपदं स्यादणौ या क्रिया सैव चेण्ण्यन्तेनोच्येत अणौ यत्कर्मकारकं स चेण्णौ कर्ता स्यान्नत्वा-ध्याने इति समुदितार्थः । अनेन सूत्रेण अण्यन्तक्रियातिरिक्तक्रियारहित-अण्यन्तकर्माभिन्नकर्तृक-अनाध्यानार्थक-ण्यन्ताव्यवहितोत्तरवृत्तित्व-त्वावच्छिन्नमुद्दिश्यात्मनेपदं विधीयते ।

ननु तृतीयवाक्ये 'अणौ यत्कर्म णौ चेत्स कर्ता' इत्येवं रूपे यत्पद-परामृष्टकर्मणो नपुंसकलिङ्गतया तस्यैव तच्छब्देन परामर्शे तत् इत्यु-चितमिति स इति पुंल्लिङ्गनिर्देशो व्युत्पन्नः इति चेन्न—

CC-0. Varanasi Mission Collection. Digitized by eGangotri

'शैत्यं हि यत्सा प्रकृतिर्जलस्य' 'तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा' इति लोकवेदयोः, 'किं यत्तत्सास्नालाङ्गूलककुदखुरविषाण्यर्थरूपं स शब्दः' इति भाष्ये च दर्शनेन उद्देश्यप्रतिनिर्देश्ययोरैक्यमापादयत्सर्वनामपर्यायेण तत्तल्लिङ्गभागिति नियमलाभात्तच्छब्दस्य विधेयकर्तृलिङ्गभाक्त्वेऽपि दोषाभावात् ।

ननु तृतीयवाक्ये णौ चेदितिव्यर्थम् अणौ यत्कर्म स चेदित्युक्तौ कुत्रेत्याकाङ्क्षायां प्रत्यासत्त्या यत्रात्मनेपदं तत्रेत्यर्थलाभेन सिद्धेः । एवं स इत्यपि व्यर्थम् यच्छब्देनैव तल्लाभादिति चेन्न । उभयोः स्पष्टार्थत्वात् ।

णिचश्चेति आत्मनेपदे सिद्धेऽपि अकर्त्रभिप्रायार्थम्' कर्त्रभिप्रायेऽपि 'विभाषोपपदेन प्रतीयमाने' इति विकल्पबाधनार्थं, अणावकर्मकादिति परस्मैपदबाधनार्थं चेदं सूत्रम्—

न चाकर्त्रभिप्राये चरितार्थस्य अस्य विकल्पपरस्मैपदाभ्यां परत्वाद् बाध एवोचित इति वाच्यम्, 'दर्शयते राजा' इति भाष्योदाहरणेन पूर्वविप्रतिषेधाश्रयणेनादोषात् । यद्यपि दर्शयते भृत्यान्राजा इत्येव भाष्योदाहरणं तथापि भृत्यानित्यविवक्षितम् इत्यावेदयिष्यते ।

कर्तृस्थभावकाः कर्तृस्थक्रियाश्चोदाहरणम् । अपरिस्पन्दनसाधनसाध्यो भावः । सपरिस्पन्दनसाधनसाध्या क्रिया । दर्शयते भव इति आद्यम् । आरोहयते हस्ती इति द्वितीयम् । तथा हि 'पश्यन्ति भवं भक्ताः' भवविषयकचाक्षुषज्ञानानुकूलो व्यापारो भक्तवृत्तिरित्यर्थः । यदा तु सौकर्यातिशयविवक्षया प्रेरणांशस्त्यज्यते तदा 'पश्यति भवः' भववृत्तिचाक्षुषज्ञानविषयीभवनमर्थः । तदुक्तं—

निवृत्तप्रेषणं कर्म स्वक्रियावयवैः स्थितम् ।
निवर्तमाने कर्मत्वे स्वे कर्तृत्वेऽवतिष्ठते ॥ इति

ततः पश्यन्तं भवं प्रेरयन्तीति 'दर्शयन्ति भवं भक्ता' इति प्रयोगः पश्यन्तीत्यर्थः । उक्तं च—

'निवृत्तप्रेषणाद्धातोः प्राकृतेर्थे णिजुच्यते'

इति । ततः पुनरर्थस्य सौकर्यद्योतनार्थमविवक्षायां 'दर्शयते भवः' अत्र आत्मनेपदं भवति । पश्यतिदर्शयत्योः समानार्थकत्वात् अण्यन्तकर्मणो भवस्येह कर्तृत्वाच्च ।

CC-0. Vasishtha Tripathi Collection. Digitized by eGangotri

एवमारोहयते हस्ती इत्यप्युदाहरणम् 'आरोहन्ति हस्तिनं हस्तिपकाः' न्यग्भावयन्तीत्यर्थः । अधोदेशस्थित्यनुकूलव्यापारानुकूलव्यापार इति यावत् । 'आरोहति हस्ती' न्यग्भवतीत्यर्थः । ततो णिचि 'आरोहयन्ति हस्तिनं हस्तिपकाः' न्यग्भावयन्तीत्यर्थः, ततो णयर्थस्याविवक्षायाम् 'आरोहयते हस्ती' न्यग्भवतीत्यर्थः, इहापि प्राग्वत्प्रथमतृतीययोर्द्वितीयचतुर्थ्योश्चार्थसाम्याच्चतुर्थी कक्ष्योदाहरणम् । तदुक्तम्—

न्यग्भावनं न्यग्भवनं रुहौ शुद्धे प्रतीयते ।
न्यग्भावनं न्यग्भवनं ण्यन्तेऽपि प्रतिपद्यते ॥

सोऽयं निवृत्तप्रेषणापक्षः ।

यद्वा 'पश्यन्ति भवं भक्ताः' 'आरोहन्ति हस्तिनं हस्तिपकाः' इति प्राग्वदेव प्रथमा कक्ष्या ततः सौकर्यद्योतनार्थं कर्मण एव प्रेषणामध्यारोप्य णिच् क्रियते । 'दर्शयति भवः' 'आरोहयति हस्ती' पश्यत आरोहतश्च प्रेरयतीत्यर्थः । ततो णिच्प्रकृतिभ्यां णिजभ्यां चोपात्तयोर्द्वयोरपि प्रेषणयोस्त्यागे 'दर्शयते भवः' 'आरोहयते हस्ती' इत्युदाहरणम् । विषयीभवति न्यग्भवतीति पूर्ववदेव वाक्यार्थः । सोऽयमध्यारोपितप्रेषणपक्षः ।

अध्यारोपितप्रेषणपक्षे द्वितीयकक्ष्यायामतिव्याप्तिं वारयितुम् अण्यन्तक्रियातिरिक्तक्रियारहितेत्यर्थकं द्वितीयं वाक्यम्, तेन प्रेषणाधिक्यान्नातिव्याप्तिः ।

नन्वेतत्समानार्थान्तर्भावितण्यर्थस्यापि वक्तुं शक्यतया तामादाय क्रियासाम्यमत्रापि—

न च तत्कक्ष्यास्थण्यन्तधातुप्रकृतित्वं तन्मूलत्वमिति सा न ण्यन्तस्य मूलभूतेति वाच्यम्, एवं सति निवृत्तप्रेषणचतुर्थकक्ष्यायां कर्मणः कर्तृत्वस्याद्यकक्ष्यामादायोपपादनमयुक्तं स्यात् । तुर्यकक्ष्यायां तत्प्रकृतिकण्यन्तत्वाभावात् ।

न च यदर्थकाद्यदर्थमूलकाद्वा प्रयोगात्कक्ष्यान्तरेऽर्थस्य त्यागो वृद्धिर्वा सा मूलभूतेति वाच्यम्, कक्ष्ययोर्मूलमूलिभावस्य सूत्रभाष्यद्वारानारूढत्वादिति चेन्न—

गमकं विना अन्तर्भावितण्यर्थस्यानङ्गीकारात् ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

निवृत्त्यंशप्रदे तृतीयकक्ष्यायामतिव्याप्तिं वारयितुम् अण्यन्तकर्माभिन्नकर्तृकेत्यर्थकं तृतीयं वाक्यम्, तेन च अण्यन्तकर्मणो णौ कर्तृत्वाभावान्नाव्याप्तिरिति दीक्षितमतम्।

अत्र प्राञ्चः अणौ यत्कर्मेति वाक्यं कर्मान्तरनिवृत्तिपरम्। तथा हि—यत्तदोर्नित्यसंबन्धादिह यच्छब्देन तच्छब्द आक्षिप्यते धर्मान्तरस्यानिर्देशेन उद्देश्यतया श्रुतमपि कर्मत्वं विधीयते तच्च ण्यन्तावस्थायां विधीयते न तु अण्यन्तावस्थायाम् अणौ यत्कर्मेत्यनुवादादेव तत्सिद्धेः। एवं च अणौ यत्कर्म णौ चेत्स कर्मेत्यर्थः फलितः अनेन च कर्मान्तरनिवृत्तिः क्रियते नत्वणौ कर्मणो णौ कर्मत्वं प्रतिपाद्यते स कर्तेत्युत्तरवाक्येन तस्य कर्तृत्वप्रतिपादनात् एकस्य युगपदेकक्रियायां कर्तृत्वकर्मत्वयोरसम्भवात्। तदुक्तम्—

उद्देश्यप्रतिनिर्देश्याल्लब्धे यत्संग्रहे पुनः।
तद्ग्रहो वाक्यभेदेन कर्मान्तरनिवृत्तये॥

इति ततो णौ चेदिति वाक्यान्तरम्। अणौ यदित्यनुवर्तते अणौ यत्प्रतिपाद्यं वस्तु तदेव णौ प्रतिपाद्यं चेदित्यर्थः। एवञ्च प्रकृतसूत्रे वाक्यचतुष्टयम्। णेरनाध्याने इत्येकं, अणौयत्कर्मेति द्वितीयम्, णौचेदिति तृतीयम्, स कर्तेति चतुर्थम्, इति अण्यन्तकर्मातिरिक्तकर्मरहिताण्यन्तकर्माभिन्नकर्तृकानाध्यानार्थकण्यन्तादात्मनेपदमित्यर्थ इति वदन्ति।

अत्र शब्दकौस्तुभकृतः अण्यन्तकर्मातिरिक्तकर्मरहितेत्यर्थकं द्वितीयं वाक्यं विफलम्।

न च 'आरोहयमाणो हस्ती आरोहयति स्थलं मनुष्यान्' इत्यत्रात्मनेपदवारणं तत्फलमिति वाच्यम्, 'णौ चेत्' इति वाक्यं हि प्रतिपाद्यसाम्यार्थमिति वृत्तिपदमञ्जर्योः स्थितं न चेह तदस्ति इत्यात्मनेपदाप्राप्त्या तत्फलत्वायोगात्।

न च वृत्त्यादिमते अस्य तत्फलत्वाभावेऽपि भाष्यकैयटयोः समानक्रियत्वस्यानुक्ततया कर्मान्तरव्यावृत्तिफलकं वाक्यं तन्मते सार्थकमेवेति वाच्यम्,

तस्यानुक्तत्वेऽप्यप्रत्याख्याततया अध्यारोपितप्रेषणापक्षे द्वितीयकक्ष्यायामतिप्रसङ्गभङ्गाय भाष्यमतेऽपि समानक्रियत्वस्य व्याख्येयत्वात्

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

भाष्यवार्तिकयोः कर्मशब्दस्य क्रियापरतयैव व्याख्यातुं शक्यत्वाच्च ।

अभ्युपेत्यापि ब्रूमः । मास्तु भाष्यमते समानक्रियत्वं तथापि 'दर्शयते भृत्यान् राजा' इत्युदाहरणे भृत्या राजानं पश्यन्तीति प्रथमकक्ष्यास्थकर्मातिरिक्तभृत्यरूपकर्मण एवेह सत्त्वादात्मनेपदासङ्गतिमाशङ्क्य कैयटेन 'अणौ ये कर्तृकर्मणी तद्भिन्नं कर्म व्यावर्त्यते' इति वदता मनुष्यानित्यस्य अणौ कर्तृतया गत्यर्थाद्धेतौ कर्मत्वेपि दुर्वारमेवात्मनेपदम् मनुष्यस्थलयोरणौ कर्तृकर्मणोरेवेह कर्मत्वेन तदितरकर्मणोऽभावात् ।

अपि च स कर्तेत्यंशस्यपीहाभावः हस्तिन एव कर्तृत्वात् । अणौ ये कर्तृकर्मणी इत्यर्थलाभश्च कर्तरिकर्मव्यतीहार इत्यतः कर्तरीत्यनुवृत्त्या इत्यग्र आवेदयिष्यते ।

न च आरोहयमाण इत्यत्र अणौ कर्मणो हस्तिन एव कर्तृत्वं स एव च स्थलमारोहयतीत्यत्रापि कर्तेति वाच्यम् ,

प्रत्यासत्त्या ण्यन्तादात्मनेपदं स्यात् अणौ यत्कर्म स चेत्कर्तेत्युक्ते "येन णिचा ण्यन्तादात्मनेपदं विधित्सितं तत्प्रकृतौ यत्कर्म स चेत्कर्ता' इत्यर्थोऽवगम्यते इह तु यत्रायमुपाधिः कृतमेव तत्रात्मनेपदम् 'आरोहयमाण' इति । यत्र तु न कृतं 'स्थलमरोहयति' इति न तत्रायमुपाधिरस्ति येनातिव्याप्तिः स्यात् ।

न च 'हस्तिपकानारोहयति हस्ती' इत्यत्रात्मनेपदवारणाय कर्मान्तरनिवृत्तिपरतया व्याख्यानमिति हरदत्तोक्तं युक्तमिति वाच्यम् , अस्योदाहरणस्याध्यारोपितप्रेषणपदीयद्वितीयकक्ष्यास्थत्वे णिज्वाच्यव्यापारभेदेन समानक्रियत्वाभावात् निवृत्तप्रेषणपदीयत्वे आद्ययोः कक्ष्ययोरण्यन्तत्वात् तृतीयस्यां हस्तिनः कर्तृत्वायोगात् हस्तिपकानां कर्मत्वायोगाच्च चतुर्थ्यां तु न्यग्भवतीत्यर्थपर्यवसानेन कर्मणोऽनन्वयः स्पष्ट एवेति ।

अत एव 'अरोहन्ति हस्तिनं मनुष्याः, आरोहयति हस्ती स्थलं मनुष्यानिति कर्मपदप्रयोगे नात्मनेपदम् । न चेष्टापत्तिः, 'यद्धि तु परं छन्दसि' इति सूत्रे भाष्यकृता उक्तस्थले परस्मैपदाङ्गीकारेण इष्टापत्त्या परिहारासंभवात् ।

न चैवं 'दर्शयते भृत्यान्राजा' इति भाष्ये स्वीकृतं तत्समर्थनाय 'अ-

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

णौ ये कर्तृकर्मणी तदितरकर्मव्यवच्छेदोऽभिप्रेत' इति कैयटस्तस्यायमाशयः 'अणौ यत्कर्म' इति वाक्ये 'कर्तरि कर्म' इत्यतः 'कर्तरि' इत्यनुवर्त्य प्रथमया विपरिणम्यते यश्च यच्च यदिति, 'नपुंसकमनपुंसकेन' इत्येकशेषः तेन कर्मकर्त्रोर्णौ कर्मत्वेऽप्यदोषः, एवं च 'करेणुरारोहयते निषादिनम्' इत्युपपद्यते। एवं च निवृत्तप्रेषणाध्यारोपणपत्तयोः द्वयोरपि चरमकक्षायामकर्मकतया भाष्यकैयटयोरसांगत्यम् एतावान्परं विशेषः भाष्यमते 'अणौ ये कर्तृकर्मणी इति व्याख्यानादुदाहरणं वृत्तिहरदत्तादिमते प्रत्युदाहरणमिति वाच्यम्,

कर्मणोऽनन्वयस्य दुरुद्धरतया 'बाधे दृढेऽन्यसाम्यात्किं दृढेऽन्यदपि बाध्यताम्' इति न्यायेन वृत्तिहरदत्तन्यासकारादिवत्तत्कैयटस्यापि दूषणीयत्वात्।

न च अध्यारोपितप्रेषणपक्षे द्वितीयकक्षायां कर्मण्यन्विते ततो णिजर्थस्येव कर्मणोऽपि त्यागे णिचः कर्मपदस्य च वैयर्थ्यमिति वाच्यम्, 'गम्भीरायां नद्यां घोषः' इत्यत्र गभीरनदीपदार्थयोरभेदान्वयबोधोत्तरं तीरलक्षणायामपि प्राथमिकबोधमादाय सार्थक्यवत् प्रकृते णिचः कर्मपदस्य च प्राथमिकबोधमादाय सार्थक्यस्य कथं चिदुपपादनीयत्वात्।

एवं च उक्तरीत्या कर्मान्तरनिवृत्तिपरतया व्याख्यानस्य प्रयोजनाभावेन दुष्टतया भाष्यवार्तिकयोरनभिमतत्वमेव ग्रन्थस्तु कर्मपदस्य क्रियापरतया सुस्थ एव उदाहरणेषु भृत्यानित्यादेरविवक्षायां कर्मव्यापारमात्रे विवक्षिते सिद्धं भवतीत्येवाशयः। अत एव स्मरयत्येनं वनगुल्मः स्वयमेवेति भाष्यवृत्त्योर्व्याख्यावसरे एनमिति कर्मणोऽविवक्षा कैयटहरदत्ताभ्यां शरणीकृता तस्मात्—

भृत्यादीनां परित्यागाच्छब्दभेदात्परिग्रहात्।
कर्मवाक्ये च तादर्थ्यवर्णनात्सर्वमुज्वलम्॥

'करेणुरारोहयते निषादिनम्' इति, 'स सन्ततं दर्शयते गतस्मयः कृताधिपत्यामिव साधुबन्धुताम्' इति, च णिचश्चेति आत्मपदेन सिद्धम् इति प्राहुः।

अत्र केचित्–प्राचीनानुयायिनः। यथा हि देवदत्तस्य गुरुपाहित्य-
CC0. Vasishtha Tripathi Collection. Digitized by eGangotri
दशायां यः पुत्रः स एव गुरुप्राप्तो इति वाक्येन गुरुप्राप्तिप्राक्कालिकदे-

वदत्तपुत्रातिरिक्तस्य देवदत्तसंबन्धिनः पुत्रस्यैव निषेधो गम्यते न गुरुपुत्रस्य, देवदत्तस्योपदेशानन्तरं गुरोः पुत्रजननसद्भावेऽपि तादृशव्यवहारात् तथा अण्यन्तावस्थायां यत्कर्म ण्यन्तावस्थायां तदेव कर्मेति वाक्येन अण्यन्तकर्मातिरिक्तस्य णिच्प्रकृतिसंबन्धिन एव कर्मणो निषेधः प्रतीयत इति आरोहयते हस्ती हस्तिपकान् इत्यत्र दर्शयते हरिर्भक्तान्' इत्यत्र च हस्तिपकानां भक्तानां च णिच्प्रकृत्यर्थं निरूपितं न कर्मत्वं किन्तु ण्यर्थनिरूपितमिति अण्यन्तकर्मातिरिक्तकर्मरहितप्रकृतिकत्वस्य तत्र णिचि सत्त्वेन उक्तोदाहरणस्यानुपपत्त्यभावः ‘हस्ती स्थलमारोहयति मनुष्यान्' इत्यत्र च अण्यन्तावस्थाकर्महस्त्यतिरिक्तस्य प्रकृत्यर्थकर्मणः स्थलस्य सत्त्वादुक्तविशेषणेन निरासः। अत एव ‘दर्शयते भृत्यान्राजा' इति भाष्यप्रयोगोऽप्याञ्जस्येनोपपद्यते । एवं च सकर्मकाणामप्येतद्विषयत्वे विवादाभावात् ‘करेणुरारोहयते निषादिनम्' इत्यप्यस्यैवोदाहरणम् ।

न च ‘आरोहन्ति हस्तिनं मनुष्या' इति अण्यन्तावस्थायामनन्वितस्य स्थलस्य कथं ण्यन्तावस्थायामन्वयः कर्मसंज्ञा विधायकसूत्राणामप्रवृत्तेः–

तथा हि–प्रयोज्यस्य कर्तुरीप्सिततमत्वेन तदुपपादने स्थलस्याण्यन्तकर्तृतापत्त्या अण्यन्तकर्तृकर्मातिरिक्तकर्मणो ण्यन्तेऽभावेनात्मनेपदप्रसक्तेर्दुरुद्धरत्वात् । तादृशेप्सिततमस्य हस्तिनः पूर्वं विवक्षिततया अनन्तरितन्यग्भवनाश्रये तद्विवक्षानुपपत्तेश्च अन्तरितानन्तरितयोरधिकरणयोः ‘प्रासादे खट्वायां शेते' इत्यादिरीत्या युगपद्विवक्षया साधुत्वेऽपि ‘जलं कुम्भं वहति' इत्यापत्तिवारणाय अन्तरितानन्तरितकर्मणोर्विवक्षायाः कर्तुमशक्यत्वात् ण्यर्थनिरूपितकर्मत्वस्य स्थले स्वीकारे तु प्रकृते अण्यन्तकर्त्रतिरिक्तकर्मराहित्यस्य सत्त्वेन अतिप्रसङ्गापरिहारापत्तेः।

नापि तथा युक्तमित्यनेन न्यग्भवनरूपक्रियाफलाश्रयत्वेन हस्तिनो विवक्षिततया स्थलस्यानन्तरितस्य तथाविवक्षाया पूर्ववदसंभावत् ।

नापि अकथितंचेत्यनेन सा, दुहादिपरिगणनादिति वाच्यम्,

प्रयोजकतर्मादाय स्थलस्य कर्मसंज्ञाया कर्तुरीप्सिततममित्यनेन

CC-0. Prof. Satya Vrat Shastri Collection. Digitized by eGangotri

विधातुं शक्यत्वात् सा च यद्यपि 'जलं कुम्भं वहति 'हस्तिनं स्थलमरोहती' तिप्रयोगापत्त्याऽन्तरितानन्तरितयोः यौगपद्येनासाधुः तथापि अन्यतरस्य कारकान्तरत्वेन विवक्षिते 'कुम्भेन जलं वहति 'हस्तिना स्थलमारोहतीति' साधुरेव अत एव अण्यन्तावस्थायां स्थलस्य कर्मतया न प्रयोगः। एवं च अण्यन्तावस्थायां हस्तिनः कर्मत्वेन स्थलस्य कर्मत्वाविवक्षायाः कर्तुमशक्यत्वेपि ण्यन्ते हस्तिनः प्रयोजकत्वेन कर्तृतया स्थलस्य कर्मत्वेनान्वये बाधकाभावादिति। एवञ्च कर्मान्तरनिवर्तकवाक्यफलं भाष्योक्तम् 'आरोहयमाणोहस्ती स्थलमारोहयति मनुष्यान्' इति। तत्रहि स्थलमधिकं कर्म स्थलं हि हस्तिपृष्ठास्तरणम् तस्य मूलभूताण्यन्तावस्था मनुष्याहस्तिनमारोहन्तीत्येव। आरोहन्ति हस्तिनं हस्तिपका इत्येषात्वारोहयमाण इत्यस्यैव मूलभूता। आरोहयमाण इति सूत्रोदाहरणप्रदर्शनं दृष्टान्तार्थम्। यथा तत्रात्मनेपदं तथात्रापि स्यादिति तदाशयः। किंचास्योदाहरणस्य न मनुष्याः स्थलमारोहन्तीति मूलकक्षा नापि तत्स्थलमारोहतीतिस्थलङ्कर्तृ आरोहयमाणो हस्तीति शानजन्तप्रयोगेण मनुष्यकर्मकारोहणे स्वरसत एव हस्तिन एव कर्तृत्वप्रतीतेरिति कर्मपदस्य वाक्यद्वयेऽपि कर्मकारकपरत्वमेवयुक्तमिति वदन्ति।

युक्तं चैतद्भाष्यानुरोधेन प्रतीयते। तथाहि—

ननु अण्यन्तकर्मकर्तृकण्यन्तोत्तरवृत्तिलस्यात्मनेपदं स्यादनाध्यान इति स्वरसतः सूत्रार्थः प्रतीयते। एवं च आरोहन्ति हस्तिनं हस्तिपकाः आरोहयमाणो हस्ती स्थलमारोहयति मनुष्यानित्यत्रात्मनेपदप्रसङ्गः अत्र आरोहयमाणो हस्ती स्थलमारोहयति मनुष्यानित्यत्र अण्यन्तकर्महस्तिनः णौ कर्तृत्वसत्त्वात् अतः-'णोरात्मनेपदविधानेऽण्यन्तस्य कर्मणस्तत्रोपलब्धिः' इति वार्तिकं, वार्तिककृता कृतं तच्च णेरात्मनेपदविधानेऽण्यन्तस्य यत्कर्म यद्यण्यन्ते तदेव कर्म भवति तदा आत्मनेपदं भवतीति वक्तव्यमित्यर्थकतया भाष्यकृता व्याख्यातम्। एवं च अण्यन्तकर्मातिरिक्तकर्मणः स्थलस्य ण्यन्ते सत्त्वेन नात्मनेपदम् तच्च वार्तिकं तर्हि वक्तव्यं न वक्तव्यम्। एवं वक्ष्यामि 'णेः' आत्मनेपदं भवति। ततः 'अणौ' यत्कर्म णौ, चेत् स्यात् ... यत्कर्म णौ चेत् (णौ

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

यदि ) तदेव कर्म भवति । ततः 'स कर्त्ता' कर्ता चेत्स भवति णाविति' इति भाष्ये प्रत्याख्यातम् ।

अत्र वार्तिकेऽप्रयुक्तमेवकारं प्रयुञ्जानस्य भाष्यकृतोऽयमाशयः यदनेन वार्तिकेन न अण्यन्तकर्मणोण्यन्ते कर्मत्वं प्रतिपादनीयम् अण्यन्तकर्मणोण्यन्तेकर्तृत्वप्रतिपादनात् नह्यस्ति सम्भवो यदेकक्रियानिरूपिते एकस्य ,कर्तृत्वकर्मत्वे स्यातामिति 'आकडारादेकासंज्ञा' इति शास्त्रबलेन तयाविरोधप्रतिपादनात् किन्तु अण्यन्तकर्मातिरिक्तकर्मनिवृत्तिरेव प्रतिपादनीया इति वार्तिके एवकारं विना तन्न सम्भवतीति भाष्यकृता एव शब्दमध्याहृत्य व्याख्यातम् ।

प्रत्याख्यानस्य त्वयमाशयः यद्येकवाक्यतया अन्वयः सूत्रकृतः संमतो भवेत्तर्हि णेरणौ यत्कर्म णौ चेत्कर्ता इत्येव ब्रूयात् इति यत्सग्रहणेन सूत्रकृतो वाक्यभेदे एव सम्मतिसूचनेन वाक्यभेदमङ्गीकृत्य वार्तिकं प्रत्याख्येयमिति ।

कर्मपदस्य क्रियापरत्वेन व्याख्याने कौस्तुभकृन्मते दर्शयते भृत्यान्राजेति णेरणाविति सिद्धान्तोदाहरणविरोधः तत्र अण्यन्तक्रियापेक्षया णिचि सति प्रेरणांशस्याधिक्यात् ।

न चाध्यारोपितप्रेषणपक्षीयतृतीयकक्ष्यारूपमङ्गीकृत्य तत्र प्रेषणांशाभावेन समानक्रियत्वोपपत्तिरिति वाच्यम् , तस्यां भृत्यानित्यस्यानन्वये तत्पक्षीय द्वितीयकक्ष्यारूपस्यैवाङ्गीकारात् ।

न च तृतीयकक्ष्यायां णिजर्थप्रेषणत्यागेऽपि णिच्प्रयोगवत् द्वितीयकक्ष्यायमन्वितस्य भृत्यस्य प्रेषणांशत्यागेऽपि अन्वयसंभव इति वाच्यम् , मदुक्तरीत्यैवान्वयसम्भवेन क्लिष्टकल्पनाया अनौचित्यात् किं च हृक्रोरन्यतरस्यामित्यत्र 'अभिवादिदृशोरात्मनेपदेवेति वाच्यम्' इति वार्तिकेन दर्शयते भृत्यान् राजेत्यत्र अण्यन्तकर्तृभृत्यानां वैकल्पिकी णेरणाविति आत्मनेपदसंज्ञानिमित्तिका कर्मसंज्ञा न स्यात् , द्वितीयकक्ष्यायां विद्यमानं कर्म तृतीयकक्ष्यायां प्रयुज्यते इत्युपपादनस्य तत्रासंभवात् । तदुक्तं भाष्ये–'हृकोर्वा वचने अभिवादिदृशोरुपसंख्यानम्' अभिवदति गुरुं देवदत्तः अभिवादयते गुरुर्देवदत्तेन देवदत्तं वा, पश्यन्ति भृत्या राजानं मर्शयते राजा भृत्यैर्भृत्यान् वा, कथं चात्रात्मनेपदमेकत्र णेर-

CC-0. Vasishtha Tripathi Collection. Digitized by eGangotri

णाविति अपरत्र णिचश्चेति'। किं च कर्मपदस्यात्र क्रियापरत्वे 'अणौ यत्कर्म णौ चेत् तदेव कर्म भवति. ततः 'स कर्ता' कर्ता चेत्सणाविति भाष्ये तत्पदेन अणयन्तक्रियापरामर्शापत्त्या तस्य कर्तृत्वविध्यापत्तिः। किं च कर्ता चेत्स णाविति भाष्येण प्रतीताया णावित्येतन्मात्रानुवृत्ते-र्विरोधश्च त्वन्मते संपूर्णस्य पूर्ववाक्यस्य परामर्शात् आरोहयमाणो हस्ती स्थलमारोहयति मनुष्यानित्यत्र आरोहन्ति स्थलं मनुष्या इति अण्यन्तकदर्थेतिस्वीकारेण अणयन्तकर्मकर्तृकत्वस्यैवाभावेन सूत्रातिप्र-सङ्गाभावेन तद्वारणाय समानक्रियत्वमिति व्याख्याने फलाभावात्।

एवं च कर्मपदस्य क्रियापरत्वे अष्टौ दोषाः। तथाहि—

आरोहयमाणो हस्ती स्थलमारोहयति मनुष्यानित्यत्र आरोहयन्ति स्थलं मनुष्या इति अण्यन्तावस्थेतिभ्रमेण अणयन्तकर्मकर्तृकत्वाभावो-ऽत्रेति कथनं प्रथमः आरोहन्ति हस्तिनं मनुष्या इत्यणयन्तावस्थाया एव सिद्धान्तभूतत्वात्।

तथा अणौ यत्कर्म णौ चेदिति वाक्ये कर्मपदस्य क्रियापरत्वेन व्या-ख्यानं द्वितीयः।

तथा स कर्तेति वाक्ये भाष्यालभ्यस्य संपूर्णपूर्ववाक्यन्वयस्य स्वी-कारस्तृतीयः, भाष्ये णावित्यनुवृत्तेरेवोक्ततया तस्य गौरवदूषितत्वात्।

अणावकर्मकादिति विभाषोपपदेनेति च प्राप्ते परत्वात्पूर्वविप्रतिषे-धेनेदमेवेष्यते इति पूर्वं विप्रतिषेधाश्रयणं चतुर्थः, तस्य भाष्यानुक्तत्वात्।

न च दर्शयते भृत्यान्राजेति भाष्योदाहरणेन पूर्वविप्रतिषेधोऽनु-मीयते इति वाच्यम्, भाष्योदाहरणस्य मदुक्तरीत्या अध्यारोपितप्रेष-णपत्तद्वितीयकत्त्यात्वेन अणावकर्मकत्वाभावेन पूर्वविप्रतिषेधाश्रयणस्या-नुपयुक्तत्वात्। एवं च निवृत्तप्रेषणपत्ते दर्शयते भवः आरोयते हस्ती-तिचतुर्थकदर्थोदाहरणमित्यप्यपास्तम्, तत्र अणावकर्मकादिति परस्मैप-दावश्यंभावात्।

न च कर्त्रभिप्रायत्वाविवक्षायाम् अणावकर्मकादिति न प्रवर्त्तते इति वाच्यम्, तत्र कर्त्रभिप्राय इत्यस्यानुवृत्त्या तादृशविशेषाश्रयणे प्रमा-णाभावात्।

एवं दर्शयति भवः आरोहयति हस्तीति' अध्यारोपितप्रेषणपत्तद्वि-

CC-0. Vasishtha Tripathi Collection. Digitized by eGangotri

तीयकद्यायां भाष्यरीत्या आत्मनेपदस्यौचित्येऽपि परस्मैपदप्रयोगः पञ्चमः दर्शयते भृत्यान्राजेत्यत्रैव आत्मनेपदस्यावश्यं प्राप्तत्वात् । न च यथाश्रुतभाष्यरीत्या अण्यन्तकर्मातिरिक्तकर्मरहिते एव णेरणावित्येत्प्रवृत्तेरुक्ततया कथमत्र तत्प्राप्तिरिति वाच्यम्, अण्यन्तकर्मातिरिक्तकर्मरहितप्रकृतिकताया एव सिद्धान्तितयाऽदोषात् अरयन्तकर्तृभृत्यानां रयन्तं प्रत्येव कर्मतया प्रकृतेस्तद्रहितत्वात् ।

एवं दर्शयते राजा भृत्यानित्यत्र भृत्यानित्यस्याविवक्षाकथनं षष्ठः सकर्मकाणामप्येतत्सूत्रविषयत्वात् ।

आरोहयमाणो हस्ती स्थलमारोहयति मनुष्यानित्यत्र मनुष्यरूपकर्मणा अतिप्रसङ्गो भाष्याभिमत इत्यभिमत्य कैयटदूषणं सप्तमः स्थलमादाय व्यावृत्तेः सर्वाभिमतत्वात् ।

सिद्धान्तविदां कैयटादीनां यथार्थोक्तिषु प्रमादोक्तित्वकथनमष्टम इति कर्मपदस्य क्रियापरतया व्याख्यानं नोचितम् ।

किञ्च कर्तरि कर्मव्यतीहारे' इत्यत्र 'क्रियाग्रहणं कर्तव्यमिति' वदत इह चावदतो वार्तिककारस्य क्रियापरत्वंनाभिप्रेतम् 'णेरात्मनेपदविधानेऽन्यकर्मणस्तत्रोपलब्धिः' इति वाक्ये कर्मपदस्य क्रियापरत्वासंभवेन तद्वार्तिकार्थवर्णनभाष्येऽपि कर्मपदानां क्रियापरत्वासंभवात् । अत एव तद्व्याख्यानभाष्येऽपि कर्मशब्दप्रयोग एव कृतो न क्रियाशब्दप्रयोग इति।

यदि 'प्रकारे गुणवचनस्य इति सूत्रे 'कर्मव्यतीहारे सर्वनाम्नः समासवच्च बहुलम्' इत्यत्र कर्मपदस्य क्रियायां प्रयोगस्य, गतिबुद्धिसूत्रे कर्मपदस्य क्रियापरत्वमभिप्रेत्य ह्वाययतिकन्दयतिशब्दायतीनां प्रतिषेधस्य वार्तिककृता कृतत्वेन कर्मपदस्य क्रियापरत्वे नातिविरहः । किं च कर्मणा यमभिप्रैतीत्यत्र कर्मपदस्य कर्मकर्त्रुभयपरतायाः सिद्धान्तितत्वेन 'कर्तरि कर्मव्यतीहारे' इत्यत्रापि कर्मपदस्य उभयपरत्वे 'अन्योन्यं लुनीतः' इत्यत्रातिप्रसङ्गापत्तिरतः 'क्रियाग्रहणं कर्तव्यमिति' वार्तिककारस्यावश्यकत्वादित्युच्यते तदा प्रकृते कर्मपदस्य क्रियापरत्वे पूर्वोक्तान्येवदूषणानीत्यलम् ।

## सूत्रप्रयोजनविचारः १३२

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

नन्वेवं अरयन्तकर्तृकर्मातिरिक्तकर्मरहिताएयन्तकर्मकर्तृकानाध्याना-

र्थकस्यन्तादात्मनेपदमित्यथ एतत्सूत्रोदाहरणानां 'लावयते केदार' इत्यादीनां 'कर्मवत्कर्मणातुल्यक्रिय' इत्यनेन कर्मवद्भावेन सिद्ध्या इदं सूत्रं व्यर्थम्। तथा हि—द्वैधीभवनानुकूलव्यापारार्थकलुनातेः 'लुनाति केदारं देवदत्तः' प्रथमा कक्ष्या ततः 'केदारो लुयते' द्वैधीभवतीत्यर्थः। द्वितीया कक्ष्या ततः 'लावयति केदारं देवदत्तः' तृतीया कक्ष्या ततः 'लावयते केदारः' चतुर्थी कक्ष्या तत्र यथा प्रथमकक्ष्यामादाय तुल्यक्रियत्वेन द्वितीयायां तथा तृतीयामादाय तुल्यक्रियत्वेन चतुर्थ्यां तद्सिद्धिरिति।

न च अध्यारोपितप्रेषणपक्षे आरोहयतो हस्तिनः कर्मत्वाभावात् कर्मवद्भावो न प्राप्नोतीति वाच्यम्, निवृत्तप्रेषणपक्षमादायैव सिद्धेः। अत एव 'द्वितीया तु प्रक्रिया सत्येतस्मिन्सूत्रे संभवतीति दर्शिता न तु तस्यां कर्मवद्भावः लावयतो केदारस्य कर्मत्वाभावादिति' कैयटः।

न च दृशेः कर्तृस्थभावकतया रुहेश्च कर्तृस्थक्रियतया न कर्मवद्भावप्राप्तिरिति वाच्यम्, पच्यादिभ्यो वैलक्षण्यस्य दुरूपपादत्वात् अन्यथा विक्लेदनद्विधाभावनयोः कर्तृस्थतया तत्रापि कर्मवद्भावो न स्यात्।

न च तत्र व्यापारयोः कर्तृस्थत्वेऽपि फले कर्मस्थे एवेति वाच्यम्, तर्हि प्रकृतेऽपि फलस्य कर्मस्थत्वानपायात्

न च 'एतादृशण्यन्तादात्मनेपदमेव, न यक्चिणौ' इति नियमार्थमेतदिति वाच्यम्, यक्चिणोः प्रतिषेधे हेतुमण्णिश्रिब्रूञामुपसंख्यानमिति वार्तिकेनैव ण्यन्ते यक्चिणोर्निषेधसिद्ध्या नियमानुपयोगात्।

ननु यक्चिणोर्निषेधाय हेतुमण्णिजभिन्नण्यन्ते उदपुपुच्छत पुच्छं स्वयमेवेत्यादौ नियमार्थमस्तु—

न च पुच्छशब्दस्य द्रव्यवचनतया क्रियावचनत्वाभावेन अण्यन्तकर्मकर्तृत्वासंभवेन एतत्सूत्राप्रवृत्तिरिति वाच्यम्, अस्मिन्विषये पुच्छशब्दः पुच्छकर्मिकायामुदसनक्रियायां वर्तते तस्मात्स्वार्थे णिङ् ततो यदा भ्राम्यमाणं पुच्छं संस्कारवशाच्चक्रमिव भ्रमणक्रियायां भूतायां स्वातन्त्र्येण विवक्ष्यते तदा उदपुपुच्छतेत्यात्मनेपदमेव यथा स्यादेतदर्थं सूत्रं संपद्यते इति कैयटेनैव समाहितत्वात्।

यत्तु णिङन्तादाणचीदमुदाहरणमित्याहुस्तन्न यस्तर्हि न हेतुमण्णिज् उदपुपुच्छत पुच्छं स्वयमेवेति भाष्यासंगतेः।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

यदपि णिङन्ताण्णिचीदमुदाहरणमित्यत्र णिच्पदेन बहुलमेतन्निदर्शनमिति स्वार्थणिच् गृह्यते इति न भाष्यासंगतिरिति । तदपि न । एवमपि णिङन्तस्याण्यन्ततया अण्यन्तकर्मकर्तृत्वस्य दुरुपपादत्वात् इति चेन्न—

तत्रापि भारद्वाजीयाः पठन्ति यक्चिणोः प्रतिषेधे णिश्रन्थिग्रन्थिब्रूञात्मनेपदाकर्मकाणामुपसंख्यानमित्यनेन सिद्धेः ।

न च नियमेनैव सिद्ध्या वार्तिके णिग्रहणं मास्तु इति वाच्यम्, गणयति गणं गोपालकः गणयति गणः स्वयमेवेत्यत्र णिच्सामान्यशून्यप्रयोगाभावात् अण्यकर्मकर्तृकत्वाभावेन सूत्राप्रवृत्त्या यक्चिणोर्निषेधाय वार्तिके णिग्रहणावश्यकत्वेन सूत्रस्य वैयर्थ्यात् ।

न च वार्तिकेन यक्चिणोर्निषेधेऽपि गणयति गणः स्वयमेवेत्यत्रात्मनेपदवारणार्थमेव नियमोऽस्तु इति वाच्यम्, इष्यते एवात्मनेपदमिति भाष्येण गणयते गणः स्वयमेवेति रूपस्यैव साधुत्वेनादोषात् ।

नच णेरणाविति नियमसूत्रादप्राप्तौ निर्णीतायाम् इष्यत इवेति भाष्योक्तिः कथं नासङ्गतेति वाच्यम्, नित्यत्वाण्णिचः केवलानां चुरादीनां प्रयोगाभावादणौ कर्मणोऽसंभवाण्णेरिति हेतुमण्णिचो ग्रहणमिति प्रत्यासत्त्या अणाविति प्रतिषेधोऽपि तस्यैव न्याय्यः इत्यहेतुमण्णौ गणस्य कर्मत्वं हेतुमण्णौ गणस्य कर्तृत्वमिति णेरणावित्यस्य प्रवृत्त्याऽऽत्मनेपदस्य सिद्ध्या इष्यते इत्युक्तेः सौष्ठवात्

न चैवमप्याध्यानार्थकात् कर्मवद्भावेन आत्मनेपदं माभूदित्येवमर्थं सूत्रमस्तु इह माभूत स्मरति वनगुल्मं कोकिलः स्मरति वनगुल्मः स्वयमेवेति वाच्यम्, एतदपि नास्ति प्रयोजनम् कर्मापदिष्टा विधयः कर्मस्थभावकानां कर्मस्थक्रियकाणां च भवन्ति कर्तृस्थभावकश्चायमिति भाष्येणैव समाधानादिति चेन्न—

एवं तर्हि सिद्धे सति यदाध्यान इति प्रतिषेधं शास्ति तज्ज्ञापयत्याचार्यः भवत्येवंजातीयकानामात्मनेपदमिति किमेतस्य ज्ञापने प्रयोजनम्, पश्यन्ति भृत्या राजानं दर्शयते भृत्यान् राजेति आत्मनेपदं सिद्धं भवति।

विशेषदर्शनं यत्र क्रिया तत्र व्यवस्थिता ।
क्रियाव्यवस्था त्वन्येषां शब्दैरेव प्रकल्पिता ॥

CC-0. Vasishtha Tripathi Collection. Digitized by eGangotri

इति हरिणैव समाहितत्वात्। तथा हि—पक्वेषु तण्डुलेषु छिन्नेषु वा काष्ठेषु कर्मणि क्रियाकृतविशेषोपलम्भेन कर्मस्थक्रियतया कर्मवद्भावो, न दृश्यादौ कर्मणि क्रियाकृतविशेषानुलम्भात् क्रियायां कर्मस्थत्वं च कर्मनिष्ठोपलभ्यमानविशेषधर्मजनकत्वं न तु कर्मनिष्ठत्वमिति। अत एव 'अधिगच्छति शास्त्रार्थः स्मरति श्रद्धाति च' इत्यादौ न कर्मवद्भावः। एवं चारुह्यते हस्ती इत्यत्रात्मनेपदं प्रयुञ्जानः कैयटोऽपास्तः।

न चैवं कृञो यत्नार्थकतया कर्मस्थक्रियत्वाभावेन क्रियते घटः स्वयमेवेत्यादावात्मनेपदाद्यनुपपत्तिरिति वाच्यम्,

कृञो यत्नार्थकत्वमिति वादिनां तार्किकाणामेतद्दोषसत्त्वेऽपि उत्पत्त्यनुकूलव्यापारार्थकत्वं कृञ इत्यभ्युपगच्छतामस्माकं कर्मस्थक्रियतया दोषाभावात्। एवं च दृश्यादियोगे कर्मवद्भावाप्राप्त्या इदं सूत्रं विध्यर्थमिति स्थितम्।

ननु सूत्रसत्त्वे हन्त्यात्मानं घातयत्यात्मा इत्यत्रात्मनेपदं कुतो नेति चेन्न।

पुरुषस्य अन्तरात्मनः कर्तृतया शरीरात्मनः कर्मतया अण्यन्तकर्मणः कर्तृत्वाभावेनात्मनेपदाप्रसक्तेः एकस्यैव कक्ष्यान्तरे कर्मत्वं कक्ष्यान्तरे कर्तृत्वं चानभिधानान्नेत्याशयात् हननं चेह सुखदुःखानुभव एवेति बोध्यमितिदिक्।

## अचो यत् १२२

ननु हलन्तेभ्यः 'ऋहलोर्ण्यत्' इति ण्यता बाधात् परिशेषादजन्तेभ्य एव यद्भविष्यति इति अज्ग्रहणं व्यर्थम्।

न च अज्ग्रहणं भूतपूर्वाजन्तप्रतिपत्त्यर्थम् तेन 'अतो लोप' इत्यनेन आर्धधातुकसामान्ये बुद्धिस्थे अतो लोपेऽपि भूतपूर्वाजन्तत्वमादाय दित्स्यमित्यादौ यदेव न ण्यत्तथा सति यतोऽनाव इत्यस्याप्रवृत्त्या तित्स्वरितमिति स्वरितापत्तिरिति वाच्यम्, तस्मिन्नितिपरिभाषाबलेन औपश्लेषिकाधिकरणसप्तम्यन्तस्यैव आर्धधातुके इत्यस्य स्वीकारेण आर्धधातुके परत एवाल्लोपविधानाद्दित्स्यमित्यादौ अजन्तत्वाद्यति ततोऽल्लोपेन दोषाभावात् अत एव अल्लोपस्य परनिमित्तकत्वेन स्थानिवत्त्वाद् न गणयतीत्यत्र वृद्धिरिति चेत्—

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

अदृष्टार्थमज्ग्रहणस्य सत्त्वादित्यलम् नन्वेवं दित्स्यमित्यादौ अजन्त-सन्निपातेन जायमानयतोऽल्लोपनिमित्तत्वं न स्यादिति चेन्न सन्निपात-परिभाषाया अनित्यत्वेन अल्लोपसम्भवात् ।

वस्तुतस्तु पूर्वोक्तरीत्या भाष्यकृताऽज्ग्रहणवैयर्थ्यमुपपाद्य 'इदन्तर्हि प्रयोजनमजन्तभूतपूर्वादपि यथास्याद्' इत्युक्तं तेन प्रकृताज्ग्रहणमेवार्ध-धातुकपदस्य विषयसप्तम्यन्तत्वे प्रमाणं मूलं तु आर्धधातुकपदस्य पर-सप्तम्यन्तत्वाभिप्रायेण,

यत्तु दरिद्राधातोरार्धधातुकविषये आकारलोपे भूतपूर्वाजन्तत्वेन यत्सिद्धिरज्ग्रहणफलमिति तन्न दरिद्र्य इत्यस्य ण्यन्तत्वेन ण्यद्यतोर्विशे-षाभावादिति दिक् ।

वृत्रघ्नो वृत्रघ्ण इति रूपद्वयं माधवेनोक्तम् १३४

इदमत्रावधेयम् । लक्षणैकचक्षुष्कैर्लक्षणानुरोधेन यल्लक्ष्यं प्रमातुं शक्यं तदेवेष्टमन्यदनिष्टमित्यवधारयितव्यमिति यावता सूत्रवार्तिकभा-ष्याणामैकमत्यं संभवति तावता ऐकमत्यं संपादनीयं न तु परस्परविरोधे परस्पराज्ञानकल्पमिति वृत्रघ्न इति प्रयोगे सूत्रकृन्मते वैकल्पिकमेव णत्वं भविष्यति न नित्यं नवा निषेधः—

तथा हि—समानपदत्वाभावाद्रषाभ्यामित्यस्य, वृत्रहन्शब्दस्य यौगि-कत्वेन संज्ञात्वाभावात्पूर्वपदादित्यस्य, अनल्विधाविति स्थानिवत्त्वनिषे-धेन एकाजुत्तरपदत्वाभावात् एकाजुत्तरपदेणः इत्यस्य, च न प्राप्तिः ।

न च समासचतुष्टयेऽप्यनल्विधावित्यस्य न प्राप्तिरिति वाच्यम्, अलः परस्य विधाविति पञ्चमीसमासेन प्राप्तिसत्त्वात् ।

न च शब्दतः पञ्चम्यन्तस्येहोपादानाभावेन अलः परस्य विधाविति पञ्चमीसमासपक्षेऽपि न स्थानिवत्त्वनिषेधप्राप्तिरिति वाच्यम्, स्थानि-वत्त्वनिषेधे शब्दतः पञ्चम्यन्तोपादानस्यानपेक्षितत्वेन परिक्षियमाणा-ल्विधित्वस्यात्र सत्त्वेन च निषेधे बाधकाभावात् ।

अत एव हल्ङ्याब्भ्य इति सूत्रे भाष्ये प्रथमहल्ग्रहणाभावे संयोगान्तलो-पेन सुलोपमाशङ्क्य तस्यासिद्धत्वाद्राजेत्यादौ संयोगान्तलोपस्यासिद्ध-त्वान्नलोपो न स्यादित्येव दूषणं दत्तम्, अन्यथा स्थानिवत्त्वेन द्यौरि-त्यादौ औकारस्य स्थानिवत्त्वेन संयोगान्तलोपप्राप्तिः किमिति नोद्भा-

CC0. Vasishtha Tripathi Collections. Digitized by eGangotri

वयेद्भाष्यकारः। अत एव च शेखरकृता चोरपेणेत्यत्र एकाज्उत्तरपदत्वाय अन्तादिवच्चेति सूत्रावश्यकत्वं प्रदर्शितम्, अन्यथा हल्त्वे अच्त्वे वा पञ्चम्यन्तादिपदप्रयोज्यविषयत्वस्याभावेनानल्विधावित्यस्याप्रवृत्त्या स्थानिवत्त्वेन संयोगसंज्ञायां सावपि पदमितिपक्षे चौरित्यत्र औकारस्य लोपापत्तिः चोरपेणेत्यस्य सिद्ध्या अन्तादिवच्चेत्यस्य व्यर्थत्वापत्तिश्च स्यात्।

नन्वेवमपि भूतार्थे ब्रह्मभ्रूणेति नियमेन उपपदान्तरे क्विपोऽप्रवृत्तावपि वर्तमानार्थे क्विप् चेति क्विपः सम्भवेन प्रकर्षेण हन्तीति प्रहा तस्माच्छसि प्रघ्न इत्यत्र सूत्रकृन्मते हन्तेरत्पूर्वस्येति णत्वं स्यादेव अह्नोपोन इत्यत्र हन्तेरत्पूर्वस्येत्यत्र च, इट ईटीत्यत्र विशिष्टस्येट्त्वस्येव विशिष्टस्यैवात्त्वस्याश्रयणेनानल्विधावितिनिषेधाप्रवृत्त्या स्थानिवद्भावेनात्पूर्वकत्वसंभवात्।

तदुक्तं शेखरे—शब्दतः स्थानिस्थान्यवयवान्यतराल्वृत्तिधर्मवतो विशेष्यतया विशेषणतया वा यत्राश्रयणं तत्र निषेध इति।

अतएव भोभगो सूत्रे अशूग्रहणाभावे देवाः सन्तीत्यत्र स्थानिवद्भावेन रुत्वाद्यत्वं स्यान्नह्ययमल्विधिः रोरिति समुदायरूपाश्रयणादित्युक्तं कौमुद्यामिति चेन्न।

शब्दतः अलाश्रयणे इत्यस्य अल्त्वव्याप्यधर्मघटितधर्माश्रयणे इत्यर्थेन प्रकृते अदित्यस्य तपरसूत्रेण ह्रस्वाकारत्वावच्छिन्ने संकेतिततया अत्त्वस्याल्त्वव्याप्यधर्मत्वेनाल्विधाविति निषेधप्रवृत्तौ वाधकाभावेन सूत्रकृन्मते प्रघ्न इत्यादौ हन्तेरत्पूर्वस्येति णत्वाप्राप्त्याऽदोषात् इट्पदं तु इट्त्वावच्छिन्नोपस्थापकमिति इट्त्वस्याल्त्वव्याप्यत्वाभावेन निषेधाप्रवृत्त्या अग्रहीदित्यस्य सिद्धिः। एवं रुत्वादिकमपि वोध्यम्।

न च भाष्ये आद्यन्तौ टकिताविव्यनेन टित आदौ कितोऽन्ते संकेतवोधनेन इः टः यस्येति समासे इट्त्वस्यापि अल्त्वव्याप्यधर्मघटितत्वमिति वाच्यम्, तादृशभाष्यस्यासिद्धान्तभूतत्वेनादोषात्।

न चानुवन्धविनिर्मुक्तस्यैव इडादिपदेनोपस्थितिः अनुवन्धविनिर्मुक्तपदार्थोपस्थितेः शेखरादावुक्तत्वात्। अत एव इदम इश् इत्यत्र श्रुप-

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

दस्य अणबोधकत्वेन सवर्णग्रहणमाशङ्क्याप्रत्यय इति निषेध इत्युक्तं भाष्यादाविति वाच्यम्,

इडादिपदेन इट्त्वेनैव अनुबन्धविनिर्मुक्तेकाराद्युपस्थितेरभ्युपेततया इट्त्वस्य अल्त्वव्याप्यधर्मत्वाभावेनानल्विधावित्यस्याप्रवृत्तेः अत्पदं तु ह्रस्वाकारत्वेनैवोपस्थापकमित्यदोषात् ।

नन्वेवमपि पञ्चमीसमासपक्षे अचःपरस्मिन्निति स्थानिवद्भावादेकाजुत्तरपदत्वसत्त्वेन वृत्रघ्न इत्यत्र 'एकाजुत्तरपदे णः' इति णत्वं दुर्वारम्, पूर्वत्रासिद्धे न स्थानिवदिति निषेधस्तु न, 'तस्य दोषः संयोगादिलोपलत्वणत्वेषु' इति परिभाषणादिति चेन्न ।

तथा सति व्यूढोरस्केन इत्यत्र विसर्गस्य अयोगवाहानामकारोपरिपाठेन अच्त्वादचः परस्मिन्निति स्थानिवत्त्वेन सकारस्याप्यच्त्वेन णत्वापत्तेः ।

यदि तत्रायोगवाहपाठस्य अनल्विधाविति स्थानिवत्त्वनिषेधसिद्धिफलकतया वार्तिककाराभिमतत्वेन तत्प्रामाण्यादनित्यत्वेनाचः परस्मिन्नित्यस्याप्रवृत्तिरित्युच्यते तदा कुव्यवाये हादेशेतिवार्तिकात्पूर्वग्रहणयोर्लक्ष्यसिद्धौ तुल्यफलतासूचकभाष्यप्रामाण्यादनित्यत्वेनैव अचः परस्मिन्नित्यस्य वृत्रघ्न इत्यादौ वारणसंभवात् ।

नचैवमपि 'कुमति च' इति सूत्रेणैव वृत्रघ्न इत्यत्र णत्वापत्तिर्दुर्वारेति वाच्यम्, नकारसंनिपातेन जातकुत्वस्य तन्नाशे निमित्तत्वायोगात् ।

नन्वेवं प्रघ्नन्तीत्यत्रापि अट्कुप्वाङित्येतत्साहकारेणैव हन्तेरित्यस्य प्राप्तेर्वक्तव्यतया तत्र च संनिपातपरिभाषाविरोधात् कवर्गव्यवधानस्यानिमित्ततया णत्वप्राप्त्या अत्पूर्वस्येत्यस्यवैयर्थ्यापत्तिरिति चेन्न—

अत्पूर्वस्येति सूत्रसामर्थ्यादट्कुप्वाङ्विषये सन्निपातपरिभाषाऽप्रवृत्तावपि कुमति चेति विषये तदप्रवृत्तौ मानाभावात् ।

न चाट्कुप्वाङिति सूत्रेणैव वृत्रघ्न इत्यत्र नित्यं णत्वं स्यादिति वाच्यम्, तस्य नियमार्थत्वेन स्वतन्त्रणत्वविधायकत्वायोगात् एवं च सूत्रकृन्मते वृत्रघ्न इत्यादौ प्रातिपदिकान्तेति वैकल्पिकं णत्वं स्यादेवेति ध्येयम् ।

इति सूत्ररत्नम् ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

## वार्तिकमते वैकल्पिकणत्वोपपादनम्

वार्तिककारमतेऽपि वृत्रघ्न इत्यत्र वैकल्पिकं णत्वं भवत्येव न तु नित्यं णत्वं नतरां वा वैकल्पिकं मित्यवधेयम्। तथाहि—

रषाभ्यामित्यस्य समानपदत्वाभावेन, पूर्वपदादित्यस्य संज्ञात्वाभावेन, अट्कुप्वाङित्यस्य नियमार्थत्वेन स्वतन्त्रविधायकत्वायोगेन, एकाजुत्तरपदत्वाभावेन एकाजुत्तरपदे ण इत्यस्य, संनिपातपरिभाषाविरोधेन कुमतिचेत्यस्य, चाप्राप्त्या नित्यणत्वाप्राप्तिः। एवं च प्रातिपादिकान्तेति वैकल्पिकं णत्वं स्यादेव।

न च 'कुव्यवाये हादेशे णत्वप्रतिषेधोवक्तव्य' इति वार्तिकेन वैकल्पिकणत्वनिषेधः स्यादिति वाच्यम्, अत्पूर्वस्येत्येतत्समानफलकेन तेन-वार्तिकेन हन्तेरित्यस्यैव निषेधस्वीकारात्।

न चैवं 'कुव्यवाये हादेशे णत्वप्रतिषेधो वक्तव्यः' किं प्रयोजनं वृत्रघ्नः सुग्घ्नः प्राघानीति भाष्यविरोधः आद्ययोर्हन्तेरित्यस्याप्राप्तेरिति वाच्यम्, सुग्घ्न शब्दे समानपदत्वाभावेन रषाभ्यामित्यस्य, गकारव्यवधानेन पूर्वपदादित्यस्य, प्रातिपदिकान्तत्वाभावेन प्रातिपदिकान्तेत्यस्य, चाप्राप्तिः, एवं कप्रत्ययान्तसुग्घ्नशब्दसाहचर्येण वृत्रघ्नशब्दोऽपि कप्रत्ययान्त एव न तु शसन्तः इति तत्रापि णत्वाप्राप्तिः। एवं च उदाहरणद्वयस्यान्यथासिद्धत्वात्तृतीयोदाहरणस्यैव वार्तिकफलत्वेन भाष्याभिप्रेतत्वमवगम्यते तदेतद्ध्वनयितुमत्पूर्वग्रहणं न कर्तव्यं भवतीत्युक्तं भ... उदाहरणद्वयस्यान्यथासिद्धत्वादेव सूत्रवार्तिकयोर्न फलभेदः, अ... सूत्रकृन्मते सुग्घ्नः वृत्रघ्न इत्यादौ णत्वेन वार्तिकमते च तद... फलभेदो दुरुद्धरः स्यात्। एवं च भाष्योदाहरणे कप्रत्ययान्तस्यैव... त्वेन तत्र णत्वस्यानिष्टत्वेपि हन्तेरित्येतन्मात्रनिषेधकेन अत्पूर्वस्येत्येतत्समानफलकेन वार्तिकेन च प्रातिपदिकान्तेति वैकल्पिकणत्वबाधकत्वायोगात् वार्तिकमतेपि वृत्रघ्नो वृत्रघ्ण इति वैकल्पिकं णत्वं भवत्येवेति बोध्यम्।

## दीक्षितोक्तणत्वाभावखण्डनम्

यत्तु वार्तिकस्य णत्वप्रकरणनिषेधकतेत्यभिमत्य कौमुदीकृता यो... विभागः प्रदर्शितः। यच्च वार्तिकार्थं योगविभागेन संगृह्य व्याचष्टे...

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

व्याख्यातृभिरवतारितं तदुभयमप्ययुक्तमेव भाष्ये योगविभागस्यानुपलम्भात् हन्तेरत्पूर्वस्येत्यत्र अत्पूर्वग्रहणं न कर्तव्यं भवतीति भाष्ये हन्तेरत्पूर्वस्येत्युक्त्या एकसूत्रत्वे एव स्वारस्यलाभाच्च । किं च अत्पूर्वस्य इत्यस्य पृथक्योगत्वे प्रकरणनियामकत्वोपपत्तये उपसर्गस्येत्यस्यासंबन्धकल्पने अग्रे च तत्संबन्धकल्पनेऽत्यन्तं गौरवात् । एवं च योगविभागसामर्थ्यादेकाजुत्तरपदे ण इति णत्वमपि निवर्त्यत इत्युक्तिरत्यन्तं युक्तिविहीना स्थानिवद्भावाप्राप्त्या एकाजुत्तरपदे इत्यस्याप्रवृत्तेश्चेत्यलम् ।

यत्तु अत्पूर्वग्रहणं हस्थानिककवर्गाभाववद्धन्तेरुपलक्षणम् तेन बहुवृत्रहाणीत्यत्र न दोष इति शेखरकारस्तन्न, वार्तिकस्य हन्तेरित्येतन्मात्रनिषेधकतया योगविभागस्य चासत्त्वेन 'एकाजुत्तरपदे णः' इतिणत्वस्य बहुवृत्रहाणीत्यत्र सूपपादत्वात् ।

यत्तु 'एकाजुत्तरपदे णः' इति णत्वमपि निवर्तते इति प्रतीकमादाय अपिना प्रातिपदिकान्तेत्यस्य कुमतिचेत्यस्य च संग्रहः, बाध्यसामान्यचिन्ताश्रयणात्सर्वणत्वबाध इत्युक्तं शेखरकृता । तदपि न योगविभागस्य भाष्यानुक्तत्वेन तत्सामर्थ्येन प्रातिपदिकान्तेति णत्वबाधायोगात् कुमतिचेत्यस्य सन्निपातपरिभाषया अप्रवृत्त्या तद्बाधकथनायोगाच्च योगविभागस्वीकारेऽपि अनन्तरस्येति न्यायबाधेन एकान्तरितस्य एकाजुत्तर ति वा णत्वस्य बाधे एव मूलस्वारस्येन बाध्यसामान्यचिन्ताश्रयणस्य मूलस्यविरोधाच्च अन्यथा स्वाधीन एव शब्दप्रयोगे प्रातिपदिकान्तेत्यपि स्य प्राप्तेब्रूयात् एवञ्च प्रातिपदिकान्तेति णत्वबाधो न मूलकृदभिमत इति स्यानि विभावनीयं सूरिभिः ।

अतन्वेवं मूलकृत्तात्पर्यवर्णने यत्तु वृत्रघ्ना वृत्रघ्ण इति वैकल्पिकं तावत् माधवेनोक्तमिति ग्रन्थस्य का गतिरिति चेत् किं कुर्म उत्तरग्रन्थान शब्दस्वारस्यविरोधादित्यलमसदावेशेन ।

वाच्यम् अथैवमपि प्रघनाघन इत्यत्र णत्वं कुतो न अत्पूर्वत्वस्य सत्वात् । न्मते मते तु हस्थानिककवर्गाभावान्न दोष इति चेन्न । घनाघनशब्दस्य येकतया तद्घटकधात्वर्थान्वयित्वाभावेन उपसर्गसंज्ञाविरहाण्णत्वाप्रात्यलम् ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

तस्माद्रूपद्वयं माधवोक्तं सम्यगेवेति प्राचीनानुयायिनः।

## आभीक्ष्ण्ये णमुल् च १३५

ननु स्मारं स्मारं नमति शिवम् स्मृत्वा स्मृत्वा नमति शिवम् इति रूपद्वय च ग्रहणाभावेऽपि वासरूपन्यायेन णमुला विकल्पेन उत्सर्गस्य समानकर्तृकयोः पूर्वकाल इति क्त्वाप्रत्ययस्य बाधात् सिद्धमिति क्त्वा-समुच्चयाय चग्रहणं व्यर्थमिति चेन्न।

प्रकृते वासरून्यायप्रवृत्तिस्वीकारे लडादीनामपि प्रवृत्त्यापत्या चग्रहणेन तदप्रवृत्तिस्वीकारात्।

न चेष्टापत्तिः। लडादिसमावेशार्थं क्रियमाणस्य 'विभाषाग्रेप्रथमपूर्वेषु क्त्वाणमुलौ' इति सूत्रस्थविभाषाग्रहणस्य वैयर्थ्यप्रसङ्गात्। एवं च विभाषाग्रहणेन णमुला सहैव क्त्वाप्रत्ययो यत्र विधीयते तत्र वासरूपविधिर्नेति ज्ञापनाद् आभीक्ष्ण्ये णमुल् चेत्यत्र लडाद्यप्रवृत्तिः। तत चकारेणैव क्त्वाप्रत्ययो लभ्यते। किं च वासरूपन्यायेन क्त्वालडाद्योः स्वीकारे न यद्यनाकांक्षे इति क्त्वाणमुलोरिव लटोऽपि निषेधापत्तिः सिद्धान्ते तु विशेषविहितयोः क्त्वाणमुलोरेव निषेधः न सामान्यविहितस्य लट इति यदयं भुङ्क्ते ततः पठतीति प्रयोगसिद्धिरित्यलम्।

## वैदिकप्रक्रियाया लौकिकप्रक्रियातो भेदहेतुकथनम् १३६

ननु रक्षोहागमलध्वसंदेहाः प्रयोजनमिति भाष्यात् 'ब्राह्मणेन नि[illegible] रणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च' इति श्रुतेश्च कृत्स्नस्यैव व्या[illegible] णस्य वैदिकशब्दसाधुत्वार्थं प्रवृत्ततया—

लोके पदपदार्थौ यौ न तौ वेदेऽथवात्र तौ।
रूपभेदात्पदं भिन्नमुत्तानादिभिदा स्फुटा॥
वर्णैकत्वात्पदैकत्वं काचित्की रूपभिन्नता।
प्रायिकेण पदैक्येन तदर्थैक्यं तथाविधम्॥

इति जैमिनीयन्यायमालोक्तरीत्या वैदिकशब्दानां लौकिकश[illegible] न्नतया च स्वरवैदिकप्रक्रिययोः लौकिकप्रक्रियातः पृथक्कृतेः क्व श्र[illegible] इति चेदुच्यते

लौकिकशब्देभ्यः आत्मना जहार देवाः देवैरित्यादिभ्यो भिन्न[illegible]

CC-0. Panini Kanya Maha Vidyalaya Collection. Digitized by eGangotri

त्मना जभार देवासः देवेभिरित्यादीनां वैदिकशब्दानां सत्त्वेन तन्मात्रव्युत्पादकवैदिकप्रक्रियायाः पृथक्करणम् । अत एव केषां शब्दानां लौकिकानां वैदिकानां चेति महाभाष्ये लौकिकेभ्यो भिन्नतयैव वैदिकान्व्याहरति भगवान्भाष्यकारः । स्वरस्तु लौकिकप्रयोगे काव्यादौ नाद्रियते इति तत्प्रक्रियाया अपि लौकिकप्रक्रियातः पृथक्करणमिति उपरितनोक्तन्यायमालास्थपद्याभ्यामपि प्रायिकेण पदैक्येनेत्यनेन लौकिकेभ्यो भिन्ना अपि वैदिकाः शब्दाः सन्तीति सूचितमित्यलम् ।

तयोर्य्वावचि संहितायाम् १३७

इदुतोर्यकारवकारौ स्तोऽचि संहितायामिति सूत्रार्थः । अग्ना३ याशा पटा३ वाशा अग्ना३ यिन्द्रम् पटा३ वुदकम् इत्युदाहरणानि ।

नन्विदं सूत्रं व्यर्थम् । अग्ना३ याशा इत्यादेरिकोयणचीति यणैव सिद्धेरिति चेन्न—

प्लुतप्रगृह्याः अचि नित्यमिति प्लुतस्य प्रकृतिभावविधानमनर्थकं सत् असति  ... 

एचोऽप्रगृह्यस्यादूराद्धूते पूर्वस्यार्धस्यादुत्तरस्येदुताविति सूत्रस्य त्रैपादिकत्वेन यणं प्रत्यसिद्धतया अग्ना३ याशा इत्यत्र इकारस्येकोयणचीति यणोऽप्राप्तेः ।

न च प्लुतस्यासिद्धत्वेन तस्य स्वरसंध्याश्रयविकाराप्राप्त्या प्लुतप्रगृह्या अचि नित्यमिति प्लुतस्य प्रकृतिभावविधानमनर्थकं सत् असति बके प्रमाणानां सामान्ये पक्षपात इति न्यायेन प्लुतप्रकरणे स्वकार्यं ति वात्रसंधिषु सिद्धमिति ज्ञापयति एवं च यणं प्रतीकारस्यासिद्धत्वान्न अग्ना३ याशा इत्यत्र यण्सिद्धिरिति वाच्यम्,

स्य प्राप्त्येवमपि अग्ना३ यिन्द्रम् पटा३ वुदकमित्यत्र इकोयणचीति बाधिस्थानिप्रसक्तमकः सवर्णे दीर्घ इति दीर्घं बाधित्वा इदुतोर्यकारवकारयोर्विध्य तयोर्य्वावचीत्यस्यावश्यकत्वात् । अग्ना३ याशा पटा३ वाशा तावपि इकोऽसवर्णे इति पाक्षिकह्रस्वबाधनार्थमावश्यकत्वाच्च ।

न च भोः शब्दस्य छान्दसः प्लुतस्ततः भो३ इ इन्द्र इत्यत्र इकारस्य निपातत्वेन प्रगृह्यतया यणोऽप्राप्त्या 'प्लुतपूर्वस्य यणादेशो वक्तव्यः रूपमते यिन्द्र इत्यर्थमिति' वार्तिकेन अग्ना३ याशा इत्यादौ शाकलह्रस्वस्य सवर्णदीर्घत्वस्य च बाधेनेष्टसिद्धिः । नहि भो३ यिन्द्र इत्यत्र-र्य्वावचीति सिद्धिः इकारस्य प्लुतविकारत्वाभावादिति वाच्यम्,

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

अग्ना ३ याशा इत्यादौ यवयोरसिद्धत्वादुदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्येति स्वराप्रवृत्त्यर्थं तयोर्व्यावचीत्यस्यावश्यकत्वात्, अन्यथा वार्तिकविहितयणः सिद्धतया यकारोत्तरवर्त्याकारस्य स्वरितत्वापत्तिरिति दिक्।

तदयमत्र संग्रहः।

किन्तु यणा भवतीह न सिद्धं य्वाविदुतोर्यदयं विदधाति।
तौ च मम स्वरसन्धिषु सिद्धौ शाकलदीर्घविधी तु निवर्त्यौ ॥१॥
इक् च यदा भवति प्लुतपूर्वस्तस्य यणं विदधात्यपवादम्।
तेन तयोश्च न शाकलदीर्घौ यणूस्वरबाधनमेव तु हेतुः ॥ २ ॥

## अनुदात्तं पदमेकवर्जम् १३८

परिभाषेयं स्वरविधिविषयेति। नेदं संज्ञासूत्रम् संज्ञाविधायकसूत्राणां प्रायः प्रथमाध्याये पाठदर्शनेनास्यातथात्वात् संज्ञासंज्ञिभावस्य प्रतीतेश्च।

नापि विधिसूत्रम्। तथा सति क एको वर्जनीय इत्यस्याप्रतीत्यापत्तौ विनिगमनाविरहात् तत्तच्छास्त्रविहितोदात्तस्वरितकानां सर्वेषामेव वर्जनापत्तौ आमलकीज इत्यत्र उदात्तचतुष्टयश्रवणापत्तेः, तत्र हि ङीप्प्रत्ययस्वरेण डस्य कृत्स्वरेण उदात्तत्वम् दीर्घकाशतुषभ्राष्ट्रवटं जे' इति पूर्वपदान्तोदात्तत्वम् 'अन्त्यात्पूर्वं बह्वच' इति लकाराकारस्योदात्तत्वम् इति युगपदुदात्तचतुष्टं श्रूयेत अस्य तु मकाराकारोऽवकाशः स्यात्।

नापि नियमसूत्रम् अनुदात्तत्वस्य केनाप्यप्राप्तः,

नाप्यतिदेशसूत्रं वतिघटितत्वाभावात्,

नाप्यधिकारसूत्रम् अस्वरितत्वात् तत्तत्सूत्रविधेयानां वचनसामर्थ्यादेव निघाताप्रवृत्तौ एकवर्जमित्यस्य वैयर्थ्यापत्तेश्च। आद्युदात्तः समानोदरे शयित ओ चोदात्त इत्यादीनामसंग्रहापत्तेश्च इति परिशेषात्परिभाषासूत्रमिति स्थितम्।

## सति शिष्टस्वरबलीयस्त्वमन्यत्रविकरणेभ्यः १३९

यो हि यस्मिन्सति शिष्यते स सति शिष्टः तस्य बाधको भवति

CC-0 Vasishtha Tripathi Collection. Digitized by eGangotri

एतच्च सति शिष्टस्य बाधकत्वं न्यायसिद्धम् । तथा हि—कार्यकालपक्षे उदात्तस्वरितविधिभिरेकवाक्यतापन्नया 'अनुदात्तं पदमेकवर्जम्' इति परिभाषया शेषनिघातः क्रियते तत्रोत्सर्गस्य अपवादस्य वा या चरमा प्राप्तिस्तदेकवाक्यतापन्नया अनया पूर्वा प्रवृत्तिर्बाध्यते इति औपगवत्वमित्यत्र अण्प्रत्यये त्वप्रत्यये च 'आद्युदात्तश्च' इति प्रवर्तमानं स्वस्यैव पूर्वां प्रवृत्तिं बाधते इति द्वितीयप्रवृत्त्या लक्ष्यं परिनिष्ठापयति ।

ननु अनुदात्तं पदमेकवर्जमिति परिभाषायां कार्यकालपक्षाङ्गीकारे त्रिपाद्यामपि प्रवृत्त्यापत्तौ खलप्व्याशा इत्यत्र उदात्तस्वरितयोर्यण इति यकारोत्तराकारस्य स्वरितत्वेऽनयाशेषनिघातापत्तिः ।

यतोऽनाव इत्यस्य वैयर्थ्यापत्तिश्च, न च काम्या इत्यादौ 'यतोऽनाव' इत्याद्युदात्ते कृते शेषनिघाते 'उदात्तादनुदात्तस्य स्वरित' इति पश्चोक्ते शेषनिघाते तित्वप्रयुक्तस्वरितादविशेषाद्यतोऽनाव इत्यस्य पादिवैयर्थ्यापत्त्या तित्स्वरितमित्यस्य वैयर्थ्यापत्त्या च अनुदात्तं पदमेकवर्जणाचीत्यस्या कार्यकालपक्षेऽपि न त्रिपाद्यां प्रवृत्तिरिति यथोद्देशपक्ष एव न कृतपरिभाषायामिति वा ज्ञाप्यते इति दण्डधृक् युक्तमिति वाच्यम्,

सन्निपातपरिभाषया 'उदात्तादनुदात्तस्य स्वरित' इति विघ्ने शेषघातप्रवृत्त्या तयोश्चारितार्थ्येन प्रकृतपरिभाषास्त्रिपाद्यामप्रवृत्तौ यथोपक्षे वा मानत्वायोगात् 'कर्तव्यं तत्र, कर्तव्यं क्व, कण्ठ्यः क्व, कणस्तत्र, इत्यादौ नोदात्तस्वरितोदयमिति 'उदात्तादनुदात्तस्य स्वरित' स्य निषेधविषये तव्यतस्तित्वस्य यतोऽनाव इत्यस्य च चारितार्थ्यं चेति चेन्न—

इकोऽसवर्णेयानुसारेण अनुदात्तं पदमित्यत्र अधिककार्यार्थस्वरितत्वप्रतिच भो त्रिपाद्यामप्रवृत्तिकल्पनेन खलप्व्याशा इत्यादावस्या अप्रवृत्तेरदोषात् निपातत्वेऽयुक्तं यथोद्देशत्वं त्वस्या न युक्तम्- अत्रैव सूत्रे कार्यकालं संज्ञापयिन्द्र इषमिति भाष्यविरोधात् ।

य सवर्णे अन्यत्र विकरणेभ्य इत्यत्रमानं तु तस्यानुदात्तेदिति तासेः परस्य र्वाचर्चीसार्वधातुकस्यानुदात्तविधानं तथाहि यद्यपि लावस्थायां तासिविधी-
ते तथापि लसार्वधातुकानुदात्तत्वेन [illegible] लादेशेषु कृतेषु पश्चा-

CC-0. [illegible] Collection. Digitized by eGangotri

